# अभिधर्मकोशः

आचार्य-वसुबंधु-प्रणीतः ।

"महापंडित"-"त्रिपिटकाचार्य"-श्रीराहुल-सांकृ-
त्यायन-विरचितया नालन्दिकाभिधया
टीकया परिशिष्टादिना
च सहितः ।

वाराणस्यां

काशी-विद्यापीठेन प्रकाशितः ।

१६८८

प्रमथ्य चीन-पोङ्भाषामयं क्षीरमहार्णवम् ।
येनोद्धृतं कोशरत्नं तस्मै श्रीपूषिणेऽर्पये ॥

# संज्ञापनम् ।

सभाष्योऽभिधर्मकोशो ह्यून्-चाङ्-कर्तृकात् चीनभाषान्तरात् बेल्ज-देशोद्भवेन पंडितरत्नेन पूषिणा ( Louis de La Vallèe Poussin ) बेल्जीय-प्राच्याध्ययन-परिषत् (sociètè Belge D'Etudes Orientales )-साहाय्येन फ्रांस-भाषया प्रकाशितः। तत्र तेन पादटिप्पणीषु समधिक-पंचशतकारिकाः संस्कृते, हस्तलिखितग्रन्थतः भाष्यटीका-स्फुटार्थोद्धरणतः, चीन-त्रिपोद्भाषासमाश्रयतश्च सम्पादिताः। अवशिष्टास्तु कारिका मया फ्रांसभाषान्तरसाहाय्येन समुद्धृताः। तत्र मया समुद्धृताः कारिकाः चापबन्धनीषु पृथक् सूचिताः; पूषिणा भाषान्तरसाहाय्येन समुद्धृताः चतुष्कोणबन्धनीषु [ ]; स्फुटार्थासाहाय्येन च चाप-बन्धनीषु ( )। अवशिष्टा बन्धनीविनिर्मुक्ताः। एवं सर्वा एव कारिकाः संस्कृतगिराऽत्र सन्निवेशिताः। अर्थगाम्भीर्यं अभिधर्मकोशस्य स्फुटम्। अत्र हि सर्वमपि त्रिपिटक-हृदयं संपिण्ड्य स्थापितं आचार्येण ऊन षट्शत-कारिकासु। तदवबोधार्थं मया भाष्याश्रयेण कारिका अनुसरन्ती लघ्वी नालन्दिका-विवृतिर्व्यरचि; प्रतिकोशस्थानं प्रतिपाद्य चित्रमपि सन्नि-वेशितम्। अन्ते सन्निवेशितपारिभाषिकशब्दसूचीतो बौद्धपारिभाषिक-शब्दानां परिचयो दर्शनान्तरावगाहिनामपि सुगमः। लंकातोऽचिर-प्रस्थातुकामेन सार्द्धमासद्वय एवेदं सर्वं समापनीयं अभूदिति बहुषु स्थानेष्वनिष्ठितकृत्योहम्। जम्बूद्वीपे (=भारते) समागत्यापि तादृश्येव त्वरा पोद् ( Tibet )-गमनार्थं, एवमत्राऽपि किमपि संस्कर्त्तुमक्षमः।

काशीविद्यापीठाध्यक्षाणां आचार्याणां नरेन्द्रदेवानां अस्य प्रकाशने महत् साहाय्यम्। लंकाप्रोषितस्य मदन्तरंगमित्रस्य कौसल्यायनेरानन्द-स्यापि साहाय्यं नाकिंचित्करम्। काशीविद्यापीठश्च प्रकाशने चरम-सहायकः। इति त्रयाणां कृतवेद्यहम्।

वाराणस्यां—
पौषशुक्लैकादश्यां १९८५ विक्रमाब्दे

राहुलः सांकृत्यायनः।

# विषय-सूची



---


मुद्रक

माधव विष्णु पराड़कर

ज्ञानमण्डल यन्त्रालय, काशी ।

# भूमिका ।

५०५ विक्रमपूर्ववत्सरे प्राचीनकोसलजनपदैकदेशे शाक्यानां गणे गणसभासदामेकतमस्य शाक्यशुद्धोदनस्य भार्यायां मायादेव्यां कपिलवस्तु[1] नगरान्नातिदूरे लुम्बिनी[2] नामधेय उद्याने वैशाखपूर्णिमायां कश्चिद् शिशुः समजनि । प्रसवानन्तरं सप्ताहेनास्य माता कालं गता । अयं च सिद्धार्थनामा कुमारः क्रमेण गणकुमारोचित-विद्यादिषु निपुणः तरुण-परिणीतः यावदेकोनविंशतिवर्षान् (४७७ विक्रमपूर्व०) गृह एव आढ्य-जन-जीवनमनुजीवन् उवास । बाल्यात्प्रभृत्येवाऽस्यासीद् विषयेष्ववहु-मानम् । पुत्रोत्पत्त्यनंतर च नासौ शशाक गृहे वस्तुम् । अभिनिष्क्रम्य षड् वर्षान् मगधेषु उग्रं तपः सन्तप्य, तदसारतां विभाव्य, आहार-त्याग-जनित-नैर्बल्य-दूरीकरणायाहारमुपाजहार । प्रकृतिस्थश्चासौ ४७१ विक्रम-पूर्ववत्सरे बोधिमण्डे उरुवेल-ग्रामे[3] नातिदूरं गयाया वैशाखपूर्णिमायां चतुरार्यसत्यानि साक्षात्कृत्य; बुद्धपदलांछनः तस्य अमृतमार्गस्याधिका-रिणं अन्विष्यन् उपवाराणसि ऋषिपतन-मृगदाव (= सारनाथ) नामके तपोवने जगाम । तत्र च आषाढपूर्णिमायां कौंडिन्यप्रभृतीन् पंच पंच-वर्गीयान् भिक्षून् अभिमुखीकृत्य धर्मचक्रं प्रवर्त्त्य, तत्रैव प्रावृषं निनाय । प्रवर्तित-धर्मचक्रः पंचचत्त्वारिंशत् वर्षान् पूर्वस्यां कजंगल[4] निगमात् प्रती-च्यां यावत् स्थाण्वीश्वरं[5] (सरस्वत्या नातिदूरं), उत्तरस्यां हिमवत उषी-रध्वजगिरेः (हरद्वारासन्नात्) यावद्विन्ध्यगिरिं विस्तृते मध्यमण्डले विहरन्, अधिकारि-जनान् स्वीयैहिकामुष्मिक-फलप्रदाभिः उपदेश-सुधाधाराभिः प्लावयन्, अशीतिवार्षिकः कोसलान्तःपाति-मल्ल-गणतंत्र-राजधानीं कुशीनगरं[6] निकषा शालयुग्मान्तराले विरचित-सिंह-शय्यः शिष्यानुचरवृन्दं अपारशोकपारावारे निक्षिप्य ४२६ विक्रमपूर्ववत्सरे वैशाखपूर्णिमायां वात्या प्रदीप इव स भुवन-प्रदीपो निर्ववौ ।

---

१. तिलौरा कोटः, तौलिहवासमीपे नयपाल-राज्ये । २. रुम्मिनदेई, भगवानपुरासन्ने नयपालराज्ये । ३. बुद्धगया, गयायां आसन्ने । ४. कंकजोलः, संथालपर्गनामण्डले विहार-प्रदेशे । ५. थानेश्वरः, कर्नालमण्डले । ६. कसया, गोरखपुरमण्डले ।

तस्य भगवतो निर्वाणात्प्रागेव प्रधान-शिष्यौ सारि(=शारद्वती)-पुत्र-मौद्गल्यायनौ निर्वृतिं अधिजग्मतुः । शेषेषु प्रधानेन अनुबुद्धेन महाकाश्यपस्थविरेण आनन्दोपालितृतीयेन मगधराजधानीं राजगृहं उपसमेत्य, शास्त्रुपदिष्टधर्माणां अनाकुलीभावाय चिरस्थितीकरणाय च महती परिषत् समाकारिता । तत्र वैभारगिरि-प्रान्तवर्तिन्यां सप्तपर्णिगुहायां मगधाधिराजेनाजातशत्रुणा उपचरिताः तस्मिन्नेवाब्दे वर्षाया द्वितीयमासस्य द्वितीयदिने (भाद्रकृष्ण-द्वितीयायां) सन्निपत्त्य महाकाश्यप-प्राधान्ये विद्यावयोवृद्धाः पंचशत-वीतरागा बुद्ध-श्रावका धर्मान् संगृहीतुं आरेभिरे । बुद्ध-काल एव ब्राह्मणैर्मंत्रा इव, शिष्यैस्तत्र तत्रोच्यमाना बुद्ध-देशनाः स्मृतिपथमानीयंते स्म । छाया इव भगवतोऽनुगन्तुरायुष्मत आनन्दस्य प्रामाण्यं धर्मेषु नितरां स्फुटं इति, स एव धर्माणां संग्रहकाले प्रधानपदमलंचकार । इत्थं पंचशतभिक्षुभिः स्वस्वस्मृतिपथमागताः सूत्राभिधेया धर्माः संगीताः । अयमेव संग्रहः सूत्रपिटकनाम्ना प्रसिद्धिं जगाम । परिनिष्ठिते सूत्रपिटकसंग्रहे, विनयधर-प्रमुखस्य नापितकुलोत्पन्नस्य उपालिस्थविरस्य प्राधान्ये शीलाचारसंपुटिताकाराः भिक्षुभिक्षुणीनां विनयाऽपरपर्याः पाराजिका-संघादिशेषादयो नियमा अपि संगीताः । इत्थं सप्तभिर्मासैः तैः पंचशत-स्थविरैः धर्म-विनय-संग्राहिणी प्रथमसंगीतिः परिसमापिता ।

बुद्धजन्मतः प्राग् उत्तरे भारते कोसल-राज्यस्यैव प्राधान्यमभूत् । तस्मिन् कालेऽपि गंगा-हिमवद्-गण्डकी[1]परिवेष्टितः स्फीतो देशः काशि[2]-कोसल[3]-मल्ल[4]-पाठोत्तर[5]-पंचाल[6]-परिगर्भितः कोसल-राज्यान्तरगत एव समभूत् । परं मगधानां शक्तिः ततः प्रभृति वर्द्धितुं आरभत । बिम्बसारेणैव अंगाः[7] स्वायत्तीकृताः, तत्पुत्रेणाजातशत्रुणा वृजीनां[8] बलशालि वैशालिगणतंत्रं[9] ४२३ विक्रमपूर्वाब्दे हस्तेकृत्य भावि-मगध-साम्राज्यस्य

---

१. प्राचीना मही । २. बनारस-गाजीपुरा-ऽऽजमगढ़-जौनपुर-मिर्जापुर-मंडलानां अंशाः । ३. फैजाबाद-गोंडा-बहराइच-सुल्तापुर-बाराबंकी-बस्ती-गोरखपुर-मंडलानां अंशाः । ४. गोरखपुर-सारनमण्डले । ५. कोसल-राज्य-पश्चिम-दिशा-भागे । ६. रुहेलखण्डोपप्रदेशः । ७. मुँगेर-भागलपुर-मंडले । ८. मुजफ्फरपुर-चम्पारन-मण्डले । ९. बसाढः, मुजफ्फरपुर-मंडले ।

पंथा प्रशस्तो व्यधायि। कोसलराजस्य प्रसेनजितो मरणानन्तरं, नातिचिरेण विनष्टे तत्पुत्रे विरूढके कोसलराज्यमपि मगध[1]-सिंहासनाधीनं जगाम। इत्थं अजातशत्रोः प्रशान्तशासने मध्यदेशे बौद्धधर्मोऽपि प्रससार।

"प्रागुदंचं विभजते हंसः क्षीरोदके यथा।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती॥" (काशिका)

अत्र हि प्राग्देशः सरस्वत्यपरनामधेयायाः शरावत्या नद्या पूर्वकूलत एव अभिमतः। मनुस्तु— "प्रत्यगेव प्रयागाच्च"

इत्युक्त्वा मध्यदेशसीमां प्रयागं स्वीकरोति। बौद्धग्रन्थेषु हि पूर्वसीमा इदानीं कंकजोलेति प्रसिद्धः पुरातन-कजंगल-निगमः मध्य-मंडलमपि पूर्व-पश्चिमभेदेन द्विधा विभक्तः, ययोः सीमा प्रयाग-समीप एवासीदिति मन्ये। बुद्ध-परिनिर्वाण-शतवर्षाभ्यन्तर एव प्राचीन-प्रदेशे धर्मे मलं प्रादुर्बभूव। अथ कदाचित् यशोनाम विद्याचरण-सम्पन्नः शाक्यभिक्षुः वृज्जीषु भ्रमन् वैशाल्युपकण्ठं सुगताध्युषितं महावन-कूटागारारामं जगाम। तत्र च विनयविरुद्धानि रजतग्रहणादीनि दशावद्यानि[2] समुदाचरतो भिक्षून् दृष्ट्वा, जात-खेदः शासन-मलं उन्मार्जयितुं एकाकी अक्षमः, प्राक्षु पक्षं अलभमानः, कौशाम्बीं[3] जगाम। ततश्च पावयेकानां अवन्ति[4]-दक्षिणापथकानां समीपे शासनं प्राहिणोत्, स्वयं च गुणगौरवमहान्तं सम्भूतं शाणवासिनं उपस्तम्भं गृहीतुं अहोगंगपर्वतं उपरिगंगमव्राजीत्। तत्रैव षष्टिपावेयकाः अशीत्यावन्त्यदक्षिणापथका अपि भिक्षवः समागताः। अधिगत्य शाणवासिनं अनुकूलं, सर्वसम्मत्या महास्थविरं रेवतं परिगृहीतुं सौरेयं[5] प्रस्थिताः, ततोऽग्रयायिनं तं प्राक्षिप्रव्रजिभिक्षुमंत्रणं रेवतं सहजात्यां[6] आत्मशात्कृत्य, क्रमेण बहुशतभिक्षुपरिवृतास्ते वैशाल्यां

---

१. गया-पटनामण्डले। २. "(१) सिंगिलोणकप्पो"...। "(२) द्वंगुलाय छायाय वीतिवत्ताय विकाले भोजनं...। (३)...गामन्तरकप्पं...इदानि गामन्तरं गमिस्सामीति भुत्ताविना पवारितेन अनतिरित्तं भोजनं भुंजितुन्ति। (४)...आवासकप्पो..."। (५) "अनुमतिकप्पो"। (६) "आचिण्णकप्पो" (७) "अमथितकप्पो। (८) छलोगी। (९) "अदसकं निसीदनं (१०) जातरूपरजतं। (चुल्लवग्गो १२)। ३. कोसम्, इलाहाबादमंडले। ४. मालवाः। ५. सोरों जिला—एटा। ६. उपयमुनं भीटा, इलाहाबादमंडले।

गताः । तत्र च बालुकारामे दशवस्तु-प्रतिक्षेपपुरस्सरं पुनरपि सप्तशतैः गुणत्रयोवृद्धैः वीतरागैर्भिक्षुभिः अष्टभिर्मासैः बुद्ध-परिनिर्वाणस्य शततमे वत्सरे ( ३२६ विक्रमपूर्वाब्दे ) धर्म-विनय-संगायनं परिसमापितम्, इयमेव द्वितीया संगीतिः । विनयपरिशोधनमेव प्राधान्येनाऽस्य विषयः ।

संघ-प्रतिक्षिप्ताश्च ते वैशालिका भिक्षवः प्राक्षु असहायाः कौशाम्ब्यां दशसहस्रभिक्षु-महासंघ-परिवृताः पृथगेव स्वीयां महासंगीतिं विदधुः । ततः प्रभृति शाक्यभिक्षुषु पक्षद्वयं जातम् । तत्र धर्म-विनयान् ऐकान्त्येनानुगताः स्थविरा बभूवुः, अन्ये च महासांघिकाः । एतदनुगमेन प्रतीयते, प्राक्षूद्भूतस्य मलस्य संशोधनं पावेयका( पाश्चात्य )-ऽऽवन्त्य-भिक्षूणां साहाय्येनैव समजनि, एवं न केवलं द्वितीय-संगीतौ तत्संगृहीत बौद्ध-पिटकेऽपि पावेयका-ऽऽवन्त्यदक्षिणापथकानां भिक्षूणां कियान् प्रभाव इति सम्यगनुमातुं शक्यम् ।

द्वितीयसङ्गीतिकालतः ( ३२६ विक्रमपूर्वाब्दतः ) अग्रे वर्षशते अन्योऽन्यं भिन्नाः अष्टादश निकाया जाताः । 'दीपवंसा'नुसारतस्ते—



काश्यपीयाः
|
संक्रान्तिकाः
|
सौत्रान्तिकाः



वसुमित्रप्रणीताऽष्टादशनिकायतस्तु[1]—

- बौद्धसंघः
  - १ महासांघिकाः
    - २ एकव्यवहारिकाः
    - ३ लोकोत्तरवादिनः
    - ४ गोकुलिकाः
    - शि. चि. लुन् (= प्रज्ञप्तिवादाः ?)
    - ६ चेतियाः
  - १ स्थविराः
    - २ हैमवताः
    - ३ सर्वास्तिवादिनः
      - ९ महीशासकाः
        - १० धर्मगुप्ताः
      - ११ काश्यपीयाः
      - १२ सौत्रान्तिकाः
    - ४ वात्सीपुत्रीयाः
      - ५ धर्मोत्तरीयाः
      - ६ भद्रयानीयाः
      - ७ सम्मितीयाः
      - ८ षाण्णागरिकाः (= धर्मगुप्ताः)

एवंगतेषु कालेषु धर्माशोककाले पुनरपि शासनविप्लवः समारब्धः; तत्परिशोधार्थं २०८ विक्रमपूर्वाब्दे मौद्गलिपुत्र-तिष्य-प्रमुखानां सहस्रसंख्याकानां स्थविराणां पाटलिपुत्र-नगरे अशोक-निर्मितेऽभिनवेऽशोकारामे पुनरपि महान् सन्निपातः समजनि। इयं तृतीया संगीतिः[2] माघा-

१. I. A. 1880. S. Beal, P. 301. २. दीपवंसे।

रम्भत आश्विना-पूर्णिमां यावन्नवभिर्मासैः परिसमापिता। अत्रैव सर्वास्तिवादप्रभृतीनां एकादशानां अन्येषां स्थविर-वादानुयायिनां स्थविर-निकायतः पृथक्-करणम्। प्रतिक्षिप्ताश्च ते नालन्दायां[१] समागमन्। मौर्याणां पतनकालेऽब्राह्मण-धर्म-द्वेषिभिः महाभाष्यकार-पतंजलि-पुरष्कर्तृभिः शुंगैरपक्रियमाणा अन्य इव स्थविराः अपि विक्रमपूर्वप्रथम-शतके मगधदेशं परिजहुः। तत्र स्थविरवादिनां प्रधानं स्थानं किंचित्कालं उपविदिशं चैत्यपर्वतः (साँची) समजायत। ततश्च क्रमशोऽवन्तिदक्षिणा-पथ-लाटा[२]-ऽपरान्त[३]-महाराष्ट्रा-ऽन्ध्रमुखेन[४] परिहृस्यमानः सोऽयं स्थविर-वादः ताम्रपर्णि (=सिंहल)-द्वीपे[५] शरणं लेभे, यत्र धर्माशोकतनयो महामहेन्द्रः १९० विक्रमपूर्वाब्दे धर्मबीजं मूलबद्धं चकार। ताम्रपर्णित एव स्थविरवादो ब्रह्म-श्याम-कम्बोज-देशेषु वितस्तार, इदानीमपि च वरीवर्ति।

## अभिधर्मकोशः।

"काश्मीर-वैभाषिक-नीतिसिद्धः, प्रायो मयायं कथितोऽभिधर्मः" (८ : ४०) इति वाक्येन ज्ञायत एवास्य ग्रंथस्य काश्मीर-वैभाषिकानुगत्त्वम्। तत्र कथमयं वैभाषिकवादः, तत्राऽपि किमिदं काश्मीर-वैभाषिक-मतम्? अन्यत्राचार्यः सर्वास्तिवादं विविनक्ति—"तदस्तिवादात् सर्वास्ति-वादी मतः (५ : २५) तत्र (५ : २६) च अवस्थान्यथात्व-वाद-मपि साधुत्वेन स्वीकरोति, तेन वैभाषिक-वादः सर्वास्तिवादान्तर्गत इति स्वयमनुमातुं शक्यते। विशेषस्तूच्यते। द्वितीय-संगीतावपि पावेयकानां आवन्त्यदक्षिणापथकानां च प्राधान्यमभूदित्युक्तपूर्वम्। तृतीय-संगीति-प्रतिक्षिप्तानां नालन्दायां समागमोऽपि कथितः। मगधदेशे सर्वास्ति-वादादीनां तृतीय-संगीति-बहिष्कृत-स्थविरवाद-निकायानां नालन्दैव मन्ये प्रधानस्थानं समजनि। शुंगानां काले पाटलिपुत्रे ऽब्राह्मण-सम्प्रदायस्य

---

१. निकायसंग्रहे। २. पूर्व-गुजरात-प्रदेशः। ३. ठाणा-सूरतमंडले। ४. कृष्णा-गोदावर्युपत्यका। ५. La Legende DeL'Empereur Acoka, P. 73 (J. Przyluski)

स्थितिः कठिनेति सर्वास्तिवादिभिः मथुरा-प्रदेशे नटभटीय[१]विहारः प्रधान-पीठत्वेन स्वीकृतः । पालित्रिपिटके मथुरायां गुन्दवनं प्रसिद्धं, यत्र तथागतस्य प्रधानशिष्येषु चतुर्थो महाकात्यायनोऽसकृदुवास । तथापि शुंगकालीन-सर्वास्तिवादिनां प्रधानं स्थानं नटभटीय-विहार एवाभूत् । अस्य विहारस्य स्थापना-विषये माथुर-सर्वास्तिवादीय-निकायस्य ग्रंथेऽशोकावदाने काचित् कथा[२]ऽस्ति । शाणवासस्थविरः (=सम्भूतशाणवासी) तत्स्थान-माहात्म्यापादिकां भगवत उक्तिं उपश्रुत्य नट-भटयोर्द्वयोर्भ्रात्रोर्गृहं जगाम । शाणवासाज्ञया तयोरेव मूल्येन उरुमुण्डपर्वते सम्पादितः संघारामः कालान्तरे नटभटीय-विहारनाम्नैव प्रसिद्धिं गतः । शुंगानां कालतः प्रस्थाय यावत्कुषाणाभ्युदयं अयमेव सर्वास्तिवादिनां प्रधानं स्थानम् । स्थविरनिकायवत् सर्वास्तिवादिनां-सूत्रविनयादिकं देशभाषयैव स्मर्यमाणमभूत् । शुंगानां काले ब्राह्मणेषु पुनः नूतना जागृतिः, तेन राज्याश्रयतः संस्कृत-भाषाया अपि भाग्योदयः समारभत । पतंजलिना तस्मिन्नेव काले महाभाष्यं विरचितम् । गृह्य-धर्म-श्रौतसूत्राणामप्यनेकेषां रचनाकालः स एव; भारतस्यापि संस्करणं तदैव । क्रमेण संस्कृत-लिखित-ग्रन्थानामेव सम्मानं भूयस्त्वेन दृष्ट्वा माथुरैः सर्वास्तिवादिभिरपि संस्कृत-भाषा-व्यवहारः प्रारब्धः; कात्यायनी-पुत्रविरचितं सर्वास्तिवादस्य प्रधानं पुस्तकं ज्ञानप्रस्थानं प्रथमं बौद्ध-संस्कृत-पुस्तकमिति केषांचिन्मतम् ।

विक्रम-द्वितीय-शतकान्ते कुषाणानां उदग्भारते प्रभुत्त्वम् । ततः प्रागपि शकानां यवनानां च काले मथुरा तेषां क्षत्रपानां राजधानी । शुंगानां कालेऽपीदं असाधारणं नगरम् । खारवेलप्रताडितः पुष्यमित्रः प्रपलाय्य अत्रैव शरणं जग्राह । कुषाणैः देवपुत्र-[३]विहारोऽत्र स्थापितः । एवं समृद्धिशालिमथुरानगरोपकण्ठवर्तिनोऽस्य विहारस्याऽपि महानुत्कर्षः ।

माथुर[४]सर्वास्तिवादपरंपरा चाशोकावदाने—

---

१. La Legende. P. 96. २. La Legende P. 346. ३. Epigraphica Ind. Vol. X. P. 113. ४. La Legende. P. 53




स्थविरनिकाय-परम्परा[1] तु—




मथुरायां वैश्यकुलोत्पन्न उपगुप्तो हि शाणवासस्य प्रधान-शिष्यः। सर्वास्तिवादिन एनमेव अशोकस्य गुरुं प्रख्यापयन्ति; स्थविरास्तु मौद्गलिपुत्रतिष्यम् । तृतीयसङ्गीत्यन्ते मौद्गलिपुत्रतिष्येण तत्कालीनानां स्थविरवादविरुद्धानां निकायानां सिद्धान्ताः 'कथावत्थु'-प्रकरणे निराकृताः; यत्र सर्वास्तिवादोऽप्येकः निराकृतेषु । उपगुप्तमौद्गलिपुत्रौ भिन्नावित्यत्र नास्ति सन्देहलेशः, परं उभयोः कतरोऽशोक-गुरुः इत्यत्र स्थविरवादिनामेव पक्षो बलीयान् दृश्यते । उपविदिशं अधुना साँचीनाम्ना प्रसिद्धे स्थाने मौर्यकालीनस्तूपभागेऽपि महामौद्गल्यायन-शारिपुत्रयोरिव सत्पुरुष-

1. विनयपिटके परिवारे, अट्ठपाराजिका ।

मौद्गलिपुत्रस्यनाम्नोत्कीर्णोऽस्थिकरण्डकोऽपि तमेवार्थं द्रढयति[१]। परम्परायां सार्द्धद्विशतवत्सरेषु आनन्द-शाणवासोपगुप्तानां त्रयाणामेवावस्थितिः तस्याः शंकास्पदतां आविष्करोति । द्वितीय-संगीतौ संभूत-शाणवासी प्रधानानामन्यतमः, तस्याऽपि नाम नटभटीयारामेण इत्थमेव योजितम् । एवं शुंगकालात् ( विक्रपूर्वप्रथमशतकारम्भात् ) प्रभृति कुषाणागमनं ( विक्रम-द्वितीयशतकं ) यावत् सार्द्धद्विशतवत्सरेषु माथुरसर्वास्तिवादस्य प्राधान्यमभूत ।

अशोककाल एव काश्मीर-गन्धारेषु धर्म-प्रसारार्थं प्रेषितो माध्यमिक-स्थविरः । चैत्यगिरौ ( साँची ) अस्याप्युपलब्ध उत्कीर्णोऽस्थिकरण्डकः । काश्मीर-गन्धारेषु कदा स्थविर-वादः सर्वास्तिवादे परिणत इतीदं निश्चेतुं दुःशकं, तथाऽपि कुषाणकाले सर्वास्तिवादिनामेव तत्र प्राधान्यमुपलभ्यते । कुषाणवंशजः सम्राट् कनिष्कः सर्वास्तिवादस्य कृतेऽशोक इव समजनि । मथुरायामपि तेन विहारः कारितः । तक्षशिलायां[२] उपलब्धे सुगतास्थिकरण्डकेऽपि सर्वास्तिवादिनां आचार्याणां परिग्रहणमुत्कीर्णम् । कुषाणानां हि राजधानी पुरुषपुर ( = पेशावर )-नगरं गंधारेषु । ततः प्रागपि गन्धारशाखिणः काश्मीरशाखिण इति सर्वास्तिवादिषु द्वौ भेदौ । कनिष्क-संरक्षणे वसुमित्रस्य प्राधान्ये कविकुलगुरुमार्गदर्शकस्य दार्शनिकशिरोमणेरश्वघोषस्य साहाय्येन पंचशतानां वीतरागाणां महती परिषत् संगता । तत्रैव सर्वास्तिवादाभिधर्मपिटकान्तर्गतस्य ज्ञानप्रस्थानस्य ( महा )विभाषा नाम महती टीका समपादि । यन्नाम्नैव काश्मीरकाः सर्वास्तिवादिनः ततः परं वैभाषिकनाम्ना प्रख्याताः । अस्यामेव परिषदि गन्धार-काश्मीरकशाखिणां सामग्रीकरणमपि समपद्यत । माथुरसर्वास्तिवादिभ्यो भेद-करणाय मूलसर्वास्तिवादिनाम्ना इमे प्रसिद्धाः ।

माथुर-सर्वास्तिवादिनां अशोकावदानमित्येकमेव पुस्तकं लभ्यते । तेषां पिटकं लोकभाषायां संस्कृतभाषायां वाऽऽसीदिति नास्ति किमप्यन्यतर-विनिगमकम् । द्वितीयसंगीतौ स्थविराणां सर्वाऽस्तिवादिनां विवाद-

---

१. Epi. Ind. IX App. P. 25. २. Arch. S. R. 1909-10 P. 136.

विषयोऽभूत् अभिधर्मः, अतस्तयोः सूत्र-विनय-पिटकयोः नास्ति महान् भेदः । तत्र स्थविर-सर्वाऽस्तिवादयोः सूत्र-ग्रन्थाः—

| स्थविरवादस्य— | सर्वास्तिवादस्य— |
|---|---|
| दीघनिकायो (= दीघागमो) | दीर्घागमः |
| मज्झिमनिकायो (= मज्झिमागामो) | मध्यमागमः |
| संयुत्तनिकायो (= संयुत्तागमो) | संयुक्तकागमः |
| अंगुत्तरनिकायो (= अंगुत्तरागमो) | अंकोत्तरागमः |
| खुद्दकनिकायो (= खुद्दकागमो) | क्षुद्रकागमः |

पालि (स्थविर)-ग्रंथेषु निकायशब्द एव यद्यपि बाहुल्येन दृश्यते, तथापि 'आगम'-शब्दोऽपि उपयुज्यत एव । 'खुद्दकनिकायो' पृथग् निकायत्वेनेह परिगणितः, सर्वास्तिवादिनां ग्रंथेषु तु निकायचतुष्टयं प्राधान्येन दृश्यते तथापि क्षुद्रकागमोऽपि लभ्यते । 'खुद्दकनिकाये' च इमे ग्रन्थाः—

| | |
|---|---|
| १. खुद्दकपाठो | |
| २. धम्मपदो | धर्मपदम् |
| ३. उदानं | उदानम् |
| ४. इतिवुत्तकं | |
| ५. सुत्तनिपातो | सूत्रनिपातः |
| ६. विमानवत्थु | विमानवस्तु |
| ७. पेतवत्थु | |
| ८. थेरगाथा | |
| ९. थेरीगाथा | |
| १०. जातकं | |
| ११. निद्देसो | |
| १२. पटिसम्भिदा | |
| १३. अपादानं | |
| १४. बुद्धवंसो | बुद्धवंशम् |
| १५. चरियापिटकं | |

विनयः स्थविरवादिनां 'खन्धक-विभंग' भेदेन द्विधा भिन्नः, तत्र, 'विभंगः' भिक्षु-भिक्षुणी-भेदेन द्विधा भिन्नः, तस्यैवेदानीं प्रसिद्धिः 'पाराजिका-'पाचित्ति'-रूपेण । 'खन्धको' 'महा-चुल्ल'-भेदेन द्विधा, एवं इमे चत्वारः । पंचमः 'परिवारो' तु तेषामेव संग्रहभूतः । एवं विनये—

| | स्थविराणाम्— | सर्वाऽस्तिवादिनाम्— |
|---|---|---|
| विभंगो | १. पाराजिका | पाराजिका |
| | २. पाचित्ति | प्रायश्चित्तिकम् |
| खन्धको | ३. महावग्गो | अवदानम् |
| | ४. चुल्लवग्गो | (= जातकम्) |
| | ५. परिवारो | |

स्थविराणां अभिधर्म-पिटके सप्त ग्रन्थाः—

स्थविराणाम्

१. धम्मसंगनी
२. विभंगो
३. धातुकथा
४. पुग्गलपञ्ञत्ति
५. कथावत्थुप्पकरणं ( मौद्गलिपुत्रतिष्य-प्रणीतम् )
६. यमकं
७. पट्ठानं

सर्वाऽस्तिवादिनां अभिधर्मपिटके च सप्त—

| ग्रंथः | कर्ता |
|---|---|
| १. ज्ञानप्रस्थानम् (–शास्त्रम् ) | आर्यकात्यायनः |
| २. प्रकरणपादः | स्थविरवसुमित्रः |
| ३. विज्ञानकायः | स्थविरदेवशर्मा |
| ४. धर्मस्कन्धः | आर्यशारिपुत्रः |
| ५. प्रज्ञप्तिशास्त्रम् | आर्यमौद्गल्यायनः |

६. धातुकायः पूर्णः ( वसुमित्रो वा )

७. संगीतिपर्यायः महाकौष्ठिलः (शारिपुत्रो वा)

अत्र द्वयोः निकाययोः ग्रन्थेषु नामसाम्यं, यथा—

| | |
|---|---|
| १. धम्मसंगनी | (४) धर्मस्कन्धपादः |
| २. विभंगो | (३) विज्ञानकायपादः |
| ३. पुग्गलपञ्ञत्ति | (५) प्रज्ञप्तिपादः |
| ४. धातुकथा | (६) धातुकायपादः |
| ५. पट्ठानं | (१) ज्ञानप्रस्थानम् |
| ६. यमकं | (७) संगीतिपर्यायपादः |
| ७. कथावत्थुप्पकरणं | (२) प्रकरणपादः |

यद्यप्येवं संख्यानाम्नोः सादृश्यं, तथाऽप्याचार्यतर्ककुशलो[१] विषयेषु न सादृश्यं पश्यति; 'पुग्गलपञ्ञत्ति' 'संगीतिपर्याययो'स्त्वस्ति अंकोत्तर-क्रमादिषु सादृश्यम् ।

सर्वास्तिवादिनां अभिधर्मे ज्ञानप्रस्थानं ( अष्टग्रन्थशास्त्रं ) एव प्रधानम् । तस्य वेदषडंगवत्[२] अपराणि षड् अंगानि ।

ज्ञानप्रस्थानशास्त्रं हि आर्यकात्यायनेन ( बुद्धस्य चतुर्थ-प्रधान-शिष्येण ) प्रणीतं इति सर्वास्तिवादिनां मतम् । पालिपिटक-परिशिष्टेऽस्ति 'नेत्तिप्पकरणं' नाम ग्रन्थः, अयमपि आर्यकात्यायनेन प्रणीत इति श्रोत्रपरम्परा । अत्र हि चतुस्त्रिंशत् कारिकाः देशना-विचय-युक्ति-पदस्थान-लक्षण-चतुर्व्यूहा-ऽऽवर्त-परिवर्त-विभक्ति-परिवर्तन-विवेचन-प्रज्ञस्यवतरण-शोधना-ऽधिष्ठान-परिष्कार-समारोपणादि-क्रमेण वर्णिताः । ज्ञानप्रस्थानशास्त्रे तु अष्टौ ग्रन्थाः, चतुश्चत्वारिंशत् वर्गाः[३]; १५०७२ श्लोकाः ग्रंथ-परिमाणम् ।

तत्र विषय-क्रमः—

---

१ The Abhidharma Literature by Dr. Takakusu, J. R. A. S. 1905, P. 161.

२ Dr. Takakusu in J. P T. S 1904-1905. P. 74.

३ The Sarvastivadin Abhidharma Books. Dr. Takakusu in J. P. T. S. 1904-1905. P. 124.

| ग्रन्थः | विषयः | वर्ग-विषयः |
|---|---|---|
| १. | (प्रकीर्णम्) | लोकोत्तरधर्म-ज्ञान-पुद्गल-श्रद्धागौरव-आह्रीकानपत्राप्य-रूपा-ऽनात्म-चेतनाः। |
| २. | संयोजनम् | अकुशलमूल-सकृदागामि-मनुष्य-दशद्वाराणि। |
| ३. | ज्ञानम् | अष्टशैक्षाऽशैक्षभूमि-५ दृष्टि-परचित्तज्ञान-ज्ञानाभ्यासा-ऽऽर्यप्रज्ञाः। |
| ४. | कर्म | अकुशलकर्मा-ऽसम्यग्वाग्-विहिंसा-व्याकृता-ऽव्याकृतानि। |
| ५. | चत्वारिमहाभूतानि | इन्द्रिय-संस्कृत-दृष्टसत्य-अध्यात्मोपपत्तयः। |
| ६. | इन्द्रियाणि | २२ इन्द्रिय-भव-स्पर्शा-ऽऽद्यचित्ता-ऽऽद्योपपन्न-चित्त-मात्सर्य-हेतवः। |
| ७. | समाधिः | अतीतावस्था-प्रत्यय-विमुक्त्य-नागामि-सकृदागामिनः। |
| ८. | स्मृत्युपस्थानम् | काय-वेदना-चित्त-धर्मानुपश्यनाः, तृष्णा, संज्ञा, ज्ञानसमयः, दृष्टिः गाथावर्गश्च। |

अभिधर्मकोशस्याश्रयः काश्मीर-विभाषा। सा च ज्ञानप्रस्थानं एव अवलम्ब्य प्रवृत्ता। कनिष्ककाले विक्रमद्वितीय-शतकेऽश्वघोषवसुमित्र-प्रभृतिभिः पंचशतस्थविरैः ज्ञानप्रस्थानोपरि महाविभाषा निर्मिता। प्रज्ञप्तिशास्त्रमिदानीमपि चीनभाषायां उपलभ्यते। परमार्थः विभाषा दशलक्षश्लोकपरिमितेति वदति। ह्वेन्-चाङ् तु एकलक्षपरिमितेति। विभाषाग्रन्थस्य भाषान्तराणि चीन-भाषायां विक्रमाब्दे ४४०, ४९१, ६१४. चाऽभूवन्। विभाषाग्रन्थे हि ३ खण्डाः, ४२ वर्गाः[1]. (चीनभाषाग्रन्थे ४०० पृष्ठानि, ज्ञानप्रस्थाने ३८२ पृष्ठानि) भवंति। अन्तर्विभागस्तु ज्ञानप्रस्थानवत् प्रकीर्ण-संयोजन-ज्ञान-कर्म-चतुर्भूते-न्द्रिय-ध्यान-दृष्टिभेद-रूपेण।

अस्या अन्यान्यपि भाषान्तराणि चीनभाषायां लभ्यन्ते, तत्र ग्रंथसंख्याधिक्यमपि, परं सम्पूर्णो विभाषा-ग्रंथो लुप्त इति बहूनां अभिसन्धिः।

विभाषामधिकृत्यैव काश्मीर-सर्वास्तिवादिनां वैभाषिकेति नामान्तरं

1. Tong - Pao July, 1904.

जातमित्युक्तपूर्वम् । काश्मीर-विभाषामवलम्ब्याचार्यवसुबन्धुः अभिधर्मकोशं प्रणीतवान् । तत्र कोऽयं वसुबन्धुः ? कुमारजीवेन ४५८—४६६ विक्रमाब्दान्तराले वसुबन्धु-जीवनं चीनभाषायां निबद्धम् । तद् ७५७ विक्रमाब्दे एव विलुप्तमासीत् । परमार्थेन ( ५५६—६१७ वि० ) विनिबद्धं वसुबन्धुचरितमिदानीमपि विद्यते । अयं ग्रन्थः तर्ककुशलाचार्येण 'तोङ्-पो' नाम्नि फ्राँस-पत्रे ( जूलाई १९०४ ) प्रकाशितम् । वसुबन्धुकालविषये विवादो विदुषाम् । आचार्यतर्ककुशलो वसुबन्धुसमयं ४७७—५५७ विक्रमाब्देषु स्थिरीचकार[1] । परमत्र आचार्यविनयतोषभट्टाचार्यस्य मतमेवाधिकं समंजसं प्रतिभाति । तन्मतेन[2] ३३७—४१७ विक्रमाब्दा वसुबन्धुसमयः । तस्यैव साहाय्यकरं काव्यालंकार-सूत्रे वामनस्येतदप्युद्धरणं—

"सोऽयं सम्प्रति चन्द्रगुप्त-तनयश्चन्द्रप्रकाशो युवा ।
जातो भूपतिराश्रयः कृतधियां दिष्ट्या कृतार्थश्रमः ॥
आश्रयः कृतधियामित्यस्य वसुबन्धुसाचिव्याक्षेपपरत्वात्[3]......"?

चन्द्रगुप्तस्तु प्रथमो गुप्तसम्राट् ३७७—३८७ विक्रमाब्देषु भारतं शशास ।

वसुबन्धुः गन्धार-देशे पुरुषपुर (= पेशावर )-नगरे कौशिकान्वये ब्राह्मणवंशे समुद्भूतः । तस्य त्रयो भ्रातरः—असंगवसुबन्धुः, वसुबन्धुः, विरंचि-वसुबन्धुश्च। तत्र अयं मध्यमः । ज्येष्ठः प्रव्रज्य असंगनाम्ना लोकप्रसिद्धो योगाचार ( महायान )-दार्शनिको जातः । कनिष्ठः सर्वास्तिवादे प्रव्रज्यार्हन्नभूदिति श्रूयते । वसुबन्धुरपि सर्वास्तिवादे प्रव्रजितः । कालान्तरे गन्धारदेशं परित्यज्य अयोध्यायां आगतः; तत्रैव बुद्धमित्र-स्थविरस्य शिष्यत्वं स्वीचकार । अथैकदा वसुबन्धावनुपस्थिते तद्गुरुणा, संख्याचार्येण विन्ध्यवासिना च शास्त्रार्थः समजनि, यत्र बुद्धमित्रः पराजितः । आगतेन वसुबन्धुना उपश्रुत्येदं वृत्तं, विन्ध्यवासी अन्विष्टः, परं स तस्मिन् काले नासीज्जीवितदशायाम् । ततः ईश्वरकृष्ण-विरचित-सांख्य-

---

१. J. R. A. S. 1905 P. 43.
२. Foreword to तत्व-संग्रह (Gaikwad's Oriental series. Vol. LXVI)
३. A. Rangaswami Saraswati in Indian Ant. 1924. P. 8.

कारिका-विपक्षे तेन 'परमार्थसप्तति' लिखिता। गुप्तसम्राट् अयोध्याधीश्वरः चन्द्रगुप्तोऽस्यैव प्रभावेन सांख्यमतमुत्सृज्य बौद्धः संवृतः। चन्द्रगुप्ततनयः चन्द्रगुप्तमहिषी चास्य शिष्यौ। अभिधर्मकोशोऽयोध्यायामेव मन्ये लिखित इति। अभिधर्मकोशे यत्र तत्र काश्मीर-वैभाषिक-मतादपि स्वतंत्रो भावः प्रकाशितः, परं सोंऽशो नास्ति कारिकागतः। भाष्यस्यैव क्वचित्प्रतिकूलता। तेन रुष्टो महावैयाकरणो वसुरातः कोशे व्याकरणदोषान् प्रादुर्भावयामास। श्रूयते ततो वसुबन्धुना तद्व्याकरणखण्डनात्मकः कश्चित् स्वतंत्रो निबन्धो व्यधायि।

वसुबन्धु-समकालिक आचार्य-संघभद्रोऽभिधर्मकोशभाष्येऽनेकान् विरुद्धान् अंशान् निरीक्ष्य, तन्निराकरणार्थमेव "अभिधर्म-न्यायानुसारशास्त्रं" न्यबध्नात्। अस्मिन् हि सामान्य-विशेष-हेत्व-नुशाया-ऽऽर्यपुद्गलज्ञान-ध्यानादीनि अष्टौ प्रकरणानि। १७७१ पृष्ठात्मकोऽयं महान् ग्रंथोऽधुनाऽपि चीनभाषायामुपलभ्यते। आचार्य-संघभद्रः शास्त्रार्थ-कृतेऽपि तमाह्वयत। परं आसन्नसप्ततिवार्षिकेणाचार्येण वार्द्धक्यादसामर्थ्यं प्रकाशितं, अन्ये तु—स मगध देशे विद्वन्मण्डलीसंमुखे शास्त्रनिर्णयो भवत्विति प्रायतत। वसुबन्धोः दशवर्षात्प्रागेवाचार्य-संघभद्रो मानुषलीलां समावृणोत्। मृत्योःप्राक् तेन स्वकीया कृतिः विरोधिनो वसुबन्धोः समीपे प्रेषिता, स च तदुपरि व्याख्यां विधाय स्वीयं सौजन्यं प्राचीकशत्।

अन्तकाले वसुबन्धुर्ज्येष्ठेन भ्रात्राऽसंगेनाहूतो गन्धारान् अगात्। तत्र च तदादेशनया सर्वास्तिवादं परित्यज्य महायानमतं स्वीचकारेति कथयन्ति अनेके। तत्तु अतीव शंकास्पदमिव प्रतिभाति। एतादृशो लेखोहि महायान-ग्रन्थेपूपलभ्यते, यत्र च कनिष्कः, तत्कारिता सभाऽपि महायान-सम्बन्धेन वर्णिता; परं इदानीं उपलब्धा उत्कीर्णा लेखाः सर्वास्तिवादेन तस्य सम्बन्धं दृढयंति। एवमेव कदाचित् वसुबन्धुरपि शताब्दन्तरे महायाने परिगृहीतः स्यात्। आचार्य-वसुबन्धुः अशीतिवर्षवयसि गन्धारेषु शरीरमुदसृजत्।

चीन-त्रिपिटके वसुबन्धुनाम्ना षट्त्रिंशतग्रन्था दृश्यन्ते, तत्र षट् वसुबन्धवः, किं कस्येति निश्चयो दुष्करः। ते च—

१. वज्रच्छेदिकासूत्रशास्त्रम्।
❀× २. महायान-संपरिग्रह-शास्त्रव्याख्या।
३. पंच-स्कन्धक-शास्त्रम्।
४. शतशास्त्र-व्याख्या।
५. गयशीर्ष-सूत्रटीका।
× ६. विशेष-चिन्ता-ब्राह्मण-परिपृच्छा-सूत्रटीका।
× ७. दशभूमिकशास्त्रम्।
× ८. त्रिपूर्ण-सूत्रोपदेशः।
× ९. अपरिमितायुः सूत्रशास्त्रम्।
× १०. धर्मचक्रप्रवर्तन-सूत्रोपदेशः।
❀× ११. महापरिनिर्वाण-सूत्रशास्त्रम्।
❀× १२. निर्वाणसूत्र-पूर्वभूतोत्पन्नभूत (निर्वाण-सूत्रान्त)-गाथाशास्त्रम्।
× १३. ( महापरिनिर्वाण-व्याख्या )।
१४. महायानशतधर्मविद्याद्वार-शास्त्रम्।
१५. विद्यामात्रसिद्धित्रिदशशास्त्रम्।
१६. बोधिचित्तोत्पादन-शास्त्रम्।
× १७. बुद्धगोत्र-शास्त्रम्।
१८. कर्मसिद्ध-प्रकरण-शास्त्रम्।
१९. शमथविपश्यनाद्वार-शास्त्रकारिका।
२०. सद्वारोपदिष्टध्यानव्यवहारशास्त्रम्।
❀× २१. वज्रच्छेदिकाप्रज्ञापारमितासूत्रशास्त्रम्।
❀× २२. सद्धर्मपुंडरीकसूत्रशास्त्रम्।
❀× २३. विद्या (= विज्ञान)-मात्र-सिद्धिः।
× २४. रत्नचूड-सूत्र-चतुर्धर्मोपदेशः।
× २५. मध्यान्तविभंगशास्त्रम्।
× २६. तर्कशास्त्रम्।
२७. अभिधर्मकोशशास्त्रम्।
× २८. गयशीर्षशास्त्रम्।

❀चिह्नांकिता ग्रन्थाः परमार्थेन (५५६-६१७ वि०) स्मृताः, असंगमृत्योरनन्तरं × चिह्नांकिता अन्ये ग्रन्था: प्रणीता इति प्रोच्यते।

त्रिविष्टप-देशीय-'स्तन्-जूर' ग्रन्थे[१] वसुबन्धुनाम्ना इमे ग्रन्था दृश्यन्ते—

१. त्रिंशकारिका (विज्ञानमात्रदेशकत्रिंशिका) (स्तन्जूर। सि)।
२. विंशकारिका (बाह्यार्थनिरोधकविंशिका)। ”
३. त्रिस्वभावनिर्देशः। ”
४. पंचस्कन्धप्रकरणम्। ”
५. व्याख्यायुक्ति-सूत्रखण्डशतकम्। ”
६. व्याख्यायुक्तिः। ”
७. कर्मसिद्धप्रकरणम्। ”
८. महायानशतधर्मप्रकाशमुखशास्त्रम्। ”

अभिधर्मकोश-ग्रन्थे कारिकाः—

| कोशस्थानम् | विषयः | कारिकाः |
|---|---|---|
| १. | धातुनिर्देशः | ४८ |
| २. | इन्द्रियनिर्देशः | ७३ |
| ३. | लोकनिर्देशः | १०१½ |
| ४. | कर्मनिर्देशः | १२७ |
| ५. | अनुशयनिर्देशः | ७० |
| ६. | आर्यपुद्गलनिर्देशः | ७९ |
| ७. | ज्ञाननिर्देशः | ५६ |
| ८. | समाधिनिर्देशः | ४० |
| | | ५९४½ |
| | भाष्यान्ते | ३ |
| | | ५९७½ |

अन्यत्र[२] कारिकाणां संख्या ६०२ परिगण्यंते; तत्र कोशपरिशिष्ट

१. Catalogue du Fonds Tibetain, III Partie 384-386, 499
२ Dr. Takakusu in J. P. T. S., P 132.

पुद्गलनिषेधनिर्देशस्य आद्यैका तिस्रश्चान्त्याः सम्मिलिता भवेयुः । परमार्थः कथयति—काश्मीर-वैभाषिकैरनुयाच्यमान आचार्यः स्वयमेव कोशभाष्यं प्रणिनाय ।

एकस्मिन्काले भारते सर्वत्राभिधर्मकोश आसीद्बहुलप्रचारः । न केवलं बौद्धेषु इतरेष्वपि तीर्थेषु अस्य कियती प्रसिद्धिरिति हर्षचरिते[1] बाणोक्त्याऽनयापि विनिगम्यते—"शुकैरपि शाक्य-शासनकुशलैः कोशं समुपदिशद्भिः" । "कोशो बुद्धसिद्धान्तो वसुबन्धु-कृत" इति टीकायां शंकरकविः । स्थविरनिकायप्रधाने लंका (= ताम्रपर्णि)-द्वीपेऽप्यस्य भूयान् प्रचार आसीदिति विक्रम-पंचदश-शतकान्तभवस्य सिंहलमहाकवेः श्रीराहुलसंघराजस्य 'मोग्गल्लान-पंचिका-प्रदीप[2]'-ग्रन्थे 'दीयते येन तद्दान' मिति अभिधर्मकोश-नाम्नोद्धृतया कारिकयैव प्रमाणी-क्रियते । इदं हि ग्रन्थरत्नं बौद्धदर्शन-जिज्ञासूनां कृते कियदावश्यक-मिति चीन-निप्पन-त्रिपोतादि-देशीयेषु महायान-विहारेषु अस्य पाण्डि-त्यनिकषास्थानीयत्वमेव साधयति । एतादृशस्य गम्भीर-ग्रन्थस्यानेका टीकाऽनुटीकाः । त्रिपोत्-स्तन्-जूरग्रन्थसंग्रहे[3]ऽभिधर्मकोश-सम्बन्धिनो ग्रंथा इत्थं लभ्यन्ते—

| | | | स्तन्-जूर-वेष्ठनसंख्या |
|---|---|---|---|
| १—अभिधर्मकोश-कारिका । | | | (६३) |
| २—अभिधर्मकोश-भाष्यम् । | | | (६३) |
| ३— | ,, | -टीका, स्फुटार्था । (यशोमित्रः) | (६५) |
| ४— | ,, | -टीका, लक्षणानुसारिणी । (पुण्यवर्द्धनः) | (६७, ६८) |
| ५— | ,, | -टीका, औपयिकी । (शान्तिस्थिरदेवः) | (६९, ७०) |
| ६— | ,, | -वृत्तिः, मर्मप्रदीपः । (दिङ्नागः) | (७०) |
| ७— | ,, | -भाष्यटीका, तत्वार्थः (स्थिरमतिः) | (१२९, १३०) |

१. हर्षचरिते अष्टमोच्छ्वासे ।

२. 'मोग्गल्लान-पञ्चिकाप्रदीपे' धर्मकीर्तिश्रीधर्मारामनायकस्थविरसम्पादिते, पृष्ठे ६४ ।

३. Catalogue Du Fonds Tibetain, III, 394-397.

त्रिपोत्-चीन-निप्पनादि-भाषासु नाना परिवार-ग्रन्थाश्च कोशस्य प्रवर्तन्ते।

सर्वास्तिवाददर्शने संस्कृतमूलग्रन्थाः विनष्टप्रायाः, केचनाधुनाऽपि गूढं निहिताः कालं प्रतीक्षन्ते, तथापि चीन-लिपिबद्धग्रन्था अधुनाऽपि सुलभाः। वर्णसंकेतस्थाने शब्दसंकेतत्त्वात्, चीनाक्षरतः पुनः संस्कृत-परिवर्तनं तेषां न भवेत् कठिन-तदक्षर-मर्मज्ञैः। सर्वास्तिवादस्य केचन दर्शनग्रंथाः ( अत्र सर्वत्र पृष्ठतो ग्रन्थावबोधे अभिधर्मकोश-षट्-शत-कारिकाणां त्रिपंचाशत्पृष्ठात्मकता मनसि निधेया )—

| नाम | कर्ता | पृष्ठानि | विषयाः |
|---|---|---|---|
| १. समयप्रदीपः[1]। | (संघभद्रः) | ७४६ | न्यायानुसार-संक्षेपभूतः। |
| २. अभिधर्मामृत-शास्त्रम्। | (घोषः) | ५५ | दान-शील-जातिस्वरूपाऽऽहारस्थितिकसत्त्व-कर्म-स्कन्ध-संस्कार-हेतु-अनास्रवेन्द्रिय-संयोजनानुशाया-ऽनास्रव-ज्ञान-ध्यान-प्रकीर्णसमाधि—३७ बोधिपाक्षिक-चतुरार्यसत्य प्रकीर्णानि। |
| ३. अभिधर्म-हृदयम्। | (धर्मोत्तरः) | ९६ | प्रायः पंचमवत् |
| ४. अभिधर्म-हृदयम्। | (उपशान्तः) | १३९ | प्रायः पंचमवत् |
| ५. अभिधर्म-हृदयम्। | (धर्मत्राता) | ३६२ | भूमिका-धातु-संस्कार-कर्मा-ऽनुशायाऽऽर्यपुद्गल-प्रज्ञा-समाधि-सूत्र-प्रकीर्णानि। |
| ६. लोकप्रज्ञप्ति-अभिधर्मशास्त्रम्। | (अज्ञातः) | २०० | भूगति-जम्बूद्वीप-षण्महादेश-यक्ष-राजगिरिहस्ति-मेरुपरिगतचतुर्द्वीप- |

१. Dr Takakusu. in J. P. T. S. 1904.05, PP. 137–145.

| | | | |
|---|---|---|---|
| | | | कालाकारपरिमाणाकाश-सुदर्शने-न्द्रासुरयुद्धच-न्द्रार्कगत्य-होरात्रविभाग-जात्या-ऽऽयु-नरक-लघुसंवर्तनित्रय-महासंवर्तनित्रयाणि । |
| ७. अभिधर्म-प्रवेशः। | (स्कन्धिलः)सुगन्धरः | ३४ | रूप-चित्त-चैत्त-चित्तविप्रयुक्ता-संस्कृतानि । |
| ८. शारिपुत्राभिधर्मशास्त्रम् । | (शारिपुत्रः) | ६२० | आयतन-धातु-स्कन्ध-सत्ये-न्द्रिय-बोध्यंगानि, धातु-कर्म-पुद्गल-ज्ञान-हेतु-स्मृत्युपस्थान-र्द्धि-ध्यान-मार्ग-क्लेशाः, संग्रह-संप्रयोगौ, सर्वत्रगहेतु-नाम-रूप-संयोजन-संस्कार-स्पर्श-चेतना-कुशला-ऽकुशल-समाधयश्च । |
| ९. लक्षणानुसारः। | (गुणमतिः) | ४१० | द्वादशनिदान-चतुरार्यसत्यानि । |

श्रावक-प्रत्येकबुद्ध-सम्यक्सम्बुद्धेति त्रयं यानं स्फुटमभिधर्मकोशे। तत्र ये सत्वा श्रावकबोधिं (अर्हत्वं) प्रेप्सवस्ते श्रावकयानानुयायिनः, तथैव प्रत्येकबुद्ध-सम्बुद्धयानयोरपि। पुण्यसमाधि-संचय-तारतम्यमत्र बोधिभेदत्रये कारणम्। असंख्येय-त्रयकल्पसंचितपुण्य-प्रज्ञा-संभारेण हि सम्बुद्धो भवति, प्रपूर्य पारमिताः सर्वाः किल। एवं यानत्रये किं महद् किं हीनं इति स्फुटमेव। सम्बुद्धपदं यो नयति मार्गं, स एव महामार्गं महायानमित्युच्यते, इतरद् द्वयं हीनयानम्। यद्यपि द्वादश अपि स्थविरनिकायाः सम्बुद्धपदं सर्वथा दुरापं, तत्कृते न प्रयतितव्यमिति नाभिदधति, तथाऽपि महायानिकैः सम्बुद्धपदैक-पक्षपातिभिः, स्वभिन्ना

निकाया हीनयाने परिगणिताः । हीनयानशब्दो बलादेव महायानिकैः स्थविरेषु निक्षिप्तः स्याद् । इदानीं स्थविरवादस्य कृते हीनयान-शब्दः प्रयुज्यते, तद्भिन्नानां कृते च महायान-शब्दः ।

किमिदं महायानं कथं चागतम् ?

महासांघिक-तज्जाताश्च षट् निकायानां महायानसंज्ञा कालान्तरे यथा सर्वास्तिवादिनां वैभाषिकसंज्ञेति कथनं न समंजसम् । यद्यपि तेषां षण्णां निकायानां पिटकग्रन्था विलुप्ताः, तथापि महायानिकैराकुलीकृतं महासांघिकानां विनयग्रन्थं "महावस्तु" दृष्ट्वा प्रतीयते, महायानापेक्षया तेषां स्थविरवादेनैव बहु सादृश्यम् । महायानं न कस्माच्चिदेकस्मान्निकायान्निस्सृतम् । विक्रमशतकारम्भभव आचार्य-नागार्जुन एव वस्तुतो महायानस्य पुरोधा । अनेनैव माध्यमिककारिका विरचिताः । चीनपिटके विंशत्यधिका ग्रन्था एतस्य नाम्ना प्रसिद्धाः । चीनभाषायां महायान-ग्रन्थेषु "सुखावती-व्यूहः" २०५–२२७ विक्रमाब्दान्तराले प्रकाशितः, दशसाहस्रिक-प्रज्ञापारमिता च १३२–२७७ अन्तराले । अन्ये महायानग्रन्थाः तृतीय-पंचम-शतकान्तराले भाषान्तरीकृताः ।

यद्यपि विक्रमाब्दारम्भ एव नागार्जुनेन माध्यमिकवादः प्रकाशितस्तथाऽपि असङ्गकालादेवाऽस्यभूयःप्रवृत्तिः भारते । अष्टादशनिकायानां यथा स्वयं स्वीयं सूत्र-विनया-ऽभिधर्म-पिटकत्रयं, न तथा महायाने । पूर्वमत्र माध्यमिकवादो बाह्यार्थमिथ्यात्त्व-प्रतिपादक उद्भूतः, ततश्च तत्पुष्ट्यर्थं शतसाहस्रिकप्रज्ञापारमितादीनां ग्रन्थानां सृष्टिः ।

नेपालमहायानिकेषु नवेमे ग्रन्थाः पिटकपदं गृह्णन्ति—

१. प्रज्ञापारमिता ।
२. गण्डव्यूहः ।
३. दशभूमीश्वरः ।
४. समाधिराजः ।
५. लङ्कावतारः ।
६. सद्धर्मपुण्डरीकम् ।
७. तथागतगुह्यकम् ।

८. ललितविस्तरः ।

९. सुवर्णप्रभासः ।

अष्टादशस्वपि निकायेषु पिटकमुखेन दर्शन-प्रतिपादनं, महायाने तु स्वदर्शनमुखेन पिटकप्रतिपादनम् । तथापि महासांघिकेषु महायानस्य बीजं आसीदितिकेषांचिद् विदुषां मतम् । मम तु निकायविशेषे नाग्रहभावेनैव प्रवृत्तं महायानदर्शनं, काले भारतीय-बौद्धनिकायान् सर्वानेवोदरशादकार्षीदिति प्रतिभाति । तंत्राणां बहुलप्रचारोऽपि शीलाचारपरमपक्षपातिनां अन्येषां निकायानां ह्रासाय, बुद्ध-बोधिसत्त्वभक्त्यैकशरणस्य चास्य समृद्धये समभूत् । फाहियानागमनकाले विक्रमपञ्चशतकमध्ये, मध्यभारते, तद्भिन्नदेशेष्वपि न बाहुल्यं महायानानुयायिनां, परं सप्तमशतकमध्ये ह्वेन्-चाङ्-यात्रासमयेऽस्यैव सर्वत्र प्राधान्यम् । उपलब्धशिलालेखैरपि षष्ठशताब्दीत एव महायानोत्कर्ष एधमानो दृश्यते, माहम्मदाक्रमणकाले त्रयोदशविक्रम शताब्दे तु सर्वत्र भारते बौद्धेषु अस्यैवैकान्तराज्यं समजनि ।

तत्र को भेदो महायान-श्रावक (=हीन)-यानयोः ? बुद्धत्वमेवाधिगन्तव्यं वस्तु महायाने, श्रावकबोध्यादिकमपीति श्रावकयानं इत्युक्तपूर्वम् । तत्सम्बन्धेनैव बोधिसत्वपूजाप्रचारो महायाने भूयान्, श्रावकयाने तु तस्याभाव इति द्वितीयो भेदः । तृतीयो भेदस्तयोर्दर्शने । महायान-दर्शनं माध्यमिकवादः योगाचारश्च; वैभाषिकवादश्च सर्वाऽस्तिवादिनां दर्शनम् । यद्यपि स्थविराद्यन्येषां श्रावकयानानां वैभाषिकवादतोऽस्तिभेदः, तथापि बाह्यार्थानपलापाद्यनेकेषु अंशेषु तेषां अस्ति ऐकमत्यमिति वैभाषिक-माध्यमिकवादावेव प्रधानदर्शने । सर्वं (बाह्यवस्त्वादि) अस्तीति वैभाषिकदर्शनम्, सर्वास्तित्वमितरेतराश्रयत्वान्नास्ति तेषामस्तित्वमिति माध्यमिकसिद्धान्तः । द्वयोरन्तराले सौत्रान्तिक-योगाचार-दर्शने । चत्वार्यमूनीत्थं विविनक्ति आचार्यः चिर-वासुकिः[१]—

| | संसारः | निर्वाणम् |
|---|---|---|
| वैभाषिकाः, प्राक्तनाश्च | सत्यम् | सत्यम् |
| माध्यमिकाः | असत्यम् | असत्यम् |

१ The Conception of Buddhist Nirvana, P. 27.

| | | |
|---|---|---|
| सौत्रान्तिकाः | सत्यम् | असत्यम् |
| योगाचाराः | असत्यम् | सत्यम् |

शङ्कराचार्यः[१]—

"तत्रैते त्रयो वादिनो भवन्ति—केचित्सर्वास्तिवादिनः, केचिद्विज्ञानास्तित्त्वमात्रवादिनः, अन्ये पुनः सर्वशून्यत्ववादिन इति । तत्र ते सर्वास्तित्त्ववादिनो बाह्यमन्तरं च वस्त्वभ्युपगच्छन्ति भूतं भौतिकं च चित्तं चैत्तं च ।·····तत्र भूतं पृथिवीधात्वादयः । भौतिकं रूपादयश्चक्षुरादयश्च । ······॥१८॥ यद्यपि भोक्ता प्रशासिता वाकश्चिच्चेतनः संहन्ता स्थिरो नाभ्युपगम्यते, तथाप्यविद्यादीनामितरेतरकारणत्वादुपपद्यते लोकयात्रा ।······। तेचाविद्यादयः·····, अविद्या संस्कारो विज्ञानं नामरूपं षडायतनं स्पर्शो वेदना तृष्णा उपादानं भवो जातिर्जरामरणं शोकः परिदेवना दुःखं दुर्मनस्कतेत्येवं जातीयका इतरेतर-हेतुकाः सौगते समये·····प्रपञ्चिताः । ······तदेवमविद्यादिकलापे परपरनिमित्तनैमित्तिकभावेन घटीयंत्रवद् अनिशमावर्तमानेऽर्थाक्षिप्त उपपन्नः संघातः ।······॥१९॥" अत्र हि सर्वदर्शन-रणरंगमल्ला वाचस्पतिमिश्राः[२]—

"केचित् सर्वास्तित्वमेव सिद्धान्तं प्रतिपद्यन्ते, केचिद् ज्ञानमात्रास्तित्वं, केचित् सर्व-शून्यतां । अथ त्वत्र भवतां सर्वज्ञानां तत्त्वप्रतिपत्ति-भेदो न संभवति, तत्त्वस्यैकरूप्यादित्येतदपरितोषेणाह—विनेयभेदाद्वा । हीन-मध्यमोत्कृष्टधियो हि शिष्या भवन्ति । तत्र ये हीनमतयस्ते सर्वास्तित्ववादेन तदाशयानुरोधाच्छून्यतायामवतार्यन्ते ।··········· यद्यपि वैभाषिक-सौत्रान्तिकयोरवान्तर-मतभेदोऽस्ति, तथापि सर्वास्तितायामस्ति संप्रतिपत्तिरित्येकीकृत्युपन्यासः । तथा च त्रित्वमुपपन्नमिति ।"

"···विज्ञानवादे[३] बुद्ध्यारूढेन रूपेणान्तस्थ एव प्रमाण-प्रमेय-फल-व्यवहारः सर्व उपपद्यते । सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात् ।·····। अपि चानुभवमात्रेण साधारणात्मनो ज्ञानस्य ज्ञानस्य योऽयं प्रति विषयं पक्षपातः स्तम्भ-ज्ञानं कुड्यज्ञानं घट-

१. ब्रह्मसूत्रशांकरभाष्यम् । २ : २ १८, १९ २. ब्रह्मसूत्रशांकरभाष्यम् , २. २. २८ । ३. ,, २. २. ३ ।

ज्ञानं पटज्ञानमिति, नासौ ज्ञानगत-विशेषमन्तरेणोपपद्यत इत्यवश्यं विषय-सारूप्यं ज्ञानस्यांगीकर्तव्यम् । अंगीकृते च तस्मिन् विषयाकारस्य ज्ञानेनैव अवरुद्धत्वाद् अपार्थिका बाह्यार्थसद्भावकल्पना । अपि च सहोपलम्भनियमादभेदो विषयविज्ञानयोरापतति न ह्यनयोरेकस्यानुपलम्भेऽन्यस्योपलम्भोऽस्ति । न चैतत् स्वभावविवेके युक्तं, प्रतिबन्ध कारणाभावात् । तस्मादप्यर्थाभावः । स्वप्नादिवच्चेदं द्रष्टव्यम् ।......। कथं पुनरसति बाह्यार्थे वैचित्र्यमुपपद्यते वासना वैचित्र्यादित्याह । अनादौ हि संसारे बीजांकुरवद्विज्ञानानां वासनानां चान्योन्यं निमित्त-नैमित्तकभावेन वैचित्र्यं न विप्रतिषिध्यते । अपि च अन्वयव्यतिरेकाभ्यां वासनानिमित्तमेव ज्ञानवैचित्र्यमित्यवगम्यते । स्वप्नादिष्वन्तरेणाप्यर्थं वासनानिमित्तस्य ज्ञानवैचित्र्यस्य अभ्युपगम्यमानत्वात् । तस्मादप्यभावो बाह्यार्थस्येति ॥ ...... एवमेतौ ......वैनाशिकपक्षौ .....बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च । शून्यवादिपक्षस्तु सर्व-प्रमाण-विप्रतिषिद्धः ।......।

माधवाचार्यश्च सर्वदर्शन-संग्रहे[1]—

"......माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिक-संज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्वबाह्यशून्यत्व बाह्यार्थानुमेयत्व-बाह्यार्थप्रत्यक्षवादान् आतिष्ठन्ते ।......

चतुः प्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ।
अर्थो ज्ञानान्वितो वैभाषिकेण बहुमन्यते ॥
सौत्रान्तिकेन प्रत्यक्षग्राह्यार्थो न बहिर्मतः ।
आकारसहिता बुद्धिर्योगाचारस्य सम्मता ॥
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ।
रागादि - ज्ञान - सन्तानवासनाच्छेद - सम्भवा ॥
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥"

विद्यालंकार विद्यालये,
पेलियागोडे
ताम्रपर्णिद्वीपे,
२ आग्रहायणे १९८५ विक्रमाब्दे ।

**राहुलः सांकृत्यायनः**

१. सर्वदर्शनसंग्रहे, बौद्धदर्शनम् ।

# अभिधर्मकोशः ।

## प्रथमकोशस्थानम् ।

### धातुनिर्देशः ।

**यः सर्वथा सर्वहतान्धकारः**
**संसारपंकाज्जगदुज्जहार ।**
**तस्मै नमस्कृत्य यथार्थशास्त्रे**
**शास्त्रं प्रवक्ष्याम्यभिधर्मकोशम् ॥१॥**

यः तथागतः सर्वाज्ञानविरहितः (कारुण्यात्) लोकं जन्ममरणकर्दमात् उद्धृतवान् । तस्मै सत्योपदेष्ट्रे नमो विधाय अभिधर्मकोशाभिधं शास्त्रं कथयिष्यामि ।

**प्रज्ञाऽमला सानुचराऽभिधर्मः;**

मलरहिता ( = आस्रवरहिता = अनास्रवा—अभिधर्म० ५।३५ ) स्कन्धादिपरिवारसहिता प्रज्ञा (२।२४; ७।१) अभिधर्म इत्युच्यते । अभिमुखो धर्मः प्रधानो धर्मः निर्वाणमिति ।

**तत्प्राप्तये यापि च यच्च शास्त्रम् । तस्याऽर्थतोऽस्मिन् [सम] नु प्रवेशात्, [सो वा] अयो [ऽस्ये] त्यभिधर्मकोशः ॥२॥**

तस्या अनास्रवप्रज्ञायाः (अभिधर्मरूपायाः) प्राप्तये लोके या कापि प्रज्ञा, यत्किमपि शास्त्रं वा, तस्य सर्वस्य सारतः न तु शब्दतोऽस्मिन् ग्रन्थे संग्रहोऽस्त्यत एवायं यथार्थनामाऽभिधर्मकोशो नाम ग्रन्थः ।

**धर्माणां प्रविचयमन्तरेण नास्ति, क्लेशानां यत उपशान्तयेऽभ्युपायः। क्लेशैश्च भ्रमति भवार्णवेऽत्र लोकः, तद्धेतोरत उदितः किलैष शास्त्रा ॥३॥**

यस्माद्धि स्कन्धादिपदार्थानां ( =धर्माणां ) संस्कृताऽसंस्कृतास्रवानास्रवभेदभिन्नानां यथार्थज्ञानं विना रागादीनां मलानां ( =क्लेशानां ) प्रशमनार्थं अन्य उपायो नाऽस्ति। कारणभूतैः क्लेशैरेव लोकोऽस्मिन् भवसमुद्रे भ्रमति, पुनः पुनः जन्ममरणादिप्रबन्धे बध्यते। अतः तस्य धर्मस्य अवबोधार्थं एव एषोऽभिधर्मः शास्त्रा उपदेष्ट्रा तथागतेन प्रोक्तः।

**सास्रवाऽनास्रवा धर्माः,**

अवबोधोपयोगिनः पदार्थाः (=धर्माः) द्विविधाः—
आस्रव (मल) सहिताः, आस्रवरहिताः (परिशुद्धाः) च।

**संस्कृता मार्गवर्जिताः।**

**सास्रवा आस्रवास्तेषु यस्मात्समनुशेरते ॥४॥**

मार्गसत्यं त्यक्त्वा अन्ये सर्वे हेतु-प्रत्यय-जनिताः (=संस्कृताः) धर्माः सास्रवाः। कुत इमे सास्रवाः? यतः तेषु धर्मेषु आस्रवा रागादयो मला आश्रयं उपगृह्णन्ति, तेषामाश्रयेण पुष्टिं वा लभन्ते। इत्थं आस्रवाणां (=रागादीनां) आर्द्रपट इव रजस आश्रयप्रदानात् रूपादयः सास्रवा उच्यन्ते।

**अनास्रवा मार्गसत्यं, त्रिविधं चाऽप्यसंस्कृतम्।**

मार्गसत्यं, त्रिविधं च असंस्कृतं अनास्रवधर्मेषु।

**आकाशं द्वौ निरोधौ च;**

तत्र आकाशं, प्रतिसंख्यानिरोधः, अप्रतिसंख्यानिरोधश्चेति त्रयं, सर्व इमे त्रयो धर्मा असंस्कृताः, हेतुं प्रत्ययं विनैव आत्मलाभवन्तः।

**तत्राऽऽकाशं अनावृतिः ॥५॥**

तत्र असंस्कृतधर्मेषु त्रिषु प्रथमं परिगणितं आकाशं अनावरणस्वरूपम्। स्वयं नान्यैर्धर्मैः आव्रियते, न चाऽऽन्यान् आवृणोतीति।

**प्रतिसंख्या-निरोधो यो विसंयोगः पृथक् पृथक् ।**

सर्वेषां सास्रवाणां धर्माणां पृथक् पृथक् यो वियोगः, स प्रतिसंख्यानिरोधः । प्रतिसंख्या हि प्रज्ञा, तया हेतुभूतयाऽयं निरोधो भवतीति प्रतिसंख्यानिरोधः ।

**उत्पादाऽत्यन्तविघ्नोऽन्यो निरोधोऽप्रतिसंख्यया ॥६॥**

धर्माणां उत्पत्तेरत्यन्तं विरोधी योऽन्यो स्वरूपवियोगः, स अप्रतिसंख्यानिरोधः । एकस्मिन् हि रूपे यदा चक्षुर्मनश्च व्यासक्ते, तदा शब्दस्पर्शगन्धादयोऽन्येऽगृहीता एव प्रत्युत्पन्नात् अतीतं ( निरोधगतिं ) यन्ति, एकस्मिन् समयेऽनेकविज्ञानोत्पादस्यासम्भवात्, सत्स्वपि श्रोत्र-काय-घ्राणादिषु न शब्दादीनां प्रतिसंख्यानं, इत्थं अप्रतिसंख्याय ( = अपरिज्ञाय ) एव तेषां निरोधः ।

**ते पुनः संस्कृता धर्मा रूपादि-स्कन्ध-पञ्चकम् ।**

उपरि उद्दिष्टाः संस्कृता धर्माः पंचधा विभक्ताः—रूपस्कन्धः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, विज्ञानस्कन्धश्चेति । सम्भूय = समागम्य = अन्योन्यमपेक्ष्य, कृताः = जनिताः ( जायमाना जनिष्यमाणा वा ) ( न हि एकप्रत्ययजनिताः ) इति संस्कृताः ।

**त एवाऽध्वा कथावस्तु सनिःसाराः सवस्तुकाः ॥७॥**

त एव संस्कृता धर्माः पिटके अध्व-कथावस्तु-सनिःसार-सवस्तुक पदैरुच्यन्ते । तद्यथा—"तीनि इमानि भिक्खवे कथावत्थूनि । कतमानि तीनि ? अतीतं वा भिक्खवे, अद्धानं आरब्भ कथं कथेय्य । अनागतं ''। पच्चुप्पन्नं ''" ( अंगुत्तर निकाय ३। ७। ७ ) "एवमिदं दीघमद्धानं सन्धावितं संसरितं मामं चेव तुम्हाकं च" ( अंगु० ४। १। १ )। "यस्मा च भिक्खवे, अत्थि लोको निस्सरणं" ( अ० ३। ११। २ )।

**ये सास्रवा उपादानस्कन्धास्ते;**

तेषु संस्कृतेषु धर्मेषु ये सास्रवाः (=समलाः ) त उपादानस्कन्धाः समुच्यन्ते । उपादानं क्लेशः, तेभ्य उत्पन्नाः स्कन्धा उपादान-स्कन्धाः, क्लेशं प्रतीत्य उत्पन्ना इति ।

**सरणा अपि।**

त एव पिटके सरणा अप्युच्यन्ते। रणो युद्धं, तद्वत् स्व-पर-दुःखप्रदत्त्वात् सरणा इति।

**दुःखं समुदयो लोको दृष्टिस्थानं भवश्च ते ॥८॥**

दुःखं, समुदयः, लोकः, दृष्टिस्थानं, भव इत्यपि तेषामेव पर्यायाः पठ्यन्ते। आर्याणां (= अर्हतादीनां) प्रतिकूलवेदनीयत्वाद् दुःखं, दुःखहेतुत्वात् समुदय इति। "लुज्जतीति खो भिक्खु, तस्मा लोकोति वुच्चति" (संयुत्तनिकाये, ४।१।८।६)। यावता आवुसो, दिट्ठिट्ठानं... तं अहं जानामि" (अंगु० १०।१०।७)। "सब्बे भवा अनिच्चा दुक्खा विपरिणामधम्मा" (अंगु० ४।१६।५)

**रूपं पंचेन्द्रियाण्यर्थाः पंचाऽविज्ञप्तिरेव च।**

चक्षुः-श्रोत्र-घ्राण-जिह्वा-कायेति पंच इन्द्रियाणि; रूप-शब्द-गन्ध-रस-स्प्रष्टव्यानीति पंच इन्द्रियार्थाः (= विषयाः = आलम्बनानि); पंच अविज्ञप्तयश्चेति पंचदशभेदो रूपस्कन्धः।

**तद्विज्ञानाऽऽश्रया रूपप्रसादाश्चक्षुरादयः ॥ ६ ॥**

तेषां चक्षुरादीनां विज्ञानानां आश्रया आधारभूताः; रूपाणि च तानि प्रसादाश्चेति रूपप्रसादाः। प्रसादग्रहणं इन्द्रियग्राह्यवस्तु-व्यतिरिक्तस्य रूपप्रसादस्य ज्ञापनार्थम्। इत्थं चक्षुर्विज्ञानादीनां आश्रया रूपप्रसादाश्च सन्ति चक्षुरादयः।

**रूपं द्विधा विंशतिधा;**

रूपं (= चक्षुर्विषयः) द्विविधं-वर्णः (नील-लोहित-पीतावदाताः) संस्थानं (आकृतिः--वर्तुल-गोलो-न्नता-ऽवनतरूपा)। पुनः तद् विंशतिविधं,--अष्टा आकृतयः-दीर्घ-ह्रस्व-वर्तुल-परिमण्डलोन्नता-ऽवनत-शातविशाताः। चत्वारः प्रधानवर्णाः पूर्वोक्ताः नीलादयः, अष्टावन्ये--मेघ-वाष्प-रजो-महिका-छाया-ऽऽतपा-ऽऽलोक-तमांसि। तत्र महिका पृथिव्या जलाद्वा नीहाररूपेण उद्गच्छति; आतप उष्ण-प्रकाशः सूर्यस्य। आलोकः शीतप्रकाशः इन्दोः।

**[ शब्दोऽष्टधा भवेत् ];**

शब्दोऽष्टविधः । तद्यथा--( १ ) उपात्तमहाभूतहेतुकः ( हस्त-वागादीन्द्रियजः ); ( २ ) अनुपात्तमहाभूतहेतुकः (ऋद्ध्या बाह्य-मनुष्याकृतिनिर्माणपुरस्सरो हस्त-वाक्छब्दः; (३) सत्त्वाख्यः (सत्त्वोऽयमिति ज्ञापकः ); (४) असत्त्वाख्यः ( असत्त्वानां वायुवनस्पत्यादीनां सन्तानैर्जातः ); (५-८) त इमे प्रत्येकं मनोज्ञा-ऽमनोज्ञभेदेन भिन्ना अष्टधा भवन्ति ।

रसः ।

षोढा;

रसः षड्विधः--मधुरा-ऽम्ल-लवण-कटु-कषाय-तिक्तभेदात् ।

[ गन्धश्चतुर्धा;

सुगन्ध-दुर्गन्धो-त्कटा-ऽनुत्कटभेदात् ।

स्प्रष्टव्यं एकादशात्मिकम् ] ॥१०॥

स्प्रष्टव्यं कायेन्द्रिय-( त्वगिन्द्रिय ) ग्राह्यं एकादशविधम् । पृथिव्य-ऽप्-तेजो-वायु-स्पर्शाः, श्लक्ष्ण-(मृदु) कर्कश-गुरुत्व-लघुत्व-शीत-बुभुक्षा-पिपासाश्चेति ।

विक्षिप्ताचित्तकस्यापि योऽनुबन्धः शुभाशुभः ।
महाभूतान्युपादाय सा ह्यविज्ञप्तिरुच्यते[१] ॥११॥

अविज्ञप्तिः इदानीं वक्तव्या । विक्षिप्तश्च अचित्तकश्च विक्षिप्ता-चित्तकः । विक्षिप्तचित्तः पुद्गलः विक्षिप्तः । नास्ति चित्तं अस्य इति अचित्तकः अथवा यस्य (निरोधरादि समापत्तिषु २।४२) चित्तचैत्ता निरुद्धाः । तस्य विक्षिप्ताचित्तकस्य यः कुशलाकुशलोऽव्याकृतो धर्मः महाभूतहेतुकः नित्यप्रवाहयुक्तः सैव अविज्ञप्तिः ।

भूतानि पृथिवीधातुरप्तेजोवायुधातवः ।

---

१. अत्र तु पादसङ्कलने पूसिन् महोदयः फ्रेञ्चपण्डितः उदाजहार—यत् समय-प्रदीपिकायां अविज्ञप्तिलक्षणज्ञापिका भिन्नैवास्ति कारिका, यशोमित्रस्य स्फुटार्थाभिधायां व्याख्यायामस्यास्तु विद्यते समुल्लेखः । सेयम्—

कृतेऽपि विसभागेऽपि चित्ते चित्तात्यये च यत् ।
व्याकृताऽप्रतिघं रूपं सा ह्यविज्ञप्तिरिष्यते ॥

पृथिवीधातुः, आपोधातुः, तेजोधातुः, वायुर्धातुरिति चत्वारि भूतानि। धारणाद्धातवः। सर्वेषां अन्यरूपाणां आश्रयत्वात् महाभूतानीत्यप्येषां संज्ञा।

**धृत्यादि-कर्मसंसिद्धाः खर-स्नेहो-ष्णते-रणाः ॥१२॥**

धृतिः स्थैर्यं, संग्रहः = समूहापादनं, पक्तिः = पाकक्रिया, व्यूहनं = वृद्धिः = प्रसर्पणमिति। एभिः धृति-संग्रह-पक्ति-व्यूहनक्रियाभिः यथासंख्यं पृथिवी-जल-तेजो-वायूनां चतुर्णां धातूनां सिद्धिर्भवति। तत्र पृथिवीधातुः खर ( = कठिन ) स्वभावः, आपोधातुः स्नेहन ( आर्द्रीकरण ) स्वभावः, तेजोधातुः उष्णतास्वभावः, वायुधातुः ईरण ( = गति ) स्वभावः।

**पृथिवी वर्ण-संस्थानं उच्यते लोकसंज्ञया।**

लोकसंज्ञया या पृथिवीत्युच्यते सा वर्ण-संस्थानमेव। वर्णा लोहितादयः, संस्थानानि दीर्घादीनि। पृथिवी वर्ण-संस्थानतो न भिन्ना, तत्स्वरूपैव।

**आपस्तेजश्च ;**

पृथिवीवत् आपोधातुः, तेजोधातुश्च वर्ण-संस्थानस्वरूपौ।

**वायुस्तु धातुरेव तथाऽपि च ॥१३॥**

तु शब्दः शंकास्थानपरिवर्जनार्थः। वायुधातुरपि पृथिव्यादिवत् वर्ण-संस्थानरूपः। अतएव लोके कृष्णो वायुः, चक्ररूपो वायुरिति व्यवहारः। सर्वमिदं रूपस्कन्धान्तर्गतम्। तत्र रूपविषय उक्तं भगवता--"रुप्पतीति खो भिक्खवे, तस्मा रूपं ति वुच्चति। केन रुप्पति ? सीतेन..." ( संयुत्त० ३।१।८।७ )। अत्र 'रुप्पति' लुप्यते बाध्यत इत्यर्थः। तथाहि अट्ठकवग्गे--

"तस्स कामयमानस्स छन्दजातस्स जन्तुनो।
ते कामा परिहायन्ति सल्लविद्धो व रुप्पति॥"

( सुत्तनिपात ४।१ )

'रुप्पति' संपीड्यते बाध्यत इत्यर्थः।

**इन्द्रियार्थास्त एवेष्टा [ दशायतन-धातवः ]।**

तानि एव इन्द्रियाणि विषयाश्च, दश आयतनानि दश धातव इत्युच्यन्ते । दश आयतनानि-चक्षुरायतनं, रूपायतनं, श्रोत्रायतनं, शब्दायतनं, घ्राणायतनं, गन्धायतनं, जिह्वायतनं रसायतनं, कायायतनं, स्प्रष्टव्यायतनमिति । दश धातवश्च–चक्षुर्धातुः, रूपधातुः ··· कायधातुः, स्प्रष्टव्यधातुश्चेति ।

**वेदनाऽनुभवः;**

अनुभूतिः ( = उपभोगः ) एव वेदनास्कन्धः ।

**संज्ञा निमित्तोद्ग्रहणात्मिका ॥१४॥**

निमित्तं--नीलपीत-दीर्घह्रस्व-पुरुषस्त्री-शत्रुमित्र-शाताऽशात ( परिच्छेद ) स्वभावाः । तेषां उद्ग्रहणं ( मनसिधारणं ) एव स्वरूपं संज्ञास्कन्धस्य ।

**[ संस्कारस्कन्ध ] श्चतुर्भ्योऽन्ये [ संस्काराः ];**

रूप-वेदना-संज्ञा-विज्ञानेभ्यश्चतुर्भ्यः स्कन्धेभ्यो व्यतिरिक्ताः संस्काराः संस्कारस्कन्धः ।

**त इमे [ त्रयः ] ।**

**धर्मा-ऽऽयतन-धात्वाख्याः सहाऽविज्ञप्त्य-संस्कृतैः ॥१५॥**

अविज्ञप्तिः, असंस्कृतं, धर्मायतनधातुश्चेति इमे त्रयः संस्कारस्कन्धभेदाः ।

अविज्ञप्तिः, वेदनास्कन्धः, संज्ञास्कन्धः, संस्कारस्कन्धः, आकाशं, प्रतिसंख्यानिरोधः, अप्रतिसंख्यानिरोध इति सप्त द्रव्याणि । सप्तद्रव्यकश्च धर्मधातुः ।

**विज्ञानं प्रतिविज्ञप्तिः;**

विषयं विषयं प्रति उपलब्धिरेव विज्ञानस्कन्धः । स च षड्विधः—चक्षुर्विज्ञानं, श्रोत्रविज्ञानं, घ्राणविज्ञानं, जिह्वाविज्ञानं, कायविज्ञानं, मनोविज्ञानं च ।

**मन आयतनं च तत् ।**

मन इन्द्रियमेव मन आयतनम् ।

**[ मताः ते धातवः सप्त ][1] षड्विज्ञानान्यथो मनः ॥१६॥**

षड् विज्ञानकायाः—चक्षुर्विज्ञान मनोविज्ञानधातवः, सप्तमश्च मनोधातुरिति सप्त प्रसिद्धा धातवः।

**षण्णां अनन्तराऽतीतं विज्ञानं यद्धि तन्मनः।**

चक्षुः-श्रोत्र-घ्राण-जिह्वा-काय-मनोविज्ञानानां अनन्तरं अतीतं (पूर्वकालिकं) च यद्विज्ञानं तदेव मन इत्युच्यते। यथा एक एव पुरुषः पिताऽपि पुत्रोऽपि; एकमेव बीजं धान्यमपि बीजमपि।

**षष्ठाश्रयप्रसिद्ध्यर्थं;**

चक्षुर्विज्ञानादीनां पंचानां सन्ति चक्षुरादयः पंच आश्रयाः। षष्ठस्य मनोविज्ञानस्य तु न कोऽप्याश्रयः प्रसिद्धः, तदर्थं मनसो ग्रहणम्।

**धातवोऽष्टादश स्मृताः ॥१७॥**

अष्टादश धातवः परिगण्यन्ते। षट् चक्षुरादीनि इन्द्रियाणि, षट् चक्षुर्विज्ञानादीनि विज्ञानानि, षट् रूपादयो विषयाः (आलम्बनानि) च। सर्वे संस्कृतधर्माः स्कन्धेषु (१।७), सर्वे साम्रवा धर्मा उपादानस्कन्धेषु १।८) संगृहीताः। सर्वे च धर्मा आयतनेषु धातुषु च संगृहीताः।

**एकेन स्कन्धा-ऽऽयतन-धातुना सर्वसंग्रहः।**

स्कन्धेषु आयतनेषु धातुषु चेति त्रिषु सर्व एव धर्माः संग्रहं गताः।

**परभाववियुक्तत्वात् स्वभावेनैव संग्रहः ॥१८॥**

एको धर्मः परधर्मेण विसदृशः, अत एव स्वसदृशेन धर्माणां संग्रहोऽत्र कृतः। तथाहि चक्षुरिन्द्रियं रूपस्कन्धे संग्रहीतं, यतो रूपं स्वभावेन तत्सदृशम्। चक्षुषां वेदनया तादृशं सादृश्यं नास्ति तेन वेदनास्कन्धेऽस्या संग्रहः।

**जाति-गोचर-विज्ञानसामान्यात् एकधातुता।**
**द्वित्वेऽपि चक्षुरादीनां शोभार्थं तु द्वयोद्भवः ॥१९॥**

---

१. अत्र पूसिन्महोदयस्य पाठः—सप्तधातवश्चमतम्' इति।

यद्यपि चक्षुरादिगोलकानां द्वित्वं दृश्यते तथापि एकजाति ( = स्व-भाव ) तया, एकगोचर ( = कार्यक्षेत्र = आलम्बन) तया, एकविज्ञान-( = कार्य ) तया तेषां चक्षुरादीनां एकधातुता एव सिद्धा भवति। गोलकद्वयोत्पत्तिस्तु शोभार्था।

**राश्या-ऽऽयद्वार-गोत्रार्थाः स्कन्धा-ऽऽयतन-धातवः।**

स्कन्धोऽत्र राशि ( = समूह ) वत्, आयतनं आगमनद्वारवत्, धातुश्च आकरवत्। सूत्रे च—

"यं किंचि रूपं अतीतानागतपच्चुप्पन्नं अज्झत्तिकं... हीनं पणीतं दूरं वा अन्तिकं वा तं एकज्झं अभिसंखिपित्वा, अयं वुच्चति रूपक्खन्धो" (संयु० १४। २)

**मोहे-न्द्रिय-रुचित्रैधात् स्कन्धादित्रयदेशना ॥२०॥**

मोहः ( = सम्मोहः = भ्रमः ) त्रिविधः—चित्त-रूप-चैत्तरूपेषु क्रमेण अयथावद्दर्शनात्। प्रज्ञेन्द्रियं ( इन्द्रियं ) अपि त्रिविधं, तीक्ष्ण-मध्य-मृद्विन्द्रियभेदात्। रुचिः अधिमोक्षाऽपि त्रिविधः संक्षिप्त-मध्य-विस्तरभेदात्; तत्र शमथचरितानां संक्षिप्ता रुचिः, शमथविपश्यना-चरितानां मध्या, विपश्यना-चरितानां विस्तीर्णा च।

इत्थं मोहे-न्द्रिय-रुचीनां त्रैविध्यात् स्कन्धा- ऽऽयतन-धातूनां त्रैविध्यकथनम्। अत्रापि हि तीक्ष्ण-मध्य-मृद्वादिभेदाः।

**विवाद-मूल-संसार-[ कारणात् ] क्रम-कारणात्।**
**[ चैत्तेभ्यो वेदनासंज्ञे पृथक् स्कन्धौ व्यवस्थिते ] ॥२१॥**

कामेषु दृष्टिषु च अभिष्वंगो लिप्तभावः विवाद-मूलं संसारः ( = जन्ममरणं), तस्य कारणात्; स्कन्धानां क्रमस्य कारणात् (१।२२) च, चैत्तेभ्यो धर्मेभ्यो वेदनास्कन्ध-संज्ञास्कन्धयोः पृथक् कथनम्।

**[ स्कन्धेष्वसंस्कृतं नोक्तं ] अर्थाऽयोगात्;**

(असंस्कृतं निर्वाणं, निरोधद्वयं च ) न अर्थः, यतो रूप-विज्ञानादिषु तस्य नान्तर्भावः। 'राशिः' ( राशीकरणं ) हि स्कन्धलक्षणं, तच्चाऽत्र न संघटते, अतः षष्ठस्कन्धोऽयमित्यपि न वक्तुं शक्यते। इत्थं अर्थेषु असंगृहीतत्वात्, असंस्कृतं न स्कन्धेषु परिगणितम्।

क्रमः पुनः।

**यथौदारिक संक्लेश-भाजनाद्यर्थ-धातुतः ॥ २२ ॥**

सर्वेषु स्कन्धेषु रूपस्कन्ध औदारिकतमः ( = स्थूलतमः ) अतस्तस्य प्रथमग्रहणम्। अरूपिस्कन्धेषु वेदना-संज्ञादिषु वेदना औदारिकतमा--हस्ते मे वेदना पादे मे वेदनेति स्फुटा, अतो वेदनास्कन्धो द्वितीयः। अवशिष्टेषु संज्ञा-संस्कार-विज्ञानस्कन्धेषु यथाक्रमं औदारिकत्वे तर-तम-भावः। इत्थं औदारिकतरतमभावेन स्कन्धानां क्रमो निर्दिष्टः।

एतादृशक्रमसन्निवेशेऽस्त्यन्यदपि कारणं। तथा हि संक्लेशे ( = रागे ) ऽपि स्त्रीपुरुषयोः प्रथमं रूप एव रागो जायते, ततः क्रमेण वेदनासंज्ञाद्यन्येषु।

अन्यच्च, भाजन-भोजन-व्यंजन-पक्तृ-भोक्तृभूता हि रूपादयः स्कन्धाः, अतो भाजनादि-लौकिकक्रमेणैव एषां निर्देशः।

धातुतः। रूपेण प्रभावितो हि कामधातुः, वेदनया ध्यानानि (रूपधातुः); आरूप्य आद्यानि त्रीणि स्थानानि संज्ञया प्रभावितानि, चतुर्थं भवाग्रं (नैव संज्ञा नाऽसंज्ञायतनं संस्कारमात्रेण प्रभावितम्।

चतस्रो हि विज्ञानस्थितयः—रूपोपगा विज्ञानस्थितिः कामधातौ, वेदनोपगा विज्ञानस्थितिः रूपधातौ चतुर्षु ध्यानेषु, संज्ञोपगा त्रिषु आरूप्येषु, संस्कारोपगा भवाग्रे। इत्थं धातुक्रमेणाऽपि स्कन्धानां तथा परिसंख्यानं उपयुक्ततरम्।

**पंचाग्र्या वर्त्तमानाऽर्थ्यात्;**

चक्षुरादीनि पञ्च मनसः प्रथमं परिसंख्यातानि, तानि हि वर्त्तमानविषयाणि मनस्तु न तथा।

**भौतिकाऽर्थ्याच्चतुष्टयम्।**

प्रथमं चतुष्टयं चक्षुः-श्रोत्र-घ्राण-जिह्वेति भौतिकविषयग्रहणात्, उपादायरूपविषयमित्युक्तपूर्वम्। कायस्य तु विषयोऽनियतः, कदाचित् भूतानि कदाचिच्च भौतिकम्।

**दूरा-ऽऽशुतरवृत्त्याऽन्ये;**

चक्षुः-श्रोत्र-घ्राण-जिह्वेति चतुर्षु इन्द्रियेषु विषयोपादानकाले सन्निकर्षः क्रमेण दूरतम-दूरतर-दूर-समीपक्रमेण दृश्यते। चक्षुर्हि असंख्ययोजनदूरस्थमपि तारकादि पश्यति, जिह्वा तु स्वोपरि निक्षिप्तं एव अनुस्वदते। इत्थं दूराऽपेक्षयाऽप्ययं क्रमः साधुः। चक्षुर्हि रूपग्रहणे आशुतमं, जिह्वा च मन्दा, एवं आशुतरक्रमेणाऽपि।

अथवा स्वा [ ऽऽश्रयं ] क्रमः[1] ॥२३॥

अथवा स्वस्वाऽऽश्रया ( गोलक ) ऽनुसारं अयं क्रमः। चक्षुष आश्रयः चक्षुर्गोलकं शरीरे सर्वोपरिभागे, तदधः श्रोत्रं, तदधो घ्राणाश्रयः ( =नासिका ), सर्वाधश्च जिह्वाश्रयो मुखे।

विशेषणार्थं प्राधान्यात् बह्वग्र-धर्मसंग्रहात्।
रूपायतनमेवैकं एकं च धर्मसंज्ञकम् ॥२४॥

अन्योन्यस्य भेदापादनार्थं, मुख्यभावाच्चाऽस्य रूपायतनमित्येकं आयतनं उक्तम्। बहूनां प्रधानानां धर्माणां चात्र संग्रह इति अन्येभ्यः पृथक् करणार्थं धर्मायतनं पृथगायतनत्वेन परिगृहीतम्।

धर्म-स्कन्धसहस्राण्यशीतिर्यान्यवदन्मुनिः।
तानि वाग् नाम वा, तेषां रूप-संस्कारसंग्रहः ॥२५॥

भगवान् यान् अशीतिसहस्रधर्मस्कन्धान् व्याख्यातवान्, ते वाक्छब्देन नामशब्देन वा व्यवह्रियन्ते। तेषां च संग्रहो रूपस्कन्धे संस्कारस्कन्धे वा भवति, वाचो हि रूपस्कन्धे नाम्नः संस्कारस्कन्धे संग्रहः।

शास्त्रप्रमाण इत्येके;

केचन आचार्या शास्त्रप्रमाणं पिटकप्रमाणं एव धर्मस्कन्धशब्देन व्यवहरन्ति।

स्कन्धादीनां कथैकशः।

अन्ये तु—स्कन्धा-ऽऽयतन-धातु-प्रतीत्यसमुत्पाद-सत्या-ऽऽहार-ध्यान-प्रमाण-ऽऽरूप्य-विमोक्षा-ऽभिभ्वायतन-कृत्स्नायतन-बोधिपक्षिका-

---

१. अत्र पूसिन्महोदयस्य पाठः—'अथवा [यथाश्रयं] क्रमः' × इति।

-ऽभिज्ञा-प्रतिसंवित्-प्रणिधिज्ञाना-ऽरण-संग्रहवस्तु-कर्मपथ-शुभाऽऽ-नापान-स्मृत्यादीनां एकैकाः कथा धर्मस्कन्ध इति ।

**चरित-प्रतिपक्षस्तु धर्मस्कन्धोऽनुवर्णितः ॥२६॥**

तु शब्दः पूर्वोक्तपक्षद्वयनिरासार्थः । राग-द्वेष-मोह-मान-दृष्टि-विचिकित्सादि-चरिता नाना पुद्गलाः तेषां प्रतिपक्षनियामेन भगवता कथितः धर्मस्कन्धः ।

**[ तथाऽन्येपि यथायोगं स्कन्धायतनधातवः ] ।**
**प्रतिपाद्या यथोक्तेषु सुविमृश्य स्वलक्षणम् ॥२७॥**

अन्येऽपि ये केचन स्कन्धा-ऽऽयतन-धातवः तेऽपि एतेष्वेव संगृहीतव्याः । तत्र तेषां तथा प्रतिपादने तेषां स्वकीयं स्वकीयं लक्षणं स्वभावं च विचार्यैव किमपि कर्तव्यम् । तथा हि यत्र स्कन्धस्वभावो राशीकरणरूप उपलभ्यते, तस्य स्कन्धेषु संग्रहः, इत्थमन्यत्रापि । यथा—काय-वाग्विरतिरूपस्वभावत्वात् शीलस्कन्धो रूपस्कन्धे संग्रहीतः । समाधि-प्रज्ञा-विमुक्तिस्कन्धास्तु संस्कारस्कन्धे, तयोः चैतसिकत्वात् । विमुक्तिरधिमोक्षः । विमुक्तिज्ञानदर्शनं तु प्रज्ञा-विशेष एव । अलोभस्वभावानि पृथिव्यप्तेजो-वायुनीलपीतलोहिता-ऽवदातानीति अष्टौ कृत्स्नायतनानि, अतः तेषां धर्मायतने संग्रहः । पंच विमुक्तायतनानि ( अंगुत्तर० ५।३।६ ), विमुक्तेः प्रज्ञाविशेष-त्वात् धर्मायतने संगृहीतानि ।

**[ छिद्रमाकाशधात्वाख्यं ] आलोक-तमसी किल ।**

छिद्रं शून्यं ) आकाशम् । द्वार-गवाक्ष-नासिका-कर्णादिषु छिद्र-रूपेण आकाशधातुरेव । एक आचार्याः तदेव आलोकः तमश्चेति वदन्ति । तेषां नये प्रकाशस्वरूपं आकाशं यथाऽहनि, तमः स्वरूपं यथा निशि ।

**[ विज्ञानधातुर्विज्ञानं सास्रवं ] जन्म-निश्रयः ॥२८॥**

सास्रवं अपरिशुद्धं विज्ञानमेव विज्ञानधातुः । स च जन्मनः ( जातेः ) आश्रयभूतः ।

**सनिदर्शन एकोऽत्र रूपं;**

चक्षुर्विज्ञानभूतोऽत्र एक एव धातुः, तच्च रूपम्। अन्ये तु चक्षुषोऽविषयाः ।

सप्रतिघा दश ।

रूपिणः;

आवरणप्रतिघातेन दश सप्रतिघा धातवः, ते च रूपिण एव ।

अव्याकृता अष्टौ ते रूप-शब्दवर्जिताः ॥२९॥

रूपधातुं शब्दधातुं च त्यक्त्वा शेषा अष्टौ धातवः अव्याकृताः । अष्टौ—पंच चक्षुरादीनि इन्द्रियाणि गन्ध-रस-स्पर्शाश्च । एषां ग्रहणं न कुशले, न च अकुशले भवितुमर्हति, तेनैव इमे अव्याकृताः ।

त्रिधाऽन्ये ;

अन्ये च धातवः त्रिविधाः, कुशला अकुशला उभयभिन्नाः ( अव्याकृताः ) च। तत्र चित्तधातवः ( १। १६ ) कुशलाः कुशलाश्रवसम्बन्धात्, अकुशलाऽऽश्रयसम्बन्धात् त एव अकुशलाः; अन्यत्र उभयभिन्नाः । तथैव धर्मधातौ, रूपधातौ च बोद्धव्यम्।

कामधात्वाप्ताः सर्वे ;

सर्वे एवाष्टादश धातवः कामधातौ संगृहीताः ।

रूपे चतुर्दश ।

विना गन्ध-रस-घ्राण-जिह्वा-विज्ञानधातुभिः ॥३०॥

गन्धादिचतुष्टयं त्यक्त्वा अवशिष्टाः चतुर्दश धातवः रूपधातौ भवन्ति ।

आरूप्याप्ता मनो-धर्म-मनोविज्ञानधातवः ।

आरूप्यधातौ मनोधातुः, धर्मधातुः, मनोविज्ञानधातुश्च भवन्ति। अन्येषां पञ्चदशानां तत्राऽभावः ।

सास्रवाऽनास्रवा एते त्रयः,

इमे च मनो-धर्म-मनोविज्ञानधातवः सास्रवा अनास्रवाः च भवन्ति ।

**शेषास्तु सास्रवाः ॥३१॥**

शेषाः पंचदश धातवः केवलं सास्रवाः (समलाः) एव।

**सवितर्क-विचारा हि पंच विज्ञान-धातवः।**

पंच विज्ञानधातवः (चक्षुर्विज्ञानादिकायविज्ञानान्ताः) सवितर्काः सविचाराश्च भवन्ति।

**अन्त्यास्त्रयः त्रिप्रकाराः;**

अन्त्यास्त्रयः मनो-धर्म-मनोविज्ञानधातवः त्रिविधाः सवितर्क-सविचाराः सवितर्काविचाराः अवितर्कसविचारा इति।

**शेषा उभयवर्जिताः ॥३२॥**

शेषा दश सवितर्क-सविचारेत्युभयवर्जिता अवितर्का अविचारा इत्यर्थः।

**[ निरूपणाऽनुस्मरण-विकल्पात् अविकल्पकाः ]।**

ते निरूपण ( पर्येषण ) विकल्पात् अनुस्मरणविकल्पाच्च अविकल्पकाः सन्ति। विकल्पो वक्ष्यते ( २।३३ )।

**तौ व्यग्रा मानसी प्रज्ञा सर्वैव मानसी स्मृतिः ॥३३॥**

मानसी प्रज्ञा या असमाहिता सा एव निरूपणविकल्पः। सर्वा एव मानसी स्मृतिः समाहिता असमाहिता वा अनुस्मरणविकल्पः।

**सप्त सालम्बनाश्चित्त-धातवः;**

आलम्बनसहिताः सप्त एव धातवः, ते च सन्ति चित्त (विज्ञान) धातवः।

**अर्द्धं च धर्मतः।**

धर्मधातोरेको भागोऽपि आलम्बनसहितः ( २।२३ )। दश अन्ये धातवो धर्मधातोश्चावशिष्टोंशो निरालम्बनाः।

**नवाऽनुपात्तास्ते चाष्टौ शब्दश्च;**

सप्तविज्ञानधातवः, धर्मार्द्धं इति अष्टौ शब्दश्चेति नव अनुपात्ता निरालम्बनाः।

अन्ये नव द्विधा ॥३४॥

अन्ये नव पंचेन्द्रियाणि रूपादयश्चत्वारो विषयाश्च द्विविधाः सन्ति, सालम्बनाः (अनुपाताः) निरालम्बनाः ( निरनुपाताः ) ।

**स्प्रष्टव्यं द्विविधं;**

स्प्रष्टव्यं ( १।१२ ) द्विप्रकारकं भौतिकं अभौतिकं च । तत्र पृथिव्यादि चतुष्टयं भौतिकं, खरादिचतुष्टयं अभौतिकं च ।

**शेषा रूपिणो नव भौतिकाः ।**

अवशिष्टा नव रूपिणो धातवः पंचेन्द्रियाणि स्प्रष्टव्यवर्जिता अन्ये विषयाश्च केवलं भौतिकाः ।

**धर्मधात्वेक देशश्च ।**

धर्मधातोरेकोंऽशो भौतिकः ।

**संचिता दशरूपिणः ॥३५॥**

चक्षुरादीनि पंच इन्द्रियाणि रूपादयः पञ्च तेषां विषयाः चेति दश धातवो भौतिकाः (रूपिणः) परमाणुसंघाताः सन्ति । (२।२२)

**छिनत्ति छिद्यते चैव बाह्यं धातुचष्टयम् ।**
**दह्यते तुलयत्येवं; विवादो दग्धृतुल्ययोः ॥३६॥**

बाह्य धातुचतुष्टयं—रूप-गंध-रस-स्पर्शाः परशुदार्वादिसंज्ञका अन्यं छिन्दन्ति । स्वयं चान्यैः प्रतिहताः छिद्यन्ते । ते हि ज्वलिता भवन्ति, तोलनार्हाणि: तेजसा दह्यते गुरुत्वाच्च तोल्यते । दग्धृ-तल्य-विषये च विवादः (अनिश्चयः) । केचित् वदन्ति तेजोधातुरेव दग्धा । गुरुत्वमेव च तुल्यम् ।

**विपाकजौपचयिकाः पंचाध्यात्मं;**

पंच आध्यात्मिकाः धातवः ( चक्षुरादयः ) पूर्वकर्मविपाक-हेतुना जाताः; आहाराद्युपचयत उपचयिका सचयन-स्वभावाः ।

**[ विपाकजः ।**

**न शब्दः ];**

शब्दधातुर्न विपाकजातः केवलमुपचयिक एवास्ति।

**अप्रतिघा अष्टौ नैष्यन्दिकविपाकजाः ॥३७॥**

सप्त विज्ञानधातवो धर्मधातुश्चेत्यष्टौ अप्रतिघाः प्रतिघाताऽनर्हाः, नैष्यन्दिकानां स्वभाव-धर्मसर्वगतानां हेतूनां (न तु कर्मजहेतूनां) विपाकेन जातास्सन्ति।

**त्रिधान्ये ;**

अन्ये धातवः चत्वारो रूप-गन्ध-रस-स्पर्शाः, त्रिविधाः, विपाकजा अप्रतिघा औपचयिकाश्च सन्ति।

**द्रव्यवानेकः ;**

एको धर्मधातुरेवाऽस्ति वस्तुसत्यं सारवत्त्वात् अविनाशित्वात्।

**क्षणिकाश्चरमास्त्रयः।**

अन्तिमाः त्रयः मनो-धर्म-मनोविज्ञानधातवः क्षणिकाः।

**चक्षु-र्विज्ञानधात्वोः स्यात् पृथक् लाभः सहापि च ॥३८॥**

चक्षुर्धातुः चक्षुर्विज्ञानधातुश्च एकत्राऽपि लभ्येते, पृथगपि। कामधातौ गर्भाद्यवस्थायां चक्षुर्विज्ञानमात्रम्, द्वितीयादि त्रिषु ध्यानेषु च चक्षुर्विज्ञानमात्रेण साक्षात्करोति। आरूप्यधातोः च्युतः सत्व उभयसंयुक्तो भवति; अन्तराभविका अपि अविकलेन्द्रियाः।

**द्वादशाऽध्यात्मिका रूपादिवर्ज्याः,**

षट् चक्षुरादीनीन्द्रियाणि, चक्षुर्विज्ञानादीनि षट् विज्ञानानि चेति द्वादश धातवोऽध्यात्मिकाः। रूप-शब्द-गन्ध-रस-स्पर्श-धर्माः षड् बाह्यधातवः। आत्मा हि चित्तं, उक्तं च तथा भगवता—

"आत्मना हि सुदान्तेन स्वर्गं प्राप्नोति पंडितः।' अपि च
"चित्तस्य दमनं साधु चित्तं दान्तं सुखावहम्"।

**धर्मसंज्ञकः।**

**सभागः;**

धर्मधातुर्हि सभागः, नियतो मनस एवेति।

**तत्सभागोऽपि शेषो**

अवशिष्टा धातवः सभागा अपि सन्ति तत्सभागा अपि ।

**यो ह्यस्वकर्मकृत् ॥ ३९ ॥**

यो हि धातुः न स्वीयं कर्म करोति, स तत्सभागः, विपरीतः सभागः । सभागः सहभजनं, इन्द्रिय-विषय-विज्ञानानां परस्परं भजनं (= सेवनम्), तेन समः केषुचिदंशेषु तत्सभागः ।

**दश भावनया हेयाः पंच चान्त्यास्त्रयस्त्रिधा ।**

दश रूपिणः (विषयेन्द्रियाणि), पंच विज्ञानानि (चक्षुर्विज्ञानादीनि) भावनातः (ध्यानादिभिः) हेयानि, (= अपनेतव्यानि)। अन्त्याः त्रयः मनो-धर्म-मनोविज्ञान-धातवः त्रिधा—दर्शनहेयाः, भावनाहेयाः, अहेयाः च ।

**न दृष्टिहेयं अक्लिष्टं न रूपं नाऽप्यषष्ठजम् ॥४०॥**

कामावचरं (कामधातुस्थेभ्यः) यावद्भवाग्रिकं पृथग्जनत्वं नव भूमिकं, तच्च अक्लिष्टं; सर्वं हि सास्रवं अक्लिष्टं नवम एव विमुक्तिमार्गे प्रहीयते; तच्च अक्लिष्टं नाऽस्ति दृष्ट्या हेयम् । रूपं, कायिकं वाचिकं कर्मापि न दृष्टिहेयम् ।

षष्ठं मनः, अषष्ठानि चक्षुरादीनि, तेभ्यो जातानि तेषामेव विज्ञानानि (= चक्षुर्विज्ञानादीनि) पंच अपि न दृष्टिहेयानि ।

**चक्षुश्च धर्मधातोश्च प्रदेशो दृष्टिरष्टधा ।**

चक्षुः, धर्मधातोः प्रदेशः—चक्षुर्विज्ञानादीनि षट्, मनश्च, इत्यष्टौ दृष्टिशब्दवाच्याः ।

**पञ्चविज्ञानसहजा धीर्न दृष्टिरतीरणात् ॥४१॥**

पंचभिः चक्षुरादिविज्ञानैस्सह जाता प्रज्ञा (= धीः) न दृष्टिः । संतीरणं विषयोपनिध्यानपूर्वकं निश्चयाकर्षणं (निमित्तग्रहणं), तद्भिन्नं असंतीरणं, तदेव अतीरणम् । अतीरणात् निमित्ताग्रहणात् सा प्रज्ञा न दृष्टिः ।

**चक्षुः पश्यति रूपाणि सभागं न तदाश्रितम् ।**
**विज्ञानं दृश्यते, रूपं न किलान्तरितं यतः ॥४२॥**

सभागं चक्षू रूपाणि पश्यति, किन्तु चक्षुः स्वाश्रितं विज्ञानं न

पश्यतीति पक्षः समीचीनः। विज्ञानमेव दृश्यते न तावद् रूपं, यतो रूपं अन्तर्हितं चक्षुषो ऽविषयम्—इदं तु वैभाषिकमतं न युक्तम्।

**उभाभ्यामपि ( चक्षुर्भ्यां दर्शनं शुद्धदर्शनात् )।**

एकेनाऽपि उभाभ्यामपि चक्षुर्भ्यां दर्शनं भवति, तत्र द्वाभ्यां जातं शुद्धतरम्।

**[अप्राप्तोर्थान्यक्षि-मनः श्रोत्राणि] त्रयमन्यथा ॥४३॥**

नेत्र मनः-श्रोत्रं एतत् त्रयं तु अर्थान् ( = विषयान् ) अप्राप्य ( दूरत एव ) गृह्णाति। अन्यत् त्रयं घ्राण-जिह्वा-कायं अर्थं संश्लिष्य एव।

**घ्राणादिभिस्त्रिभिस्तुल्यविषयग्रहणं मतम्।**

घ्राण-जिह्वा-कायेति त्रिभिस्तु आत्मपरमाणुतुल्यस्य एव विषयस्य ग्रहणं भवति।

**चरमस्याश्रयोऽतीतः पंचानां सहजश्च तैः ॥४४**

षष्ठस्य मनो धातोः आश्रयोऽतीतो विषयः, अवशिष्टानां चक्षुरादीनां पंचानां आश्रयाः, तैः चक्षुरादिभिः समकालीना एव भवन्ति।

**तद्विकार-विकारित्वात् आश्रयश्चक्षुरादयः।**

विज्ञानाश्रयः चक्षुरादय एव सन्ति। यतः चक्षुरादीनां विकारेण ( = विपरिणामेन ) चक्षुर्विज्ञानादीन्यपि विकारवन्ति सम्पद्यन्ते। एवं विज्ञानानि तद् (चक्षुरादि)-विकार-विकारीणि। अतः तद्विकारविकारित्वात् चक्षुरादय एव चक्षुर्विज्ञानादीनामाश्रयाः। चक्षुरादीनां मान्द्ये तेषां विज्ञानेऽपि हि मान्द्यं जायते।

**अतोऽसाधारणत्वाच्च;**

यस्य चक्षुः तस्यैव चक्षुर्विज्ञानमपि भवति; रूपादौ तु नायं नियमः, तेषां सर्वसाधारणत्वात्। इत्थं विज्ञानानि स्वैः स्वैरिन्द्रियैः चक्षुरादिभिः असाधारणानि, इतोपि चक्षुरादयः तेषां आश्रयाः।

**[तैर्विज्ञानं तथोच्यते] ॥४५॥**

विज्ञानानां नामान्यपि चक्षुर्विज्ञानादीनि चक्षुरादिभ्य आहृतानि, इतोऽपि चक्षुरादयः विज्ञानानां आश्रयाः।

**न कायस्याऽधरं चक्षुः, ऊर्ध्वं रूपं न चक्षुषः।**
**विज्ञानं चाऽस्य रूपं तु कायस्योभे च सर्वतः ॥४६॥**

चक्षुरिन्द्रियं कायस्य ( शरीरस्य ) अवरं ( = निम्नभूमिकं ) न भवति। रूपं ( द्रष्टव्यं ) अपि चक्षुष ऊर्ध्वभूमिकं न भवति। द्विभूमिकं चक्षुर्विज्ञानं कामावचरं ( = कामधातुगं , प्रथमध्यानभूमिकं च। ऊर्ध्वभूमिकं रूपं सूक्ष्मतरत्वात् न अवरभूमिकस्य चक्षुषो विषयीभवति। तथैव ऊर्ध्वभूमिकं विज्ञानं अपि अधरभूमिकस्य चक्षुषः। न हि कामावचरस्य चक्षुषः प्रथमध्यानभूमिकं चक्षुर्विज्ञानं भवति। अस्य चक्षुर्विज्ञानस्य तु रूपं ( = द्रष्टव्यं ) सर्वतो विषयः। कामावचरस्य चक्षुर्विज्ञानस्य स्वभूमिकमेव रूपं; प्रथमध्यानभूमिकस्य तु प्रथमध्यानभूमिकचक्षुराश्रयस्य चक्षुर्विज्ञानस्य स्वभूमिकं अधरभूमिकं च रूपं विषयः। चतुर्थध्यानभूमिकचक्षुराश्रयस्य चक्षुर्विज्ञानस्य चतुर्थध्यानभूमिकं रूपं ततश्चाधरभूमिकं सर्वं विषयः।

कायस्य च उभे रूप-विज्ञाने सर्वतो भवतः। कामावचरस्य कायस्य (=शरीरस्य) स्वभूमिको-र्ध्वभूमिके रूप-विज्ञाने विषयीभवतः। प्रथमध्यानभूमिकस्य कायस्य प्रथमध्यानभूमिकमेव विज्ञानम्। रूपं स्वोर्ध्वाऽधरभूमिकम् यथा स्वाश्रयं चक्षुः। द्वितीयादि ध्यानभूमिकस्य कायस्य विज्ञानमधर-भूमिकमेव, प्रथमध्यान-भूमिकमेवेत्यर्थः। रूपं तु द्वितीय-तृतीय-ध्यानभूमिकस्य कायस्य स्वोर्ध्वाऽधरभूमिकम्। यथा स्वाश्रयं चक्षुः। चतुर्थध्यानभूमिकस्य कायस्य रूपं स्वाधरभूमिकं, न तत ऊर्ध्वं; रूपाभावात्।

**तथा श्रोत्रं;**

श्रोत्रेन्द्रियमपि कायस्याऽधरभूमिकं न भवति। शब्दो नास्ति श्रोत्रेन्द्रियादूर्ध्वभूमिकम्। शब्दविज्ञानं न चास्ति श्रोत्रेन्द्रियादूर्ध्वभूमिकम्, तस्याश्रयेण शब्दः; श्रोत्रविज्ञानं शब्दश्च कायाश्रयेण। न कायस्य अधरं श्रोत्रम्। पञ्चभूमिका हि काय-श्रोत्र-शब्दाः। कामावचरा यावच्चतुर्थध्यानभूमिकाः। द्विभूमिकं श्रोत्रविज्ञानं कामावचरं प्रथमध्यानभूमिकं च। तत्र यद्भूमिकः कायः तद्भूमिकं तदूर्ध्व भूमिकं च श्रोत्रं भवति। नत्वधरभूमिकम्। यद्भूमिकंश्रोत्रं तद्भूमिको ऽधरभूमिकोवाऽस्य विषयः शब्दः भवति। ऊर्ध्वं शब्दो न च श्रुतेः। न हि कदाचिदूर्ध्वभूमिकः शब्दोऽधरभूमिकेन श्रोत्रेण श्रोतुं शक्यते। विज्ञानं च, ऊर्ध्वं न श्रोत्रस्य, शब्दवत्। अस्य श्रोत्रविज्ञानस्य शब्दस्तु कायस्योभे च सर्वतः। ऊर्ध्वमधः स्वभूमौ च। कायस्य चोभे सर्वतो भवत इति।

**त्रयाणां तु सर्वमेव स्वभूमिकम् ।**

त्रयाणां घ्राण-रसन-कायानां विषया विज्ञानानि च स्वभूमिकान्येव भवन्ति ।

**कायविज्ञानं अधरं स्वं चापि;**

कायविज्ञानं स्वभूमिकं स्वाधरभूमिकं च भवति, नोर्ध्वभूमिकम्

**अनियतं मनः ॥४७॥**

यथा चक्षुः-श्रोत्रं च नियमितं, न कायस्याधरं चक्षुः श्रोत्रं चेत्येवमादिना, न तथा मनो नियमितम् । मनो-धर्म-मनोविज्ञानानि सर्वभूमिकानि × कामावचराणि यावद्भवाग्रिकाणि ।

**पंचवाह्या द्विविज्ञेयाः;**

धर्मधातुं वर्जयित्वा, रूप-शब्द-गन्ध-रस-स्प्रष्टव्येति पंच वाह्या धातवः चक्षुरादि-विज्ञेया मनोविज्ञेयाश्च । अन्ये त्रयोदश एकविज्ञेया, केवलं मनसा ।

**नित्या धर्मा असंस्कृताः ।**

असंस्कृता धर्मा ( निर्वाणं, प्रतिसंख्या-ऽप्रतिसंख्यानिरोधौ ) नित्या अविनाशिनः ।

**धर्मार्द्धं इन्द्रियं ये च द्वादशाऽध्यात्मिकाः स्मृताः ॥४८॥**

सूत्रे द्वाविंशतिः इन्द्रियाणि परिसंख्यातानि-[१]चक्षुः-[२]श्रोत्र-[३]घ्राण-[४]जिह्वा-[५]काय-[६]मनः-[७]पुरुष-[८]स्त्री-[९]जीवित-[१०]सुख-[११]दुःख-[१२]सौमनस्य-[१३]दौर्मनस्यो-[१४]पेक्षा-[१५]श्रद्धा-[१६]वीर्य-[१७]स्मृति-[१८]समाधि-[१९]प्रज्ञा-[२०]ऽज्ञातमाज्ञास्याम्या-ऽऽ[२१]ज्ञा-ऽऽ[२२]ज्ञातावीति ।

तत्र जीवितेन्द्रियं ( ९ ) सुखादिपंचवेदनेन्द्रियाणि (१०-१४), श्रद्धादीनि पंच, शेषाणां त्रयाणां एकोभागश्चेति द्वादश धर्मधातोरेकस्मिन् भागे परिगण्यन्ते ।

आध्यात्मिकाश्च द्वादश धातव उच्यन्ते-चक्षुरादीनि पंच (१-५) + पंच विज्ञानेन्द्रियाणि + मनः + अन्तिमानां त्रयाणामेको भाग इति ।

इति धातुनिर्देशः ।

( समाप्तं प्रथमकोशस्थानम् )

# द्वितीय कोशस्थानम् ।

## इन्द्रिय निर्देशः ।

**[ चतुर्ष्वर्थेषु पंचानामाधिपत्यं ];**

आत्मभावशोभा, परिरक्षणं, विज्ञानं, असाधारणकारणत्वं इति चतुर्षु अर्थेषु चक्षुरादीनां पंचानां आधिपत्यं उक्तं किल विभाषाशास्त्रे ।

**द्वयोः किल ।**

**[ चतुर्णां ];**

मनः-पुरुष-स्त्री-जीवितेन्द्रियाणां चतुर्णां द्वयोः अर्थयोः आधिपत्यम् । तद्यथा स्त्री-पुरुषेन्द्रिययोः सत्वभेदे ( लिंगभेदे ) सत्वविकल्पभेदे ( आकृतिभेदे ) च आधिपत्यम् । जीवितेन्द्रियस्य उत्पत्ति-संधारणयोः, मनसः पुनर्भवसम्बन्ध-वशीभावानुवर्तनयोश्च ।

**पंचका-ऽष्टानां संक्लेश-व्यवदानयोः ॥ १ ॥**

पंचानां वेदनेन्द्रियाणां ( सुखादीनां १०–१४ ) संक्लेशे आधिपत्यं; अवशिष्टानां अष्टानां ( श्रद्धादीनां १५–२२) परिशोधन आधिपत्यम् । इत्थं आधिपत्यलक्षणं इन्द्रियम् ।

**[स्व] सर्वार्थोपलब्धौ [त्वाधिपत्याद् इन्द्रियाणि षट्] ।**

स्वस्वविषयाणां उपलब्धौ यत एषां चक्षुरादीनां पञ्चानां आधिपत्यं दृश्यते, मनसश्च स्वविषयस्य ( धर्मस्य ) सर्वविषयाणां ( चक्षुरादीनां विषयाणां ) उपलब्धौ च आधिपत्यं; अत आधिपत्यलक्षणलक्षितत्वात् इमानि षट् इन्द्रियाणि ।

**[ स्त्रीत्वे पुंस्त्वे चाऽधिपत्यात् ] कायात् [हि] पुरुषेन्द्रिये ॥२॥**

कायेन्द्रियात् भिन्नयोः स्त्री-पुरुषेन्द्रिययोः स्त्रीत्वे पुंस्त्वे च व्यवस्थापनाधिकारः, तेन तयोः पृथगिन्द्रियत्वम् ।

**निकायस्थिति-संक्लेश-व्यवदानाऽऽधिपत्यतः ।**
**जीवितं वित्ति-श्रद्धादि पञ्चकेन्द्रियता मताः ॥३॥**

निकाय ( शरीर ) स्थितौ जीवितेन्द्रियस्याधिपत्यं, संक्लेशे

सुखादीनां पंचानां (वेदनेन्द्रियाणां १०-१४) आधिपत्यं; मलपरिशोधने च श्रद्धा-वीर्य-स्मृति-समाधिप्रज्ञानां आधिपत्यं; इत्थं आधिपत्यात् एषां इन्द्रियत्वम्।

**[निर्वाणाद्युत्तरोत्तर प्रतिलम्भेऽधिपतेयतः]।**
**(अनाज्ञातमाज्ञास्याम्याऽऽज्ञाऽऽज्ञातावीन्द्रियाणि च)॥४॥**

अनाज्ञातमाज्ञास्यामीन्द्रियं, आज्ञेन्द्रियं, आज्ञातावीन्द्रियं च निर्वाणादिषु उत्तरोत्तर प्रतिलाभे अधिपतिभूतानि, अत एषां इन्द्रियता। तत्र प्रथमं दृष्टिहेयवर्जित-(५:४) क्लेशविनाशेऽधिकरोति, द्वितीयं (आज्ञा) भावनाहेय-(५:५) क्लेशविनाशेऽधिकरोति, तृतीयं (आज्ञातावी) दृष्टधर्मसुखविहारेऽधिकरोति।

**चित्ताश्रयः तद्विकल्पः [स्थितिः संक्लेश एव च।**
**संभारो व्यवदानं च यावदेवतावदिन्द्रियम् ॥५॥**

इन्द्रियं किमिति? – विज्ञानानां (चक्षुरादि मनोविज्ञानपर्यन्तानां षण्णां) आश्रयः; सत्वभेदकल्पनं (यथा स्त्रीपुरुषेन्द्रिययोः); शरीरस्थिति कल्पनं (यथा जीवितेन्द्रियस्य); संक्लेशः (यथा पञ्चानां सुखादीनां वेदनेन्द्रियाणां); संभारः (श्रद्धादीनां पंचानां); परिशुद्धिः (व्यवदानं) (चरमाणां त्रयाणां अनाज्ञातमाज्ञास्यामीत्यादीनां २०×-२२)। यत्र हि चित्ताश्रयत्वादि-धर्माणां उपलब्धिः, तत्र इन्द्रियत्वं अभ्युपगन्तव्यम्।

**प्रवृत्तेराश्रयोत्पत्ति [स्थित्युपभोगतोऽथवा।**
**चतुर्दश तथाऽन्यानि निवृत्ताविन्द्रियाणि च] ॥६॥**

प्रवृत्तेः (संसारस्य षडायतनरूपस्य जन्ममरणस्य) आश्रयः चक्षुरादिमनः पर्यन्तानि। प्रवृत्तेरुत्पत्तिः स्त्रीपुरुषेन्द्रियाभ्यां; प्रवृत्तेः स्थितिः जीवितेन्द्रियेण; प्रवृत्तेरुपभोगः सुखादिपंचभिः, इत्थं इमानि चतुर्दश इन्द्रियाणि प्रवृत्तौ उपयुक्तानि। अन्यानि च अष्टौ, तत्र श्रद्धादीनि पंच निवृत्तौ (निर्वाणे) आश्रयभूतानि, आज्ञास्यामीत्यनेन निर्वाण आदिभावः (उत्पत्तिः), आज्ञेन्द्रियेण निर्वाणे स्थितिः; आज्ञातावीत्यनेन निर्वाणोपभोगो जायते।

**[दुःखेन्द्रियं] असाता या कायिकी वेदना;**
मनःप्रतिकूला शारीरिकी वेदना दुःखेन्द्रियमुच्यते ।

**सुखम् ।**

**साता;**
मनोऽनुकूला कायिकी वेदना च सुखेन्द्रियम् ।

**ध्यानेतृतीये तु चैतसी सा सुखेन्द्रियम् ॥७॥**

तृतीयध्याने जायमाना मानसी सुखा वेदनाऽपि (८:९) सुखेन्द्रियमुच्यते ।

**अन्यत्र सा सौमनस्यं;**

कामधातौ प्रथमध्यानयोश्च जायमाना साता मानसी वेदना सौमनस्येन्द्रियम् ।

**असाता चैतसी पुनः ।**

**दौर्मनस्यं;**
तत्रैव असाता चैतसी वेदना दौर्मनस्येन्द्रियम् ।

**उपेक्षा तु मध्योभये विकल्पनात् ॥८॥**

साताऽसातयोर्मध्यस्था चैतसी कायिकी वा वेदना साताऽसात-विकल्पः (१:३३) रहितत्वात् उपेक्षेन्द्रियम् ।

**दृग्भावनाऽशैक्षपथे [नव त्रीणि];**

मनः - सुख - सौमनस्यो - पेक्षा - श्रद्धा - वीर्य - स्मृति - समाधि-प्रज्ञेति नवेन्द्रियाणि दृक्पथे (दर्शनमार्गे) प्रवृत्तस्य अनाज्ञातमाज्ञास्यामीन्द्रियम् । तान्येव नव उच्यन्ते भावनामार्गे प्रवृत्तस्य आज्ञेन्द्रियं; अशैक्ष (= अर्हत्) मार्गे प्रवृत्तस्य च आज्ञातावीन्द्रियम् ।

**अमलं त्रयम् ।**

आज्ञास्यामया-ऽऽज्ञा-ऽऽज्ञातावी (२०-२२) ति त्रीणि इन्द्रियाणि अमलानि (= अनास्रवाणि) ।

**[रूपाणि जीवितं दुःखे सास्रवाणि], नवद्विधा ॥९॥**

रूपस्कन्ध-भाञ्जि चक्षुरादीनिपंच + स्त्रीपुरुषेन्द्रिये चेति सप्त,

जीवितेन्द्रियं, दुःखोपेक्षेन्द्रिये चेति दश इन्द्रियाणि केवलं सास्रवाण्येव । अवशिष्टानि नव मनः-सुख-सौमनस्य-दौर्मनस्य-श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञेति नव द्विविधानि--सास्रवाणि अनास्रवाणि चेति ।

**विपाको जीवितं;**

जीवितेन्द्रियं पूर्वकृत-कर्मणो विपाकमात्रम् ।

**द्वेधा द्वादशाऽन्त्यष्टकादृते ।**

**दौर्मनस्याच्च;**

अन्त्यं अष्टकं एकविंशत्सु, श्रद्धा-वीर्य-स्मृति समाधि-प्रज्ञाऽऽज्ञास्याम्या-ऽऽज्ञा-ऽऽज्ञातावीति, दौर्मनस्यं च त्यक्त्वा शेषाणि द्वादश चक्षुः-श्रोत्र-घ्राण जिह्वा-काय-मनः-पुरुष-स्त्री-सुख-दुःख-सौमनस्यो-पेक्षेति सविपाकानि अविपाकानि च भवन्ति ।

**तत्त्वेकं सविपाकं;**

एकं तत् दौर्मनस्येन्द्रियं तु सविपाकमिन्द्रियम् ।

**दश द्विधा ॥१०॥**

**मनोऽन्यवित्ति श्रद्धादि;**

मनः + ( सुख-दुःख - सौमनस्यो-पेक्षा ) + ( श्रद्धा-वीर्य-स्मृति समाधि-प्रज्ञे ) ति दश सविपाकानि अविपाकानि च ।

**कुशलमष्टकं;**

श्रद्धाद्याज्ञाताव्यन्तानि ( १५-२२ ) अष्टौ कुशलानि इन्द्रियाणि ।

**द्विधा ।**

**दौर्मनस्यं;**

दौर्मनस्यं द्विविधं, कुशलं अकुशलं च ।

**मनोऽन्या च वित्ति त्रेधा;**

मनः-सुख-दुःख-सौमनस्यो-पेक्षेति पंच त्रेधा, कुशला-ऽकुशला-ऽव्याकृतानि च सन्ति ।

**अन्यदेकधा ॥११॥**

अवशिष्टं चक्षुरादि पंचकं जीवित-स्त्री-पुरुषेन्द्रिय त्रिकं चेति एकविधं = अव्याकृतं एव अस्ति ।

**कामाप्तं अमलं हित्वा ;**

आज्ञास्याम्यादि त्रयं अमलं ( अनास्रवं ) वर्जयित्वा, अन्यानि सर्वाणि एकोनविंशतिः कामधातौ भवन्ति ।

**रूपाप्तं स्त्रीपुमिन्द्रिये ।**

**दुःखे च हित्वा ;**

अमलत्रयं, स्त्री-पुरुष-दुःख-दौर्मनस्येन्द्रिय-चतुष्टयं च त्यक्त्वा शेषाणि पंचदश रूपधातौ भवन्ति ।

**अरूपाप्तं सुखे चाऽपोह्य रूपि च ॥१२॥**

पूर्वोक्तानि सप्त, चक्षुरादि पञ्च रूपीन्द्रियाणि सुख-सौमनस्ये चेति चतुर्दश त्यक्त्वा, अवशिष्टानि अष्टौ मनो-जीवितो-पेक्षा-श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञेति आरूप्यधातौ भवन्ति ।

**[ मनो ] वित्तित्रयं [ त्रेधा ];**

मनोः वेदना त्रयं ( = सुख-सौमनस्योपेक्षाः ) त्रिविधं—दृष्टिहेयं, भावनाहेयं, अहेयं चेति ।

**द्विहेया दुर्मनस्कता ।**

दौर्मनस्यं दृष्टि-भावनाभ्यां हेयम् ।

**[ नव भावनया ];**

नव इन्द्रियाणि –चक्षुरादिपंचक-स्त्री-पुरुष-जीवित-दुःखानि भावनया हेयानि । दुःखभिन्नानि ह्यष्टौ न क्लिष्टानि, दुःखं च न मनोजातं, सर्वाणि च नित्यं समलानि ।

**[ पंच न हेयानि ];**

श्रद्धादीनि पंच न हेयानि, अक्लिष्टत्वात् ।

**[ अपि न त्रयम् ] ॥१३॥**

चरमं त्रयं ( १६-२२ ) अपि अहेयं, अक्लिष्टत्वात् ।

**कामेष्वादौ विपाके द्वे लभ्येते ;**

काय-जीवितेन्द्रिये द्वे कामधातौ लभ्येते, सविपाके ( पूर्व-कर्म-विपाकभूते ) ।

**नोपपादुकैः।**

**तैः षड् वा [ सप्त वाष्टौ वा ];**

षट् ( १-५,९ ), सप्त ( १-५,८,१०/११ ), अष्टौ ( १-५,९-११ ) वा उपपादुकैः नारकादिभिस्सह सविपाकानि भवन्ति।

**[ षड् ] रूपेषु;**

रूपधातौ सत्वानां षट् सविपाकानीन्द्रियाणि।

**एकमुत्तमे ॥१४॥**

उत्तमे ( आरूप्यधातौ ) एकं जीवितेन्द्रियं सविपाकम्।

**निरोधयत्युपरमो नारूप्ये जीवितं मनः।**

**उपेक्षां [ चैव ];**

आरूप्यधातौ मृत्युः जीवित-मन-उपेक्षेति त्रयं निरोधयति।

**रूपेऽष्टौ;**

रूपधातौ अष्टौ चक्षुरादीनि विनाशयति।

**कामे दश नवाष्ट वा ॥१५॥**

**क्रममृत्यौ तु चत्वारि शुभे सर्वत्र पंच च।**

कामधातौ युगपद्, क्रमेण वा मृत्युर्जायते। युगपद्भावेऽष्टौ नव दश वा इन्द्रियाणि सत्त्वस्य अलिंगै-कलिंगो-भयलिंगापेक्षया विनश्यन्ति। क्रममृत्यौ तु प्राक् काय-जीवित-मन-उपेक्षेन्द्रियाणि निरुध्यन्ति। शुभमृत्यौ सर्वत्र पंचेन्द्रियाणि श्रद्धादीनि विद्यन्ते।

**नवाप्तिरन्त्यफलयोः;**

स्रोत आपत्तिफलस्य प्राप्तिः नवभिः मन-उपेक्षा-श्रद्धादिपंचकानाज्ञास्याम्या-ऽऽज्ञेन्द्रियैः।

अन्त्यफलस्य (=अर्हत्फलस्य ), मनः, सौमनस्य-सुखापेक्षान्यतमं श्रद्धादिपंचकं आज्ञा-ऽऽज्ञातावीतिद्वयं चेति नवभिः।

**सप्ता-ऽष्ट-नवभिर्द्वयोः ॥१६॥**

सकृदागामी द्विविधः-लब्ध-स्रोत आपत्ति-फलः (अयमेव आनुपूर्वक इत्युच्यते ); अलब्ध-स्रोत आपत्ति-फलः ( भूयावीतरागः )।

तत्र आनुपूर्वकस्य फललाभः मन–उपेक्षा–श्रद्धादिपंचेति सप्तभिः, आज्ञेन्द्रियेणसह अष्टभिर्वा भवति । भूयो वीतरागस्य अनाज्ञातमाज्ञास्यामीत्यनेन सह नवभिः ।

अनागाम्यपि द्विविधः, आनुपूर्वकः, वीतरागश्च । तत्र प्रथमः प्राप्तपूर्वतनफलः, द्वितीयोऽप्राप्तपूर्वतनफलः । प्रथमस्तावत् आनुपूर्वकः सकृदागामिवत् सप्तभिरष्टभिर्वा; वीतरागो ऽपि भूयोवीतरागवत् नवभिः इन्द्रियैः स्वफललाभी ।

**[अर्हत्त्वस्यै] कादशभिः [ उक्तं ] एकस्य संभवात् ।**

अर्हत्त्वस्य फलं एकादशभिः इन्द्रियैः (९ पूर्वोक्त नव + १सौमनस्य + १ आज्ञातावी ) एकस्य संभवति ।

**उपेक्षा जीवितमनो युक्तो वास्यां त्रयान्वितः ॥१७॥**

उपेक्षा-जीवित-मनसां एकतमेन युक्तोऽन्याभ्यां द्वाभ्यां युक्त एव भवति ।

( १ ) आरूप्यधातौ सत्त्वस्य चक्षुः-शब्द-घ्राण-रसनेन्द्रियाणामभावः; ( २ ) आरूप्ये कायेन्द्रियस्याभावः; ( ३ ) रूपाऽऽरूप्ययोः स्त्री-पुरुषेन्द्रिययोश्च; (४) पृथग्जनः चतुर्थ–द्वितीय-भूम्योः, आरूप्ये वा जातः सुखेन्द्रियवंचितः, ( ५ ) पृथग्जनः चतुर्थ-तृतीय-ध्यानभूम्योः आरूप्ये वा सौमनस्येन्द्रिय-वंचितः; ( ६ ) रूपाऽऽरूप्यधात्वोः सत्त्वस्य दुःखाभावः, ( ७ ) वीतरागस्य दौर्मनस्याभावः; ( ८ ) छिन्नकुशलमूलस्य श्रद्धादि-पंचकाभावः; ( ९ ) पृथग्जनोर्हन् वा आज्ञास्यामीन्द्रियरहितः; ( १० ) पृथग्जनः, प्राप्तसत्यदृष्टिमार्गः ( ६ : ३ ), अर्हंश्च आज्ञेन्द्रियरहिताः; (११) पृथग्जनः शैक्षश्च आज्ञातावीन्द्रियरहितौ ।

**चतुर्भिः सुख-कायाभ्यां;**

सुख-कायेन्द्रियाभ्यां एकतरेण युक्तो जीवित मन-उपेक्षेन्द्रियैश्चापि युक्तो भवति ।

**पंचभिश्चक्षुरादिमान् ।**

चक्षुरादिष्वेकतमेन युक्तः जीवित-मन-उपेक्षा–कायेन्द्रियैरपि युक्तो भवति ।

**सौमनस्यी;**

सौमनस्येन्द्रियेण युक्तोऽपि पंचभिः ( सौमनस्य + जीवित + मनः + उपेक्षा + काय )।

**दुःखी तु सप्तभिः;**

दुःखेन्द्रिययुक्तः सप्तभिः ( दुःख + जीवित + मनः + काय + सुख + सौमनस्य + उपेक्षा )।

**[ स्त्रीन्द्रियादिमान् ॥१८॥**

**अष्टभिः ]**

स्त्री-पुरुषेन्द्रियैकतरेण युक्तो ऽष्टभिः ( ७ पूर्व + १ स्त्री... )। दौर्मनस्ययुक्तोऽपि तथैव । श्रद्धाद्येकतमेन युक्तस्तदन्यैः चतुर्भिः ( जीवित + मनः + उपेक्षा + काय ) युक्तो भवति।

**एकादशभिराज्ञा-ऽऽज्ञाताविं सान्वयः।**

आज्ञा-ऽऽज्ञातीविन्द्रियान्यतरेण युक्तो दशभिरन्यैः ( जीवित + मनः + सुख + सौमनस्य + उपेक्षा + ५ श्रद्धादि )।

**आज्ञास्यामीन्द्रियोपेतः त्रयोदशभिरन्वितः ॥१९॥**

( जीवित + मनः + काय + सुख + दुःख + सौमनस्य + उपेक्षा + ५श्रद्धादि ) सर्वैः त्रयोदशभिः।

**कायविज्जीवितमनः सर्वाल्पैर्निःशुभोऽष्टभिः।**

उच्छिन्नकुशलमूलः ( = निःशुभः ) न्यूनातिन्यूनैः अष्टभिः [ काय + ५वेदना ( सुख + दुःख + सौमनस्य + दौर्मनस्य + उपेक्षा ) + जीवित + मनः ]।

**[ आरूप्येषु तथा बाला ] उपेक्षा-ऽऽयु-मनः शुभैः ॥२०॥**

आरूप्य धातौ जाताः पृथग्जनाः उपेक्षा + जीवित + मनः + ५शुभे ( श्रद्धा + वीर्य + स्मृति + समाधि + प्रज्ञा ) ति अष्टभिर्वंचितो भवति।

**सर्वबहुभिरेकोनविंशत्यामल [वर्जितैः द्विलिङ्गः;**

स्त्री-पुरुषोभयलिंगयुक्तः सत्त्व आज्ञास्यामीत्यादित्रिभि र्वर्जितैरेकोनविंशदिन्द्रियै र्युक्तोभवति।

[ राग्यार्यो लिंगैकाऽमलद्वयवर्जितैः ]॥२१॥

रागेणाऽविमुक्त आर्यपुद्गलः शैक्षोऽनास्रव आज्ञा–ऽऽज्ञातावीन्द्रिये स्त्री–पुरुषान्यतरं च वर्जयित्वाऽवशिष्टैरेकोनविंशतिभिर्युक्तो भवति ।

धर्माः पंचविधाः—रूप–चित्त + चैत्त ( २, २३–२४ )–चित्त-विप्रयुक्ता ( २ : २५–४८ )–ऽसंस्कृतभेदात् ।



## ( परमाणुनिर्देशः ) ।

**कामेऽष्टद्रव्यकोऽशब्दः परमाणु [ रनिन्द्रियः ।**
**कायेन्द्रियो नवद्रव्यो दशद्रव्यो ]ऽपरेन्द्रियः ॥२२॥**

परमाणुः = द्रव्यपरमाणुः ।—

१. कामधातौ शब्द-शब्दायतन-रहितः, (= अशब्दः ) इन्द्रिय-प्रवेशानर्हश्च अष्टद्रव्यको भवति । अष्टौ द्रव्याणि चत्वारिमहाभूतानि ( पृथिवी + जल + तेजः + वात ) चत्वारि भौतिकानि ( गंध + रस + रूप + स्पर्श ) च ।

२. अशब्दः कायेन्द्रिय-कायायतन-प्रवेशार्हः परमाणुः नवद्रव्यकः, तत्र नवमं द्रव्यं स्प्रष्टव्यम् ( २:५०,६१ ) ।

३. अशब्दोऽकायेन्द्रियः चक्षुराद्यन्यतमेन्द्रियप्रवेशार्हः परमाणुः, तदिन्द्रियेण ( चक्षुः ······ ) सह दशद्रव्यकः ।

## ( चैत्तनिर्देशः ) ।

**चित्त-चैत्ताः सहैवास्यां ;**

अस्यां कामधातौ चित्त-चैत्ताः सहैव भवन्ति, न पृथक् स्थितिकाः ।

**सर्वं संस्कृतलक्षणैः ।**

रूप-चित्त-चैत्त-चित्त-विप्रयुक्ताः सर्व एव संस्कृता धर्माः स्वीयैः जाति-स्थिति-व्यय-क्षयैः ( २ : ४६ ) संस्कृतधर्मैः समन्विता भवन्ति ।

**प्राप्त्या वा ;**

संस्कृतधर्मेषु ये सत्त्वसंख्यातानां समीपगाः सन्ति, ते स्वा

श्रया प्राप्त्या सहिताः, अन्येषां तु न प्राप्त्याश्रय इति वा शब्द-ग्रहणम्।

**पंचधा चैत्ता महाभूम्यादि भेदतः ॥२३॥**

चैत्ताः पंचविधाः। महाभूमिकाः ( सर्वचित्तगाः ), कुशलमहाभूमिकाः ( सर्वकुशलचित्तगाः ), क्लेशमहाभूमिकाः ( सर्व क्लिष्टचित्तगाः ), अकुशलमहाभूमिकाः ( सर्वाऽकुशल चित्तगाः ), परित्रक्लेश महाभूमिकाः ( क्षुद्रानुशयभूमिकाः ) च।

**[ वेदना चेतना संज्ञा छन्दः स्पर्शो ] मतिः स्मृति।**
**[ मनस्कारोऽधि मुक्तिश्च समाधिः सर्व चेतसि ] ॥२४॥**

वेदनादयो दश सर्व चित्तभूमिषु सहजा महाभूमिका इत्यर्थः।

वेदना सुखा, दुःखा, नसुखानैवदुःखा। चित्तप्रस्यन्दः चेतना। विषयनिमित्तग्रहणं संज्ञा। छन्दः चिकीर्षा। इन्द्रिय-विषय-तद्विज्ञान सन्निपातावस्था स्पर्शः। धर्माणां विनिश्चय एव प्रज्ञाऽपरपर्यायो मतिः। अनुभूतस्या - सम्प्रमोषः स्मृतिः। विषये चेतस आवर्जनं ( =अवधारणं ) मनस्कारः, मनः करोत्यावर्जयतीति वा। यथानिश्चयं धारणा ऽधिमुक्तिः। अविच्छिन्नरूपेण चित्तस्यैकालम्बने प्रवृत्तिः समाधिः ( =चित्तैकाग्रता )।

**श्रद्धाऽप्रमादः प्रश्रब्धि रूपेक्षा ह्रीरपत्रपा।**
**मूलद्वयमविहिंसा वीर्यं च कुशले सदा ॥२५॥**

श्रद्धादयो दश कुशल महाभूमिकाः।

चित्तविशुद्धिः श्रद्धा। कुशलानां धर्माणां भावना ऽप्रमादः। चित्तलघुता प्रश्रब्धिः। उपेक्षा चित्तस्य धर्मस्य च समता=ऽनाभोगः। मैत्री-करुणा-मुदितादिगुणेषु गौरवं सभयवशवर्तिता ह्री। अणुमात्रेष्ववद्येषु भयदर्शिता अपत्रपा। मूलद्वयं = कुशलमूलद्वयं = अलोभोऽद्वेषश्च। करुणा एव अविहिंसा। चेतसः समुत्साहो वीर्यम्।

**[ मोहः प्रमादः कौसीद्यं अश्राद्धयं स्त्यानमुद्धतिः।**
**सर्वदा क्लिष्टे ];**

मोहादयः क्लेशमहाभूमिकाः। मोहो ऽज्ञानम्। कुशलधर्मेषु भावनाविरतिः प्रमादः। कुशलेषु अनुत्साहः कौसीद्यम्। श्रद्धारा-

हित्यं अश्राद्धयम्। स्त्यानं अकर्मण्यता। उद्धतिः अव्यवस्थितचित्तता।

अकुशले त्वाऽह्रीक्यमनत्रपा ॥२६॥

अकुशल महाभूमिके द्वे। ह्रियोऽभाव आह्रीक्यम्। अपत्रपाया अभावो ऽनपत्रपा। इमे द्वे शुक्लधर्मौ।

[ क्रोधो-पनाह-शाठ्ये-र्ष्या-प्रदास म्रक्ष-मत्सराः।
माया मदो विहिंसेति ]; परीत्तक्लेशभूमिकाः

क्रोधादयो दश परित्तक्लेशभूमिकाः। परीत्तं = अल्पकं = क्षुद्रक, क्षुद्रकाणां मलानां भूमिषु स्थितत्वात् परीत्तक्लेशभूमिका उच्यन्ते।

सवितर्क-विचारत्वात् कुशले कामचेतसि।
द्वाविंशतिश्चैतसिकाः कौकृत्यमधिकं क्वचित् ॥२८॥

वितर्क-विचार-प्रवृत्तिस्वभावात् कुशलेकामधातौ द्वाविंशति विधा चैत्ताः सर्वदा भवन्ति। कौकृत्य ( = खेद ) स्याधिक्यात् कदाचित् त्रयोविंशतिरपि।

आवेणिकेत्वकुशले दृष्टियुक्ते च विंशतिः।
क्लेशैश्चतुर्भिः क्रोधाद्यैः कौकृत्येनैकविंशतिः ॥२९॥

अविद्यासहगतं चित्तं आवेणिकचित्तम्। अविद्यायुक्ते मिथ्यादृष्टियुक्ते चाकुशले ( कामधातौ ) चित्ते विंशतिः चैत्ता भवन्ति।

राग-प्रतिघ-मान-विचिकित्साऽन्यतमेन क्लेशेन क्रोधाद्यन्यतमेन कौकृत्येन वा युक्तं यदा अकुशलं चित्तं, तदा एकविंशतिः चैतसिकाः।

मिथ्यादृष्टिः = शीलेव्रते सन्देहः।

तत्राद्ये विंशतिः—चैत्ता दशमहाभूमिकाः, षट् क्लेशमहाभूमिकाः, द्वावकुशलमहाभूमिकौ वितर्कविचारौ च।

द्वितीय एकविंशतिः—पूर्वोक्ताविंशतिः, क्रोधा-पनाह-शाठ्य-कौकृत्याद्यन्यतमेन सह।

[ निवृत्तेऽष्टादशा ] न्यत्र द्वादशाव्याकृते मताः।

कामधातौ यदा चित्तं क्लेशाच्छादितं ( निवृत्तं ), तदा अष्टादश चैत्ता भवन्ति, अव्याकृते तु द्वादश। आद्ये ऽष्टादश (१० महाभूमिका

+ ६ क्लेशभू० + २ वितर्क विचार) । द्वितीये द्वादश (१० महाभूमिक + २ वितर्क विचार )

**मिद्धं सर्वाविरुद्धत्वात् अस्ति यत्राधिकं भवेत् ॥३०॥**

**मिद्धं** = आलस्यम् । तत् कुशलं अकुशलं अव्याकृतं वा । अतः तत् सर्वत्र भवितुमर्हति । यत्र मिद्धमपि तत्र चैत्त-संख्यायामप्येकाधिक्यम् । यथा मिद्ध सह गत निवृत्तचित्त एकोनविंशतिः (१८ + १ ; मिद्धसह गतेऽनिवृत्ते (= अव्याकृते ) च त्रयोदश ( १२ + १ ) ।

**कौकृत्य-मिद्धाकुशलान्याद्ये ध्याने न सन्त्यतः ।**
**ध्यानान्तरे वितर्काश्च विचाराश्चाप्यतः परम् ॥३१॥**

आद्ये प्रथमे ध्याने कौकृत्यं मिद्धं अकुशल महाभूमिक आह्रीक्याऽनपत्रपे च दूरीभवन्ति ।

अन्येषु ध्यानेषु वितर्कः शाम्यति, ततो विचारः । द्वितीयध्यानत आरूप्य पर्यन्तं विचारः शाठ्यं माया च शाम्यन्ति । मदस्तु सर्वभूमिषु, तिष्ठति । सूत्रे यावद् ब्रह्मलोकं ( प्रथमध्यानं ) विचार-शाठ्य-माया सद्भावः ।

**अह्रीरगुरुता;**

मैत्री करुणादि गुणेषु अगौरवं अह्रीः ।

**अवद्येऽभय दर्शित्वमत्रपा ।**

अवद्येऽनिष्ट विपाकेन भयदर्शनं, निर्भयता अपत्रपा ।

**प्रेम श्रद्धा;**

प्रेम एव श्रद्धा ।

**गुरुत्वं ह्रीः;**

मैत्र्यादिषु गौरवम् ।

**उभयं कामरूप्ययोः ॥३२॥**

श्रद्धा-ह्रीत्युभयं कामधातौ रूपधातौ च भवतः ।

**वितर्क-विचारौदार्य सूक्ष्मते;**

चित्तस्य औदार्यं (= स्थूलावस्थ ) वितर्कः; सूक्ष्मावस्था विचारः ।

मान उन्नतिः ।

चेतस उन्नतिः, अन्येभ्य आत्मन उत्कर्षाभिमानो मान उच्यते ।

**मदः स्वधर्मरक्तस्य पर्यादानं तु चेतसः ॥३३॥**

मदस्तु स्वोचित धर्मेषु अनुरक्तस्य चेतसः परिग्रहणम् ।

**चित्तं मनो (ऽथ) विज्ञानमेकार्थं;**

चित्तं, मनः, विज्ञानं इति त्रय एकार्थवाचिनः शब्दाः । चिनुते मनुते विजानातीति निर्वचनात् ।

चित्त चैतसाः ।

**साश्रयालम्बनाकाराः संप्रयुक्ताश्च;**

चित्त-चैत्ताः साश्रया, इन्द्रियाश्रयत्वात्; सालम्बना विषयालम्बनत्वात्; साकारा विषयाकारत्वात्; संप्रयुक्ता अन्योन्यमिथुनस्वभावात् ।

**पंचधा ॥३४॥**

पंचविधा इमे चित्त-चैत्ताः, आश्रया-लम्बना-ऽऽकार-समता-काल सम्बन्धात् । समत्वं यौगपद्येन स्थितिः । कालः, एक क्षण एकचित्तस्थितेः ।

(चित्त विप्रयुक्तधर्म निर्देशः) ।—

**विप्रयुक्तास्तु संस्काराः प्राप्त्य-प्राप्ति सभागता ।**
**आसंज्ञिक समापत्ती जीवितं लक्षणान्यपि ॥३५॥**
**नामकायादयश्चेति;**

चित्त वियुक्ताः (संस्काराः) धर्माः सन्ति—प्राप्तिः, अप्राप्तिः, सभागता, आसंज्ञिक-समापत्तिः, निरोध-समापत्तिः, जीवितं, लक्षणानि, नामकाय इत्यादि ।

प्राप्तिर्लाभः समन्वयः ।

तत्र प्राप्तिः (१) अप्राप्तस्य विनष्टस्य वा लाभः, (२) प्राप्तस्य स्वायत्तीकरणं (समन्वयः) च ।

**प्राप्त्य-प्राप्ती स्व सन्तानपतितानां निरोधयोः ॥३६॥**

(१) संस्कृतधर्मेषु स्वसन्ताने पतितानां धर्माणां प्राप्तिः अप्रा-

प्तिर्वा भवति। (२) असंस्कृतधर्मेषु प्रतिसंख्याऽप्रतिसंख्या निरोधयोः प्राप्तिरप्राप्तिर्वा भवति।

**[ त्रैयध्विकानां त्रिविधा ];**

त्रैयध्विकानां अतीता-नागत-प्रत्युत्पन्नानां धर्माणां त्रिविधा प्राप्तिः।

**शुभादीनां शुभादिका।**

कुशला-ऽकुशला-ऽव्याकृतानां धर्माणां प्राप्तयोऽपि कुशला-ऽकुशला-ऽव्याकृताः।

**स्वधातुका तदाप्तानां;**

स्वधातौ स्थितानां धर्माणां प्राप्तयः तद्धातुनामभिः प्रसिद्धाः। कामधातुकस्य धर्मस्य प्राप्तिः कामधातुका प्राप्तिः, रूपधातुकस्य रूपधातुका।

**अनाप्तानां चतुर्विधा ॥३७॥**

आस्रवं अनाप्तानां (=अप्राप्तानां) धर्माणां प्राप्तिः चतुर्विधा। (१) अप्रतिसंख्या-निरोधप्राप्तिः; (२) प्रतिसंख्या-निरोधप्राप्तिः; (३) मार्गसत्य प्राप्तिः, ४) विभागत्रयेऽवस्थिता प्राप्तिश्च।

**[ त्रिधा नशैक्षाशैक्षाणां ];**

शैक्षः = शैक्षपुद्गल (स्रोत आपन्न, सकृदागामी, अनागामी)-धर्मः। अशैक्षः = अशैक्ष पुद्गल (अर्हत्)-धर्मः। शैक्षाऽशैक्ष-भिन्नानां धर्माणां (साम्रवा-ऽसंस्कृतानां) प्राप्तिः त्रिविधा—(१) सास्रव-धर्माणां प्राप्तिः नैवशैक्षी नाशैक्षी; (२) सैव प्राप्तिर प्रतिसंख्यानिरोधस्य पृथग्जनेन; (३) प्रतिसंख्यानिरोधस्य च तेनैव। शैक्षमार्गेण लब्धो निरोधः शैक्ष-प्रतिसंख्या निरोधप्राप्तिः; अशैक्षमार्गेण लब्धो निरोधः, अशैक्ष-प्रतिसंख्यानिरोधप्राप्तिः।

**[ अहेयानां द्विधा मता ]।**

अहेयानां अनास्रवाणां धर्माणां प्राप्तिर्द्विविधा। (१) मार्गसत्य-प्राप्तिः; (२) मार्ग सत्येन प्रतिसंख्या निरोधप्राप्तिश्च।

**अव्याकृताप्तिः सहजा [ऽभिज्ञा-निर्माणवर्जिता] ॥३८॥**

अनिवृताऽव्याकृतधर्माणां प्राप्तिः, तैर्धर्मैस्सहैव (प्रयत्नमन्तरा) जायते। अतएव अतीता-ऽनागत-प्रत्युत्पन्नानां तेषां धर्माणां तद-नुरूपप्राप्तयोऽपि।

अभिज्ञाया निर्माणस्य च तु प्राप्तिर्नास्ति सहजा, प्रयोगविशेषेणो-पलभ्यमानत्वात्।

**निवृतस्य च रूपस्य;**

निवृताऽव्याकृत रूपस्य प्राप्तिश्च सहजा।

**कामेरूपस्य नाग्रजा।**

कामधातौ रूपस्य प्राप्तिः तस्माद्रूपात् पूर्वकाले न भवति, सह पश्चाद्वा भवितुमर्हति।

**अक्लिष्टाव्याकृताऽप्राप्तिः;**

अप्राप्तिः सदैव अनिवृता (अक्लिष्टा) ऽव्याकृता भवति (२:६६)।

**[साऽतीताऽजातयो] स्त्रिधा ॥३९॥**

अतीतस्य अनागतस्य च धर्मयोरप्राप्तिः त्रिविधा—अतीता, अनागता, प्रत्युत्पन्ना वा।

**कामाद्याप्तामलानां च;**

कामधातुगतानां अनास्रवाणां ( = अमलानां ) अप्राप्तिः त्रिविधा-कामधातुका, रूपधातुका, आरूप्यधातुका वा; तथैव कालानुसारे-णापि अतीता, अनागता, प्रत्युत्पन्ना।

**अलब्धमार्गः पृथग्जनः।**

**इष्यते;**

येन मार्गो न लब्धः, स पुद्गलः पृथग्जनो वैभाषिकनये।

**[सा प्राप्त्या] भूमिसंचारात् (च) विहीयते ॥४०॥**

सा च मार्गस्य अप्राप्तिः, मार्गप्राप्त्या, तदुपरितन भूमिका-संचाराद्वा हातुं शक्या।

**सभागता सत्वसाम्यं;**

सत्त्वानां समानता, सत्त्वसन्ताने पतिता धर्माः सत्वाश्च यथा

सभागाः ( = समाः = समानाः = सदृशाः ) जायन्ते सा सभागते-त्युच्यते ।

**आसंज्ञिकमसंज्ञिषु ।**

**निरोधश्चित्त-चैत्तानां;**

चित्त-चैत्त-धर्माणां नदीतोयनिरोधवत् संज्ञारहितेषु यो निरोधः,स एव असंज्ञिकता ।

**विपाकस्तु:**

स च निरोधोऽसंज्ञिक समापत्तेरेव विपाकः ।

**बृहत्फले ॥४१॥**

सा असंज्ञिकता च वृहत्फले ( असंज्ञिलोके ) ।

**तथाऽ[ ऽसंज्ञिसमापत्तिः ],**

असंज्ञिनां समापत्तिः ( = समाधिः ) = असंज्ञिसमापत्तिः । यस्यां पुद्गलः संज्ञारहितः तिष्ठति ।

**ध्यानेऽन्त्ये;**

अन्त्ये = चतुर्थध्याने निपुण एव अस्यां समापत्तौ प्रवेष्टुमर्हति ।

**[ मोक्षमिच्छता ] ।**

दुःखेभ्यो मोक्षं इच्छता योगिना सेयं समापत्तिः समापत्तव्या ।

**शुभा;**

सा चेयं कुशला, नतु अकुशलाऽव्याकृता वा ।

**उपपद्यवेद्येव [ नार्यैः ];**

अनार्यैः सा उत्पद्य ( असंज्ञिध्यानभूमौ ) वेदितव्या ।

**एकाध्विकाऽप्यते ॥४२॥**

एककालावच्छिन्ना प्रत्युत्पन्ना हि सा लभ्यते ।

**निरोधाख्या तथैवा [ ऽपि ];**

निरोध समापत्तिरपि आसंज्ञिक समापत्तिवत् चित्त-चैत्तनि-रोधस्वभावा ।

**विहाराय भवाग्रजा।**

**शुभा द्विवेद्याऽनियतार्यैः प्रयोगत आप्यते ॥४३॥**

भवाग्रजा निरोधसमापत्तिः शान्तविहाराय, भवाग्रे (= नैव संज्ञानासंज्ञायतने) जायत इति भवाग्रजा। सा कुशला (न अकुशलाऽव्याकृता वा)। द्वाभ्यां वेदनीया तद्ध्यानलाभिना, तद्भूमिकजातेन वा, एवं च द्विविधा उपपद्य (= उत्पद्य) वेदनीया, अपरपर्यायवेदनीया चेति। अनियत वेदना संप्रयुक्ता च। प्रयोगतः (= प्रयत्नतः) आर्यैर्लभ्यते। पृथग्जनेन तूत्पद्यैव।

**बोधिलभ्या मुनेः [न, प्राक्चतुस्त्रिंशत्क्षणाप्तितः]।**

मुनेः (बुद्धस्य) प्रयोगमन्तरा बोधिमात्रेण लभ्येयमिति न, मुनिर्हि चतुस्त्रिंशत्क्षणैः बोधिं प्राप।

**काम-रूपाश्रये तूभे;**

आसंज्ञिक समापत्तिः, निरोधसमापत्तिश्च कामधातौ रूपधातौ च प्रयोगाश्रयभूते।

**निरोधः प्रथमं नृषु ॥४४॥**

निरोधसमापत्तिः कामधातौ भवेद् रूपधातौ वा, प्रथमं सा मनुष्येषु एव समापत्तव्या।

**आयुर्जीवितं;**

जीवितं आयुषो नाम।

**आधार उष्म-विज्ञानयोर्हि यत्।**

तदेव जीवितं शरीर उष्मणो विज्ञानस्य (= चेतनायाः) च आश्रयभूतम्।

**लक्षणानि (तथा) जाति-र्जरा-स्थिति-रनित्यता ॥४५॥**

जातिः, जरा, स्थितिः, अनित्यता चेति चत्वारि संस्कृतधर्माणां लक्षणानि।

**जाति-जात्यादयस्तेषां तेऽष्टधर्मैकवृत्तयः।**

जातिः–जातिः, जरा–जरा, स्थितिः–स्थितिः, अनित्यता–

ऽनित्यता इत्यपि तेषां संस्कृतधर्माणां अनुलक्षणानि। एवं चतुर्भिर्लक्षणैः, चतुर्भिरनुलक्षणैश्च तेऽष्टधर्मस्वभावाः।

**जन्यस्य जनका जातिर्न हेतु-प्रत्ययैर्विना ॥४६॥**

जन्यस्य ( = कार्यस्य = उत्पाद्यस्य ) जनका ( = उत्पादिका ) जातिर्न भवितुमर्हति; यदि हेतवः प्रत्यया न स्युः। हेतु-प्रत्ययैरेव जातिः जनका।

**नाम-कायादयः संज्ञा-वाक्याक्षर-समुक्तयः।**

संज्ञानां समुदायः = नामकायः। वाक्यानां समुदायः = पदकायः। अक्षराणां समुदायः = व्यञ्जनकायः। समुक्तिः = समुदायः = समवायः। कायः = निकायः = चयः। नामकायः वर्ण-( = रूप ) शब्द-गन्धादयः; पदकायः "अनित्याः संस्काराः", "निर्वाणंस्थानं" व्यंजनकायः क ख ग...... ।

**कामरूपास सत्त्वाख्या निष्यन्दा-ऽव्याकृताः;**

नामकायादयः कामधातौ रूपधातौ च भवन्ति। सत्त्वप्रयत्नोद्भूताश्चेमे सत्त्वनामवाचका एव नार्थवाचकाः। सभागहेतुतः (२:५२) उत्पन्नत्वात् नैष्यन्दिकाः, न तु विपाकजा औपचयिका वा। अनिवृताव्याकृताः चेमे।

**तथा ॥४७॥**

**सभागता विपाकोऽपि त्रैधातुकी;**

नाम-पद-व्यंजनकायवत् काम-रूपधातु सम्बन्धिनी सभागता सत्त्वाख्याऽस्ति नैष्यन्दिका अव्याकृता च। इयं न केवलं नैष्यन्दिका अपि च विपाकोऽपि; तथा चेयं न धातुद्वय एव, धातुत्रयेऽपि।

**आसयो द्विधा।**

**लक्षणान्यपि;**

प्राप्तयो द्विविधाः, निष्यन्दोविपाकश्चेति। प्राप्तिवद् अस्या अपि जाति जरादीनि लक्षणानि द्विविधानि।

**निष्यन्दः समापत्त्यसमन्वयः ॥४८॥**

निष्यन्दः समापत्तेरप्राप्तिः।

## ( हेतु—फलनिर्देशः ) ।

**कारणहेतुः सहभूः सभागः संप्रयुक्तकः ।**
**सर्वत्रगो विपाकश्च षड्विधो हेतुरिष्यते ॥४६॥**

कारणहेत्वादयः । षड् हेतवः—कारणहेतुः = सत्ताहेतुः । सहभूः = अन्योन्यकारणम् । सभागहेतुः = अनुगतहेतुः = समान भागहेतुः । संप्रयुक्तहेतुः = प्रेरितहेतुः । सर्वत्रगः = सार्वदैशिकः ।

**स्वतोऽन्ये कारणहेतुः;**

स्वभिन्नाः सर्वे हेतवः कारणहेतौ परिगणिताः । कारणसामान्यमेव कारणहेतुः ।

**सहभूर्ये मिथः फलाः ।**
**भूत वाक्-चित्त चित्तानुवर्ति लक्षण-लक्ष्यवत् ॥५०॥**

समकालिकाः, अन्योन्यफलोत्पादकाः सहभूहेतवः । यथा भूतानि वाक् च; चित्तं सम्बन्धी धर्मश्च; लक्षणं लक्ष्यं च । सहभूहेतुषु सर्वेषां संस्कृतानां धर्माणां समावेशः ।

**चैत्ता द्वौ संवरौ तेषां चेतसो लक्षणानि च ।**
**चित्तानुवर्तिनः;**

तत्र चित्तानुवर्तिनः सन्ति ( = चैत्ताः )—द्वौ संवरौ ( सुशील-समाधिसंवरौ ४ : १७ ), चैत्तानां संवरयोः, चेतसः ( = चित्तस्य ) च लक्षणानि ( जाति जरादीनि ) ।

**काल-फलादि शुभतादिभिः ॥५१॥**

शुभतादि सहितं काल फलादिकमपि चित्तानुवर्तिषु, चित्त-सहायक-भावात् । चित्तेन सहैव एषामपि जाति जरादिकं, ते-नेमे चित्त-समकालिकाः । फलेनाऽत्र पुरुषकारफलं ( २ : ५८ ), विसंयोगफलं ( २ : ५७ ) च बोद्धव्ये । आदि शब्दः विपाक ( २ : ५७ )-निष्यन्द ( २ : ५७ )-फलयोः, संग्रहार्थम् । चित्तवदेव चित्तानुवर्तिनामपि विपाकाः, तथैव च कुशला-ऽकुशला-ऽव्याकृतभावोऽपि ।

**सभागहेतुः सदृशाः;**

सदृशा धर्माः सभागहेतुः। कुशलस्कन्ध पंचकस्य हेतवोऽपि कुशलाः। एवं क्लिष्टाः (अकुशलाः, निवृताऽव्याकृताः कुशलाः) क्लिष्टानां सभागहेतवः। अव्याकृतं रूपं अव्याकृतानां पंचस्कन्धानां सभागहेतुः। वेदनादयः चत्वारः स्कन्धास्तु रूपस्य न सभागहेतवः। चत्वारः स्कन्धाः पंचानां सभागहेतवः, रूपन्तु न सभागहेतुः चतुर्णाम्।

**स्वनिकायभुवः;**

स्वनिकायस्थाः स्वभूमि-संगृहीताश्च धर्माः तन्निकायभूमिकानां सदृशधर्माणां सभागहेतवः।

**अग्रजाः।**

पुनश्च अग्रे जाताः (अतीताः प्रत्युत्पन्नाश्च) धर्मा अन्त्यजानां (प्रत्युत्पन्नानां अनागतानां वा) सदृशधर्माणां सभागहेतवः। अनागता न सभागहेतवः।

**अन्योन्यं नवभूमिस्तु मार्गः;**

मार्गस्य धर्मास्तु मार्गस्य सभागहेतवः। नव भूमयो मार्गशब्द-वाच्याः।—अनागम्यं, ध्यानान्तरं, चत्वारि ध्यानानि, त्रय आरूप्याः (६ : २०……)।

**सम विशिष्टयोः ॥५२॥**

मार्गः समस्य विशिष्टस्य च मार्गस्य सभागहेतुः, न निकृष्टस्य।

**[प्रायोगिकास्तयोरेव]; [श्रुत-चिन्तामयादयः]।**

सम-विशिष्ट धर्मयोरेव प्रयोगसम्बन्धिनः श्रुत-चिन्ताभावनादयो धर्माः प्रायोगिक (= संप्रयुक्तक)-हेतवः।

**संप्रयुक्तक हेतुस्तु चित्त-चैत्ताः**

चित्तं चैत्ताश्च संप्रयुक्तक-हेतवः।

**समाश्रयाः ॥५३॥**

तुल्याश्रयाणि चित्त-चैत्तानि, अन्योन्यं संप्रयुक्तहेतवः। सहभूहेतवोऽन्योन्य फलार्थेन, परस्पर-बलेन मार्गपरायणाः सहसार्थिका

यथा। चित्तं चैत्तस्य फलं, चैत्तं च चित्तस्य। समप्रयोगेण (सम प्रवृत्त्या) सम्प्रयुक्तहेतवः, यतोऽत्रपंच समताः) (२ : ३४)।

**सर्वत्रगाख्यः क्लिष्टानां स्वभूमौ पूर्वसर्वगाः ।**

क्लिष्टानां स्वकीयभूमौ पूर्वं जाताः सर्वत्रगा हेतवः ।

**विपाकहेतुरशुभाः कुशलाश्चैव सास्रवाः ॥५४॥**

कुशलाः, अत्यंतसास्रवाः कुशलाश्च धर्मा विपाकहेतवः ।

**[ सर्वत्रगः सभागश्च द्व्यध्वकौ ] त्र्यध्वकास्त्रयः ।**

सर्वत्रगः सभागश्चेति द्वौ हेतू द्व्यध्वकौ ( = द्वैकालिकौ ) अतीत-वर्तमानकालिकौ । अन्ये त्रयः—संप्रयुक्त-सहभू-विपाकहेतवोऽतीताऽनागत-प्रत्युत्पन्नकालिकाः ।

**संस्कृतं सविसंयोग-फलं;**

विसंयोगः ( = प्रतिसंख्या निरोधः ) फलं यस्य, तादृशं संस्कृतं कारण-हेतुः ।

**नाऽसंस्कृतस्य ते ॥५५॥**

असंस्कृतस्य न कारणं ( = हेतुः ) नापि फलं ( = विपाकः ) ।

**विपाकः फलमन्त्यस्य;**

अन्त्यस्य विपाकहेतोः फलं विपाकः ।

**पूर्वस्याधिपतं फलम् ।**

कारणहेतोः फलं आधिपतम ( अधिपतिभावः ) । ( चक्षुरिन्द्रियस्य रूपविज्ञान आधिपत्यम् । )

**सभाग-सर्वत्रगयोः निष्यन्दः;**

स-भागस्य सर्वत्रगस्य च हेत्वोः निष्यन्दः फलं; यतः, तयोः फलं तत्कारणेन सह गतम् ( २ : ५७; ४ : ८५ ) ।

**पौरुषं द्वयोः ॥५६॥**

सहभू-संप्रयुक्त हेत्वोः पुरुषकारफलमेव फलम् ।

**विपाकोऽव्याकृतो धर्मः सत्वाख्यो व्याकृतोद्भवः ।**

विपाकोनिवृताव्याकृतो धर्मः, स एव सत्वनाम्नाप्युच्यते। स च व्याकृताज्जातः।

**निष्यन्दो हेतुसदृशः;**

हेतु-समानं फलं निष्यन्दः।

१. सभाग-हेतुः न सर्वत्रगहेतुः, यथा सर्वत्रगा दोषा रागादयः, स्वनिकायस्य दोषवाहकत्वात्।

२. सर्वत्रग-हेतुर्नास्ति सभागहेतुः; यथा—सर्वत्रगा दोषा अन्योन्यनिकायस्य दोषवाहकत्वात्।

३. सर्वत्रग हेतुर्युगपदेव सभागहेतुरपि; यथा—सर्वत्रगा दोषाः स्वविशेष-निकायस्य, दोषानयनात्।

४. सर्वेऽन्ये हेतवो न सभाग-हेतवो न च सर्वत्रगहेतवः।

**विसंयोगः क्षयो धिया ॥५७॥**

धिया ( = प्रज्ञया = प्रतिसंख्यया ) क्षयः ( = निरोधः ) = विसंयोगः ( = प्रतिसंख्यानिरोधः )।

**यद्बलाज्जायते यत्तत् फलं पुरुषकारजम्।**

यद्बलाद् यत् फलं जायते, तत् तस्य पुरुषकारजमुच्यते। यथा कामधातौ चित्तस्य पौरुषफलं प्रथमध्यानप्राप्तिः, तत्प्रयोगचित्ताद्वा द्वितीयध्यानप्राप्तिः, प्रथमध्यानभूमौ चित्तस्य पुरुषकार-फलम्।

**अपूर्वः संस्कृतस्यैव संस्कृतोऽधिपतेः फलम् ॥५८॥**

संस्कृतधर्मस्य एव अधिपतिफलं संस्कृतधर्मः; ततः पूर्वतनं धर्मं त्यक्त्वा। यथा—दन्तमयं वस्तु शिल्पिनोऽधिपतेश्च पुरुषकार-फलम्।

**वर्तमानाः फलं पंच गृह्णन्ति;**

विद्यमानाः पंच हेतवः फलमुपगृह्णन्ति, नत्वतीताऽनागताः।

**द्वौ प्रयच्छतः।**

वर्तमानावेव सहभू संप्रयुक्तौ फलं दत्तः।

**वर्तमानाऽभ्यतीतौ द्वावेकोऽतीतः प्रयच्छति ॥५९॥**

सभाग-सर्वत्रगौ अतीत-प्रत्युत्पन्नौ फलं दत्तः । विपाकहेतुरेकोऽतीतः सन् फलप्रदः ।

**क्लिष्टा विपाकजाः शेषाः प्रथमार्या यथाक्रमम् ।**
**विपाकं सर्वगं हित्वा तौ सभागं च शेषजाः ॥६०॥**
**चित्त-चैत्तास्तथाऽन्ये च सम्प्रयुक्त-वर्जिताः ।**

चित्त-चैत्ताश्च—(१) क्लिष्टाः; (२) विपाक हेतुतो जाताः (विपाकजाः) (३) शेषाः; (४) प्रथम परिशुद्धाः (स्रोत आपन्न चित्त चैत्ताः) इति चत्वारः । तत्र (१) क्लिष्टा विपाक हेतुमन्तरा ऽन्यान् पंच हेतून् उत्पादयन्ति; (२) विपाकजाः सर्वगहेतुं परिवर्ज्यान्यान् पंच; (३) शेषाः विपाक-सर्वग-हेतुद्वयं परिवर्ज्य अन्यान् चतुरः; (४) प्रथमार्या सभाग-सर्वग विपाकेति त्रयं परिवर्ज्यान्यान् त्रीन् । शेषजा रूपिणः संस्काराः चित्तचैत्तभिन्ना धर्मा अपि पूर्ववत् चतुर्धा विभक्ताः, सम्प्रयुक्तकहेतुं एकं अन्यमपि परिवर्ज्यशेषान् उत्पादयन्ति, तथा च (१) चतुरः, (२) चतुरः, (३) त्रीन् , (४) द्वौ ।

**चत्वारः प्रत्यया उक्ताः;**

हेतुप्रत्ययः, समनन्तरप्रत्ययः, आलम्बनप्रत्ययः, अधिपतिप्रत्ययश्च ।

**हेत्वाख्यः पंच हेतवः ॥६१॥**

पंच हेतवो हेतुप्रत्ययाः ।

**चित्त-चैत्ता अचरमा उत्पन्नाः समनन्तराः ।**

अन्त्यभिन्नाः प्रत्युत्पन्नाः चित्त-चैत्ताः समनन्तर-प्रत्ययाः । इमे हि समकालिकान् अनन्तरजातान् वा धर्मान् उत्पादयन्ति ।

**[ धर्मा आलम्बनं सर्वे ];**

संस्कृताऽसंस्कृताः सर्व एव धर्मा आलम्बन-प्रत्ययः ।

**पतिः कारण मुच्यते ॥६२॥**

कारणहेतुः ( २ : ५० ) अधिपतिप्रत्यय उच्यते ।

**निरुध्यमाने कारित्रं द्वौ हेतू कुरुतः;**

निरुध्यमाने धर्मे द्वौ सहभू-संप्रयुक्तकहेतू कारित्रं (कार्यं) कुरुतः।

**त्रयः।**

**जायमाने;**

जायमाने धर्मे त्रयः ( सहभू-सर्वत्रग-विपाक ) हेतवः कारित्रं कुर्वन्ति।

**ततोऽन्यौ तु प्रत्ययौ तद्विपर्ययात् ॥६३॥**

अन्यौ ( आलम्बनाऽधिपति-प्रत्ययौ ) समनन्तरा-ऽऽलम्बना-ऽधिपति-प्रत्यय-प्रतिलोमतः कार्यं कुरुतः।

**चतुर्भिश्चैत्ता हि;**

चित्त-चैत्ता हि चतुर्भिः ( सर्वैः ) प्रत्ययै रुत्पद्यन्ते।

**समापत्तिद्वयं त्रिभिः।**

आसंज्ञिक-निरोध-समापत्ति-द्वयं हेतु-समनन्तरा-ऽधिपति प्रत्ययैः उत्पद्यते।

**द्वाभ्यामन्येतु जायन्ते;**

संस्कारा रूपिणो धर्माश्च ( अन्ये ) हेत्व-धिपतिप्रत्ययाभ्यां जायन्ते।

**नेश्वरादेः क्रमादिभिः ॥६४॥**

ईश्वरादेः ( महादेव-वासुदेवादिभ्यः ), क्रमादिभिर्वा न तेषां उत्पत्तिः।

**द्विधा भूतानि तद्धेतुः;**

चत्वारि महाभूतानि ( पृथिवी, आपः, तेजः, वायुः ) संस्कार-रूपभेदात् द्विविधानि, तेषां हेतुर्द्विविधः, सभाग सहभू-भेदात्।

**[ भौतिकानां तु पंचधा ]।**

भौतिकानां गन्धादीनां महाभूतानि पंचधा हेतवः जनन-निश्रयहेतु-प्रतिष्ठो-पस्तम्भो-पबृंहरण हेतुभिः।

**[ त्रिधा भौतिक मन्योन्यं ];**

सहभू-सभाग-विपाक-हेतु-रूपेण भौतिकं गन्धादिकं अन्योन्यं तुभूतम्।

**[ भूतानां ] एकधैव तत् ॥६५॥**

भौतिकं एकधा ( विपाकहेतुना ) एव भूतानां हेतुः ।

**कुशलाऽकुशलं कामे निवृतानिवृतं मनः ।**
**रूपाऽऽरूप्ये ष्वकुशलात् अन्यत्र [द्वे ह्यनास्रवे] ॥६६॥**

कामधातौ कुशलं, अकुशलं, निवृता ( = क्लिष्ट ) ऽव्याकृतं, अनिवृता ( = ऽक्लिष्ट ) ऽव्याकृतं चेति चतुर्विधं चित्तम् । रूप धातौ आरूप्यधातौ च अकुशलं वर्जयित्वा त्रिविधम् । द्वे च अनास्रवे चित्ते शैक्षं अशैक्षं चेति ।

**[ कामे शुभचित्तान्नव चित्तान्यष्टभ्य एव तत् ।**
**अशुभं दशभ्यः ] तस्माच्चत्वारि [ निवृतं तथा ] ॥६७॥**
**पंचभ्यो ऽनिवृतं; सप्त चित्तानि तदनन्तरम् ।**

कामधातौ कुशलचित्तान्नव चित्तानि प्रादुर्भवन्ति—( १–४ ) कामधातोश्चत्वारि ( २ : ६६ ), ( ५–६ ) रूपधातोः द्वे, ( ७ ) आरूप्यधातोरेकं, ( ८-९ ) शैक्षा–ऽशैक्षे (निरास्रवे) च । तच्च कुशलचित्तं अष्टभ्यः ( आरूप्य धातुगत चित्त वर्जितेभ्यः ) चित्तेभ्य उत्पन्नम् । अकुशलं ( = निवृताव्याकृतं ) चित्तं दशभ्यः ( अनास्रव व्यतिरिक्तेभ्यः सर्वेभ्यः ) चित्तेभ्यः । तस्मात् चाकुशलात् कामाधातुगतानि चत्वारि निवृतचित्तानि जायन्ते । तथैव पंचभ्यः ( काम धातोः ४ अकुशल + १ रूपधा० अकुशल ) अनिवृताव्याकृतम् । अनिवृताव्याकृतानन्तरं सप्तचित्तानि ( ४ काम + २ रूप + १ आरूप्यनिवृताव्याकृत ) ।

**[ एकादश शुभाद्रूपे तन्नव समनन्तरम् ॥६८॥**
**अष्टभ्यो निवृतं, तस्मात् षट्कमनिवृतं त्रयात् ।**
**ततः षट्कं;**

कुशलचित्ताद् रूपधातौ एकादश ( आरूप्यधातोरनिवृताव्याकृतं विहाय सर्वाणि ) चित्तानि; तदनन्तरं नव ( आरूप्यानिवृताव्याकृतं, काम कुशल निवृताव्याकृतं चापि विहाय ) । अष्टभ्यः ( २ कामक्लिष्ट + २ शैक्षाशैक्षानि विहाय ) निवृताव्याकृतं चित्तं भवति ।

निवृताव्याकृतात् षट् चित्तानि ( ३ रूप + ३ काम कुशला-ऽकुशल-निवृताव्याकृत = ६ विहाय )। रूपधातोः त्रयात् चित्तात् अनिवृता-व्याकृतम्। अनिवृताव्याकृतात् षट्कं ( ३ रूप + २ कामाकुशल-निवृताव्याकृत + १ आरूप्य निवृताव्याकृत )।

**इयं नीतिरारूप्येऽपि शुभान्नव ॥६९॥**

**चित्तानि, तद्भवेत् षट्कान्निवृतात् सप्त तत्तथा।**

१. इयमेव प्रक्रियाऽऽरूप्यधातावपि ( अनिवृताव्याकृतादिव त्रयाच्चित्तादुत्पद्यते )। आरूप्यधातोरनिवृताव्याकृतात् षट् चित्तानि ( ३ रूप + २ काम + १ आरूप्य )।

२. कुशलान्नव चित्तानि त्रयं [ १ काम कुशल + २ ( काम + रूप ) अनिवृताव्याकृत ] वर्जयित्वा।

३. षड्भ्यश्चित्तेभ्यः ( ३ आरूप्य + १ रूपकुशल + २ अनास्रव ) कुशलम्।

४. निवृताव्याकृतात् सप्त चित्तानि [ ३ आरूप्य + १ रूप कुशल + २ काम क्लिष्ट = निवृताऽनिवृताव्याकृते ) + १ रूपक्लिष्ट ]।

५. निवृताव्याकृतं सप्तभ्यः, ( २ कामक्लिष्ट + १ रूपक्लिष्ट + २ अनास्रव ) पंचवर्जितेभ्य उत्पद्यते।

**[ शैक्षं चतुर्भ्यः, एतस्मात्पंचाऽशैक्षं तु ] पंचकात् ॥७०॥**

**तस्माच्चत्वारि [ चित्तानि ];**

१. शैक्षं ( = अनर्हदार्यपुद्गलचित्तं ) चतुर्भ्यश्चित्तेभ्यः [ १ शैक्ष + कुशल ( काम + रूप + आरूप्य ) ]।

२. एतस्मात् शैक्षात् पंच [ १ शैक्ष + १ अशैक्ष + कुशल ( काम + रूप + आरूप्य ) ]।

३. अशैक्षं तु पंचकात् [ ,, ]

४. तस्मात् अशैक्षात् चत्वारि [ १ अशैक्ष + कुशल ( काम + रूप + आरूप्य ) ]।

**द्वादश तानि विंशतिः।**

**द्विधा भित्त्वा प्रायोगिकोपपत्तिलाभिकं शुभम् ॥७१॥**

**विपाकजै-र्यापथिक-शैल्पस्थानिक-निर्मितम् ।**
**चतुर्धा व्याकृतं कामे [ रूपे शैल्पिकवर्जितम् ] ॥७२॥**

१. द्वादश चित्तानि [ १ कामाकुशल + (काम + रूप + आरूप्य) ( कुशल + निवृताऽव्याकृत + अनिवृताऽव्याकृत ) + २ अनास्रव ( = शैक्ष + अशैक्ष ) ] ।

२. कुशलं ( = शुभं ) त्रैधातुकं, प्रायोगिकं ( प्रयत्नासादितं ) उपपत्तिलाभिकं ( जन्मतो लब्धं ) चेति द्विधा भित्वा;

३. विपाकजं ऐर्यापथिकं, शैल्पस्थानिकं निर्मितं चेति चतुर्धा कामधातौ वर्णितं अनिवृता ( = अक्लिष्ट ) ऽव्याकृतं चित्तम् ।

४. रूपधातौ शैल्पस्थानिकं विहाय त्रीणि द्विधाभक्तानीतिषट् । एवं विंशतिः चित्तानि —

कामधातौ अष्टौ = [ कुशल ( प्रायोगिक + उपपत्तिलाभिक ) + अकुशल + निवृताऽव्याकृत + विपाकज + ऐर्यापथिक + शैल्पस्थानिक + अभिज्ञाफल ] ।

रूपधातौ षट् = [ कुशल ( प्रायोगिक + उपपत्तिलाभिक ) + निवृताऽव्याकृत + विपाकज + ऐर्यापथिक + अभिज्ञाफल (=निर्मित)] ।

आरूप्यधातौ चत्वारि = [ कुशल ( प्रायोगिक + उपपत्तिलाभिक ) निवृताऽव्याकृत + विपाकज ] ।

अनास्रवचित्ते २ = ( शैक्ष + अशैक्ष ) ।

२० चित्तानि = (८ काम + ६ रूप + ४ आरूप्य + २ अनास्रव) ।

**क्लिष्टे त्रैधातुके लाभः षण्णां षण्णां द्वयोः;**

१. कामे क्लिष्टे चित्ते लाभः षण्णां चित्तानां—[ काम (कुशल + अकुशल + निवृताऽव्याकृत) + ( रूप + आरूप्य ) ( निवृताऽव्याकृत ) + शैक्ष ] ।

२. रूपधातौ क्लिष्टे चित्ते षण्णां—[ काम ( निवृताऽव्याकृत ) + आरूप्याप्त-रूपधातु-गत ( कुशल + निवृताऽव्याकृत + अनिवृता व्याकृत ) + आरूप्य गत ( निवृताऽव्याकृत ) + शैक्ष ] ।

३. आरूप्यधातौ क्लिष्ट चित्ते द्वयोः—[ आरूप्य ( निवृताऽव्याकृत ) + शैक्ष ] ।

शुभे ।

**त्रयाणां रूपजे ;**

रूपधातौ कुशले चित्ते त्रयाणां चित्तानां लाभः—[ कुशल + निवृताऽव्याकृत ( काम + रूप ) ]।

**शैक्षे चतुर्णां**

शैक्षे प्रथमचित्ते ( दुःखे धर्मज्ञानक्षान्तिरिति ) अनुभूयमाने लाभः चतुर्णां चित्तानां—[ शैक्ष + अनिवृताव्याकृत ( काम + रूप ) + आरूप्य ( कुशल ) ]।

**तस्य चाधिके ॥७३॥**

तस्य शैक्षचित्तस्य लाभोऽन्येषु चित्तेषु अनुभूयमानेषु। अव्याकृत चित्तेषु ह्यव्याकृतचित्तानामुत्पत्तिः।

( इतीन्द्रिय-निर्देशः )।

( समाप्तं द्वितीयं कोशस्थानम् )।

# तृतीयकोशस्थानम् ।

## ( लोकधातुनिर्देशः )

**नरक-प्रेत-तिर्यञ्चो मानुषाः षड्दिवौकसः ।**

**कामधातुः;**

नरकलोकः, प्रेतलोकः, तिर्यक्लोकः, मानुषलोकः, षड् देवाः ( चातुर्महाराजिक-त्रयस्त्रिंश-याम-तुषित-निर्माणरति-परनिर्मित वशवर्तिन इति देवाः ) इमे दश लोकाः कामधातुशब्देन गृह्यन्ते ।

**स नरक-द्वीपभेदेन विंशतिः ॥ १ ॥**

नरका अष्टौ ( संजीव-कालसूत्र-संघात-रौरव-महारोरव-तपन प्रतापना-ऽवीचयः ) । द्वीपाः चत्वारः -जम्बूद्वीप-पूर्वविदेहा-ऽवरगोदानीयो-त्तरकुरवः । इत्थं नरक-द्वीपभेद संग्रहेण ( ८+४ ) द्वादश + षड् देवलोकाः + (प्रेत-तिर्यञ्च इति चत्वारः) सर्वे द्वाविंशत्संख्याकाः कामधातुशब्दवाच्याः ।

**ऊर्ध्वं सप्तदश-स्थानो रूपधातुः;**

कामधातोः ऊर्ध्वं सप्तदशभिः स्थानैः युक्तो रूपधातुः संज्ञायते । तानि च सप्तदश स्थानानि—

**पृथक् पृथक् ।**

**ध्यानं त्रिभूमिकं तत्र चतुर्थं त्वष्टभूमिकम् ॥२॥**

तत्र पृथक् पृथक् एकैकस्मिन् ध्याने त्रयोलोकाः, तद्यथा—प्रथम-ध्याने ब्रह्मकायिक-ब्रह्मपुरोहित-महाब्रह्मलोकाः; द्वितीयध्याने परित्ताभा-ऽप्रमाणाभा-ऽऽभस्वरलोकाः, तृतीयध्याने परित्तशुभा-ऽप्रमाण-शुभ-शुभकृत्स्नलोकाः । चतुर्थं ध्यानं तु अष्टभूमि-युक्तम् । तथा हि, अनभ्रक-पुण्यप्रसव-बृहत्फल-पंचशुद्धावासिका ( अवृहा ऽतप-सुदृश-सुदर्शना-ऽकनिष्ठाः ) चतुर्षु ध्यानेषु सर्वे सप्तदश लोकाः सप्तदश स्थानानि ।

**आरूप्यधातुरस्थानः,**

आरूप्यधातौ तृतीयेऽन्तिमे च स्थानभेदो नास्ति ।

**उपपत्त्या चतुर्विधः ।**

सत्ताक्रमेण चत्वारो भेदा वक्तुं शक्याः, ते च आकाशानन्त्यायन - विज्ञानानन्त्यायतना - ऽऽकिंचन्यायतन - नैवसंज्ञानासंज्ञायतनानीति ।

**निकायं जीवितं चाऽत्र निश्रिता चित्त-सन्ततिः॥३॥**

अत्र च आरूप्यधातौ, चित्तसन्तानो विज्ञानसन्तानः ( परत्र पुरुषपदवाच्यो ) निकाये सभागतायां जीवितीन्द्रिये च निश्रित आश्रितो भवति । यतस्तत्र शरीरादेरभावः ।

**नरकादि-स्वनामोक्ता गतयः पञ्च तेषु;**

तेषु त्रिषु धातुषु नरक–प्रेत–तिर्यङ्-मानुष–देवनामभिरुक्ताः पञ्च गतयः ।

**ताः ।**

**अक्लिष्टाव्याकृता एव सत्त्वाख्या नान्तराभवः ॥४॥**

ताश्च पञ्च गतयो विपाकतो ऽक्लिष्टाव्याकृता एव सन्ति । सत्वाख्या सत्वनिवासलोका अन्तराभवः च न गतिषु परिगण्यन्ते । अतएव गतीनां संख्या धातूनां स्थानक्रमेण न पञ्चाधिका ।

**नानात्वकायसंज्ञाश्च नानाकायैकसंज्ञिनः ।**
**विपर्ययाच्चैककायसंज्ञाश्चाऽरूपिणस्त्रयः ॥५॥**
**विज्ञान-स्थितयः सप्त;**

विज्ञानस्य ( अन्यत्र दर्शने जीवपदवाच्यस्य ) सप्तस्थितयःसन्ति ।

१—काये संज्ञायां च भेदः, यथा मनुष्याः, कामधातौ चातुर्माहाराजिकादयः षड् देवाः, रूपधातौ प्रथमध्याने ब्रह्मपुरोहित महाब्रह्म स्थाने द्वे, एतेषां नवानां लोकानां सत्त्वाः कायतो नामतश्च परस्परं भिन्नाः ।

२—काये नाना, परं नाम्नि एकः; यथा, प्रथमध्याने ब्रह्मकायिकाः ।

३—विपर्ययात् पूर्वस्य नाम्नि नाना, काय एकः; यथा आभस्वरा देवाः ।

४—नाम्नि एकः काये च एकः; यथा शुभकृत्स्ना देवाः ।

५—७ अरूपिण आरूप्यधातौ स्थिताः प्रथमास्त्रयः आकाशानन्त्यायतन-विज्ञानानन्त्यायतना-ऽकिंचन्यायतन संज्ञकाः ।

**शेषं तत्परिभेदवत् ।**

शेषं अवशिष्टं अपाय (नरक-प्रेत-तिर्यक्) चतुर्थध्यानाऽऽरूप्यस्थ चतुर्थं (नैवसंज्ञानासंज्ञायतनं भवाग्रसंज्ञकं) ति । अत्र विज्ञानतः परिभेदेन सत्त्वानां स्थितिः । अपाये दुःखा वेदना विज्ञानं निहन्ति । चतुर्थध्यानेऽसंज्ञिसमापत्त्या, भवाग्रे निरोधसमापत्त्या च विज्ञानं निहतं तिष्ठति । अतो विज्ञानतो भेदेन स्थितिः ।

**भवाग्रा-ऽसंज्ञिसत्त्वाश्च सत्त्वावासा नव स्मृताः ॥६॥**

भवाग्रं भवे = उत्पत्तौ सर्वतोऽग्रं, त्रिषु हि धातुषु आरूप्यधातुः सर्वश्रेष्ठः, तत्रापि सर्वोत्तमं नैवसंज्ञानासंज्ञायतनं, अतस्तस्य भवाग्रमिति संज्ञा । असंज्ञि सत्त्वाः चतुर्थध्याने अष्टौ, इति भवाग्रेण सह नव इमे सत्त्वावासाः = सत्त्वानां आवासाः, यत एषु सत्त्वा वस्तुकामतया एव वसन्ति ।

**अनिच्छावसनं नान्ये;**

अन्ये सत्वावासा न उच्यन्ते, यतस्तत्र अनिच्छया सत्त्वानां आवासो भवति, यथाऽपायगतिषु नरकादिषु बन्धनागारवत् अनिच्छया वासः ।

**चतस्रः स्थितयः पुनः ।**

पुनरपि स्थितयः चतुर्धा विभक्ताः, यथा रूपोपगा विज्ञान स्थितिः, वेदनोपगा, संज्ञोपगा, संस्कारोपगा च ।

**चत्वारः सास्रवाः स्कन्धा स्वभूमावेव;**

आस्रवसहिताः चत्वारः रूप-वेदना-संज्ञा-संस्कार-संज्ञकाः स्कन्धाः स्व स्वभूमौ एव भवन्ति ।

**केवलम् ॥७॥**

**विज्ञानं न स्थितिः प्रोक्तं;**

केवलं विज्ञानं तु भगवता बुद्धेन न स्थितिः प्रोक्तम् । क्षेत्रभावेन हि चत्वारो विज्ञान-स्थितय आदिष्टाः । विज्ञानं बीजभावेन सोपादानं, स्वभूमिकया तृष्णया सतृष्णं, कृत्स्नं सर्वसन्तानगतम् ।

**चतुः कोटिस्तु संग्रहे ।**

संग्रहे चतस्रः कोटयो भवन्ति । यथा—

१—विज्ञानं सप्तसु संगृह्यते, चतसृषु न स्थानमस्य ।

२—विज्ञानमन्तरेण अपायगतीनां चत्वारः स्कन्धाः; चतुर्थध्यानं भवाग्रं च चतसृषु संगृहीतानि

३—चत्वारः स्कन्धाः सप्तसु विज्ञानस्थितिषु, चतसृषु च संगृहीताः ।

४—अन्ये धर्माः (अपाय गत्यादीनां विज्ञानं, अनास्रवा धर्माश्च) न सप्तसु न चतसृषु विज्ञान स्थितिषु संगृहीताः ।

**चतस्रो योनयस्तत्र सत्वानामण्डजादयः ॥८॥**

अण्डज-जरायुज-संस्वेदजो-पपादुकेति चतस्रो योनयः सत्त्वानां भवन्ति ।

**चतुर्धा नर-तिर्यञ्चः;**

मनुष्याः तिर्यञ्चः चतुर्धा अपि जायन्ते । तद्यथा अण्डजौ शैलोपशैलनामानौ क्रौञ्चाण्डतो जातौ, मृगारमातुः विशाखाया द्वात्रिंशत्पुत्राः, पंचालराजस्य पंचशतपुत्राश्च श्रूयन्ते; जरायुजा इदानीं सर्व एव; स्वेदजा मन्धातृ-चारू-पचारू-कपोतमालिन्या-ऽम्रपालीत्यादयः; उपपादुकाः कल्पारम्भे जायमानाः सत्वाः ।

तिर्यञ्चोऽपि चतुर्धा जायन्ते, यथा अण्डजाः पक्षि-सरीसृपादयः, जरायुजाः पशवः, संस्वेदजा मत्कुणादयः, उपपादुकाः वर्षारम्भे शलभादयः; नागा गरूडाश्चोपपादुका अपि ।

**नारका उपपादुकाः ।**

नरके जायमानाः सर्व एव सत्त्वा उपपादुका एव ।

**अन्तराभव-देवाश्च;**

नारकवत् अन्तराभवाः (=मृतशरीरं विहाय परिग्रहीष्यमाण

शरीरं ग्रहीतुं मार्गे वर्तमाना विज्ञानसन्ततयः ) देवाश्च उपपादुका एव भवन्ति, न अण्डज-जरायुज-संस्वेदजाः ।

**प्रेता अपि जरायुजाः ॥ ९ ॥**

प्रेता जरायुजाः, अपि-शब्देन उपपादुका अपि भवन्ति। तत्र ऐतेषु उपपादुका योनिरेव अतिसाधारणा ।

**मृत्यू-पपत्ति-भवयोरन्तरा भवतीह यः ।**
**गम्य-देशाऽनुपेतत्त्वात् नोपपन्नोऽन्तराभवः ॥१०॥**

मृत्युभवात् अनन्तरं उत्पत्तिभवात्प्राक् ( पूर्वशरीरं त्यक्त्वा शरीरान्तर-ग्रहात् प्राक् ) यो भवः = स्थितिः सोऽन्तराभवः ( द्वयो रन्तराल भावात् ), गन्तव्य-स्थानं यतो न उपेतः, अत उपपन्नः ( = उपगतः = उत्पन्नः ) इति न वक्तुं शक्यते ।

**व्रीहि-सन्तान-साधर्म्याद् अविच्छिन्न-भवोद्भवः ।**

व्रीहीनां सन्ततिः यथा अविच्छिन्ना सती भवति, तद्वत् भवोत्पत्तिरपि अविच्छिन्ना एव भवितुमर्हति । मध्ये सन्तान विच्छेदश्चेत्, न तस्येयमुत्पत्तिरिति वक्तुं शक्यम् ।

**प्रतिबिम्बं असिद्धत्वात्, असाम्याच्चाऽनि दर्शनम् ॥११॥**

केचन आचार्या वदन्ति, यथा प्रतिबिम्बं बिम्बादर्शयोः सन्तानेन असम्बद्धयोरपि जायते, तथा मृतशरीरो-त्पत्स्यमानशरीरयोरपि अन्तराभव-सन्तति-द्वारा सम्बन्धस्य नास्त्यपेक्षा। तदिदं प्रतिबिम्बं न दृष्टान्त-रूपेण गृहीतुं शक्यम्; यतो वर्ण-सहितस्यैव प्रतिबिम्बं भवति, न वर्णविरहितस्य विज्ञानसन्तानस्येति, द्वयोः साध्योदाहरणयोः साम्यमपि नास्ति ।

**सहैकत्र द्वयाभावात् ;**

एकक्षणे द्वयोः बिम्ब-प्रतिबिम्बयोः स्थितिरपेक्षिता, सा च मृत्युक्षणस्थ-विज्ञानस्य शरीरान्तरोत्पत्तिक्षणस्थ विज्ञानस्य च पूर्वापरभावात् न सम्भवति। एककाल एकस्थाने च द्वयस्य अभावात् प्रतिबिम्बोदाहरणं अकिंचित्करम् ।

**( निस्सन्तानात्, द्विहेतुजात् ) ।**

बिम्बस्य न प्रतिबिम्बं सन्ततिभूतं, तेनाप्युदाहरणं सावद्यम्। दर्पण-बिम्बाभ्यां द्वाभ्यां हेतुभ्यां प्रतिबिम्बं जायते (तत्र प्रधानं दर्पणम्)। भवोद्भवे एकमेव कारणं एकस्मिन् क्षणे तिष्ठति। मृत्यु-स्थितिः, उत्पत्तिस्थितिर्वा। इत्थं प्रतिबिम्ब-सिद्धान्तः सदोष इति मृत्यूत्पत्यन्तराले ऽन्तराभवः स्वीकर्तव्य एव।

**कण्ठोक्तश्चाऽस्ति ;**

स्वकण्ठेनाऽपि भगवता सप्तभवाः, नरक-तिर्यग्योनि-प्रेत-देव-मनुष्य-कर्मा-ऽन्तराभवा उक्ताः, अतोऽपि।

**गन्धर्वः ;**

स अन्तराभव एव गन्धर्वः, तथाहि सूत्रे—'इध मातापितरो च सन्निपतिता होन्ति, माता च उतुनी होति, गन्धब्बो च पच्चुपत्थितो होति। एवं तिन्नं सन्निपाता गब्भस्स अवक्कन्ति होति" (मज्झिम निकाये ३ : २ : ६ : ५)

**पञ्चोक्तेः ;**

सूत्रे पञ्च कथनादपि अन्तरा भवसिद्धिः; तद्यथा अन्तरापरिनिर्वायी, उपपद्यपरिनिर्वायी, अनभिसंस्कारपरिनिर्वायी, साभिसंस्कारपरिनिर्वायी, ऊर्ध्वस्रोता च। अत्र प्रथमोऽन्तरा परिनिर्वायी साध्नोति अन्तराभवम्।

**गतिसूत्रतः ॥१२॥**

गति सूत्रे भगवता सप्त महापुरुषाणां गतय उक्ताः; तत्र अन्तरा परिनिर्वायिनो, आयुः प्रमाणान्तरे देवसमीपान्तरे वा ये क्लेशान् प्रजहति। इतोऽपि।

**एकक्षेपाद् असावैष्यत्पूर्वकाल-भवाकृतिः।**

असौ अन्तराभवसत्त्वः, एकस्य भवकारक-कर्मणः निक्षेपात्, ऐष्यत् (अन्तराले), पूर्वकाल भवे यादृशी आकृतिः, तादृशीमेव धारयति।

**स पुनर्मरणात्पूर्वं, उपपत्तिक्षणात्परः ॥१३॥**

स च पूर्वकाल भवः, मृत्युक्षणात्पूर्वं, उपपत्तिक्षणात्परं च भवति ।

भवाः—अन्तराभवः (मरणोपपत्तिभवयोरन्तराले वर्तमानाः पञ्च स्कन्धाः), उपपत्तिभवः (गम्यप्रवेशात् प्रति सन्धि-[ कोश. ३ : १८ ] पर्यन्तं), पूर्वकालभवः (उपपत्ति भवानन्तरं मरणभव-पर्यन्तं स्कन्धाः), मरणभवः (गम्य क्षणानन्तरं अन्तराभवपर्यन्तं) च ।

**स जाति-शुद्धदिव्याक्षि-दृश्यः;**

स अन्तराभवसत्त्वः समानजातीयकैः अन्यैरन्तराभविकैः सत्वैः सुविशुद्ध दिव्यनेत्रैश्च द्रष्टुं शक्यः । ज्ञेयेषु, विचिकित्सा-ऽमनसिकार-कायदौष्ठुल्य-स्त्यानमिद्धौ-द्धत्याऽत्यारब्धवीर्यौ-ह्रिल्य-छम्बितत्वना-नात्त्वसंज्ञा-ऽभिजल्पाऽनिध्यायित्वानीति एकादश अपक्षालनानि, तैर्वर्जितं चक्षुः सुविशुद्धं भवति ।

**कर्मर्द्धिवेगवान् ।**

स अन्तराभव सत्त्वः कर्मणः ऋद्धिबलेन वेगेन युक्तो भवति मार्गगमने ।

**सकलाक्षः;**

तदाऽयं सकलैरिन्द्रियैः संयुक्तो भवति ।

**ऽप्रतिघवान् ;**

तदा च प्रतिद्वन्द्वि रहितो भवति ।

**अनिवर्त्यः;**

धनुर्विमुक्तशरवत् , अयं मार्गात् निवर्तितुं अशक्यः ।

**स गन्धभुक् ॥१४॥**

स अन्तराभवसत्त्वो गन्धं भुंक्ते । गन्धं भोक्तुं अर्वति गच्छतीति निरुक्त्या गन्धर्व संज्ञा तस्यापरा ।

**विपर्यस्तमतिर्याति गतिदेशं रिरंसया ।**

भोगतृष्णया विपर्यस्तमतिः विरुद्धबुद्धिः रमणेच्छया गतिदेशं (शरीरान्तरं) गच्छति ।

**गन्धस्थानाभिकामोऽन्यः;**

अन्यः स्वेदजः सत्वः गन्धेच्छुः, उपपादुकश्च स्थानेच्छुः तत्तच्छरीरं गच्छति ।

**ऊर्ध्वपादास्तु नारकाः ॥१५॥**

नारकाः सत्वा ऊर्ध्वपादा भूत्वा नरकस्थानेषु गच्छन्ति । तथाहि—

"एते पतन्ति निरये उद्धपादा अवंसिरा ।
इसीनं अतिवत्तारो संयतानं तपस्सिनं ॥" ( सुत्तनिपाते )

**सम्प्रजानन् विशत्येकः तिष्ठत्यप्यपरोऽपरः ।**
**निष्क्रामत्यपि, सर्वाणि मूढो (हि) नित्यमण्डजः ॥१६॥**

गर्भावक्रान्तौ, एकः (चक्रवर्ती) सम्यक् जानन् गर्भं प्रविशति, अपरः (प्रत्येकबुद्धः) प्रविशति तिष्ठत्यपि सम्प्रजानन् , अपरः (सम्यक्सम्बुद्धः) सम्प्रजानन् प्रविशति तिष्ठति निष्क्रामत्यपि गर्भात् । अण्डजस्तु प्रवेश-स्थिति निष्क्रान्तिरूपाणि सर्वाणि कार्याणि असम्प्रजानन्नेव सर्वदा करोति ।

**गर्भावक्रान्तयस्तिस्रः चक्रवर्तिस्वयंभुवाम् ।**
**कर्म-ज्ञानो-भयेषां वा विशदत्वाद्यथाक्रमम् ॥१७॥**

पूर्वोक्ताः तिस्रो गर्भावक्रान्तयः क्रमशः चक्रवर्तिनः, प्रत्येकबुद्धस्य सम्यक्-सम्बुद्धस्य च भवन्ति । तत्र चक्रवर्तिनोऽनेक-जन्मसु कर्मणो विशदत्वात् ( = परिशुद्धभावात ) ज्ञानपूर्वको गर्भप्रवेशः । प्रत्येक-सम्बुद्धस्य अभ्यासेनानेकजन्मसु ज्ञानस्यविशदत्वात पूर्वत उत्कृष्टतरत्वाच्च प्रवेशे स्थितौ च ज्ञानं तिष्ठति । सम्यक्सम्बुद्धस्य अनेकजन्मसु कर्मणो ज्ञानस्य चेति उभयोर्विशदतमत्वात् तिस्रोऽपि गर्भावक्रान्तयो ज्ञान पूर्विका एव भवन्ति ।

**नात्मास्ति;**

आत्मेति नित्यो ध्रुवः स्वरूपतोऽविपरिणामधर्मा कश्चिद् पदार्थो नास्ति ।

**स्कन्धमात्रं तु कर्म-क्लेशाभि संस्कृतम् ।**
**अन्तराभव-सन्तत्या कुक्षिमेति प्रदीपवत् ॥१८॥**

कर्मभिः अविद्यादिक्लेशैश्च संस्कारमापन्नं पंचस्कन्धमात्रमेव, अन्तराभवसन्तानक्रमेण गर्भं प्रविशति । क्षणे क्षणे उत्पद्यमानं विनश्यमानं अपि तत् स्कन्धपञ्चकं, स्वसन्तानद्वारा, प्रदीपकलिकावत् एकत्वं बोधयति ।

**यथाऽऽक्षेपं क्रमाद्‌वृद्धः सन्तानः क्लेश-कर्मभिः ।**
**परलोकं पुनर्यातीति;**

आक्षेपा (कर्म) ऽनुसारं, क्रमेण क्लेशैः कर्मभिश्च वृद्धिंप्राप्ता स्कन्धसन्ततिः, एकं शरीरं विहाय परलोकं पुनः गच्छति । तत्र गर्भे क्रमोः—कललं, अर्बुदं, पेशी, घनः, प्रशाखः, ततो मनुष्यादिशरीराकृतिः ।

**अनादि भव-चक्रकम् ॥१९॥**

भवस्य जन्मनो यदिदं चक्रं, तद् आदिरहितं, कर्म क्लेशानामनादित्वात् ।

**स प्रतीत्यसमुत्पादो द्वादशांगः त्रिकाण्डकः ।**
**पूर्वाऽपरान्तयोर्द्वे द्वे मध्येऽष्टौ परिपूरणाः ॥२०॥**

स एव भवचक्ररूपोऽयं प्रतीत्यसमुत्पादः । स च द्वादशभिरंगैर्युक्तः, त्रिभिः काण्डैश्च । तत्र द्वादश अंगानि—अविद्या-संस्कार-विज्ञान-नामरूप-षडायतन-स्पर्श-वेदना-तृष्णो-पादान-भवजाति-जरामरणानि । तत्र पूर्वान्तेऽविद्या-संस्कारौ, अपरान्ते जाति-जरा-मरणे, मध्यभागे शेषाणि अष्टौ अंगानि परिपूरकानि भवन्ति ।

अत्र हि, पूर्वान्त-द्वयं अतीत-विषयं, अपरान्तद्वयं अनागत-विषयं, मध्यस्थाष्टकं च प्रत्युत्पन्नविषयम् । अन्यच्च—आदौ द्वयं (१,२) अतीतस्थितिः, ततः पञ्चकं (३–७) पूर्वस्य कार्यं; ततः त्रयं (८–१०) अनागत-स्थिति-कारणं, चरमं द्वयं (११,१२) अनागत-स्थितिः । अत्र कार्य-कारणभेदेन द्विधाऽपि प्रतीत्य समुत्पादो विभज्यते ।

तत्र द्वादशसु अंगेषु—

**पूर्वक्लेश-दशाऽविद्या ;**

पूर्वजन्मसु क्लेशानां रागादीनां दशा ( = अवस्था) एव अविद्या-शब्दवाच्या। क्लेशैरनुगता हि अविद्या परिजनैरिव राजा।

**संस्काराः पूर्वकर्मणः।**

तथैव पूर्वकर्मणां दशा **संस्कार** इत्युच्यते।

**सन्धिस्कन्धास्तु विज्ञानं ;**

प्रतिसन्धिक्षणे ( = उत्पत्तिक्षणे ) योनिगताः पञ्चस्कन्धा **विज्ञान** पदवाच्याः।

**नामरूपं अतः परम् ॥२१॥**

**प्राक् षडायतनोत्पादात् ;**

षडायतनानां ( काय - मनः - चक्षुः - श्रोत्र - घ्राण-रसनानां ) उत्पत्तितः पूर्वं योनिगमनानन्तरं च पंचस्कन्धा नामरूप-नामानो भवन्ति।

**तत्पूर्वं त्रिक-संगमात्।**

इन्द्रिय-विषय-विज्ञानानां परस्परसंगमात् स्पर्शस्य उत्पत्तिः, अत एव द्वादशसु अंगेषु स्पर्शात् पूर्वं **षडायतनं** उक्तम्।

**स्पर्शः;**

इन्द्रिय ( = चक्षुरादि )-विषय ( = रूपादि )-विज्ञाना ( = चक्षुर्विज्ञानादि ) नां एकत्र संयोगतः **स्पर्शो** जायते।

**प्राक् सुख-दुःखादि कारण-ज्ञान-शक्तितः ॥२२॥**

सुख दुःखादिकारण-ज्ञानस्य शक्तिः यदा उत्पद्यते, ततः प्राग् ( यावद् वेदना न जायते ) अयं स स्पर्शः।

**वित्तिः प्राङ् मैथुनात् ;**

संयोगात् ( यथा स्त्रीपुरुषयोः ) पूर्वं **वेदनो**च्यते।

**तृष्णा भोगमैथुन-रागिणः।**

भोगे मैथुने च रागवतः तात्कालिकी अवस्था तृष्णा।

उपादानं तु भोगानां प्राप्तये परिधावतः ॥२३॥

भोगानां लाभार्थं परितः प्रयतमानस्य तात्कालिकी अवस्था उपादानम्। चतुर्गुण-रागोऽप्युपादानं (कोश. ५: ३८)।

स भविष्यद्भव-फलं कुरुते कर्म तद्भवः।

सोऽयं, भविष्यद्भवः फलं यस्य, तादृशं कर्म कुरुते, तत् कर्म एव भव इत्युच्यते। भोगोपधावनेन संचितं कर्म पुनर्भव-कारणम्।

प्रतिसन्धिः पुनर्जातिः;

पुनः प्रतिसन्धिः जन्मैव जातिः। मृत्यो पश्चात् यावत्पुनर्जन्म-स्थानं जातिरुच्यते। प्रत्युत्पन्न-स्थिति-परीक्षायां यस्य नाम विज्ञानं, अनागतस्थिति-परीक्षायां तदेव जातिरित्युच्यते।

जरामरणं आविदः ॥२४॥

जातित आरभ्य यावद् वेदनां जरामरणं उच्यते।

चतुर्विधोऽपि प्रतीत्यसमुत्पादः क्षणिक—(क्षणेभवः क्षणोऽस्यास्तीति वा)—प्राकर्षिक—(प्रकर्षेण दीव्यति चरति वा प्रबन्धयुक्त इत्यर्थः)—सम्बन्धिका (हेतु-फल-सम्बन्धयुक्तः)—ऽऽवस्थिक (द्वादश पंचस्कन्धिका अवस्था यस्य) भेदात्।

आवस्थिकः किलेष्टोऽयं;

अयं प्रतीत्य समुत्पाद आवस्थिकः किल (= निश्चयेन) अभिप्रेतो भगवता। स्कन्ध-पञ्चक-सन्ततेः सा सा अवस्थितिरेवहि द्वादशभिः अविद्याद्यंगैरुच्यते।

प्राधान्यात्त्वंगकीर्तनम्।

अविद्यादीनां प्रधान-भावात् तन्नामभिः द्वादशांग-कथनम्। तथाहि यस्यां अवस्थायां अविद्यायाः प्राधान्यं तदविद्यांगं इत्थमग्रेऽपि योज्यम्।

पूर्वा-ऽपरान्त-मध्येषु सम्मोह-विनिवृत्तये ॥२५॥

अतीता-ऽनागत-प्रत्युत्पन्नेषु त्रिषु काण्डेषु विभजनमपि सम्मोह दूरीकरणार्थम् । अतीतसम्मोहः—"आसं नु खलु अतीते", "नासं नु खलु अतीते", "कथं क आसं" इति । अनागत सम्मोहः—"भविष्यामि नु खलु अनागते"० इति । उभयान्तरालसम्मोहः—"किमिदं", "कथमिदं", "के वयं" इति ।

**क्लेशः त्रीणि द्वयं कर्म सप्त वस्तु, फलं तथा ।**

अविद्या-तृष्णो-पादानानि त्रीणि क्लेशः । संस्कार-भवौ कर्म । विज्ञान-नामरूप-षडायतन-स्पर्श-वेदना-जाति जरामरणानि वस्तु (= आश्रयः क्लेश-कर्मणां) । वस्तु-भूतान्येव अंगानि फल (विपाक) भूतान्यपि, अतः तानि सप्तवस्तूनि फल-भूतान्यपि ।

**फल-हेत्वभिसंक्षेपो द्वयोर्मध्यानुमानतः ॥२६॥**

मध्यस्थानां अष्टानां अंगानां अनुमानतः, आदिमयोः अविद्या-संस्कारयोः हेतुसंज्ञा, अन्त्ययोर्जातिजरामरणयोः फलसंज्ञा च । अतीताऽनागत-भव-क्रमेण च ।

**क्लेशात् क्लेशः क्रिया चैव ततो वस्तु ततः पुनः ।**
**वस्तु क्लेशाश्च जायन्ते भवांगानां अयं नयः ॥२७॥**

क्लेशात् क्लेशो जायते (यथा तृष्णात् उपादानं); क्लेशात् क्रिया (= कर्म) जायते (यथा उपादानाद् भवः अविद्यायाः संस्काराश्च); क्रियातः वस्तु (= आश्रयः) (यथा संस्कारेभ्यो विज्ञानं, भवात् जातिर्वा); पुनः वस्तुतः वस्तु (यथा विज्ञानात् नामरूपं, नामरूपात् षडायतनं, स्पर्शात् वेदना, जातेर्जरामरणं); वस्तुतः क्लेशाः (यथा वेदनातः तृष्णा) । अयं हि भवांगानां (भवचक्रस्य प्रतीत्यसमुत्पादस्य अंगानां द्वादशानां अविद्यादीनां) नियमः ।

**हेतुरत्र समुत्पादः समुत्पन्नः फलं मतम् ।**

अत्र प्रतीत्यसमुत्पादे हेतुभूतं अंगं (१;२) समुत्पादः (समुत्पद्यतेऽस्मादिति) उच्यते । फलभूतं (११,१२) अंगं प्रतीत्य समुत्पन्नम् (समुत्पद्यतेऽयमिति) । कार्य-कारणोभयगुण-संयुक्तं अंगं (३-१०) प्रतीत्य समुत्पादं प्रतीत्य समुत्पन्नं वोच्यते ।

**विद्या-विपत्तो धर्मोऽन्योऽविद्याऽमित्राऽनृतादिवत् ॥२८॥**

विद्या-विरोधी अन्यो धर्मोऽविद्येत्युच्यते; यथा मित्र विरोधी अमित्रः, ऋत ( = सत्य )-विरोधि अनृतमिति। विद्याया अभावोऽविद्येति तु नाभिप्रेता।

**संयोजनादि वचनात्;**

संयोजन-बन्धना-ऽनुशया-ऽऽस्रवौ-घ-योगादय एतत्पर्याया उक्ताः। तत्कथनमपि अमुमेवाऽर्थं द्रढयति।

**कुप्रज्ञा चेन्न दर्शनात्।**

**दृष्टेस्तत्सम्प्रयुक्तत्वात्;**

कुत्सिता प्रज्ञा = कुप्रज्ञा, सा एव अविद्या इति चेत् न। कुतः? कुप्रज्ञा अपि दर्शनं ( = दृष्टिः ) एव। संयोजनेषु हि दृष्टिरविद्या चेति द्वयं पृथक् उद्दिष्टम्। दृष्टिः अविद्या-सम्प्रयुक्ता च उच्यते। दृष्टौ अविद्याया अन्तर्भावे, अविद्यासम्प्रयुक्ता दृष्टिरिति कथनं कथं संगच्छते?

**प्रज्ञोपक्लेश-देशनात् ॥२९॥**

भगवतो देशनायामपि प्रज्ञाया मलरूपेण अविद्या उच्यते— "अविद्योपक्लिष्टा प्रज्ञा न विशुद्ध्यति" ( संयुक्त नि० )।

**नाम त्वरूपिणः स्कन्धाः;**

रूपभिन्नाः चत्वारः स्कन्धाः ( = वेदना-संज्ञा-संस्कार-विज्ञानाभिधाः ) नामेति पदेन व्यवह्रियन्ते।

**स्पर्शाः षट् सन्निपातजाः।**

इन्द्रिय-विषय-विज्ञानानां सन्निपातेन ( = एकत्र संयोगेन ) जाता षट् ( चक्षुः-श्रोत्र-घ्राण-जिह्वा-काय-मनः-स्पर्शाः ) स्पर्शा उच्यन्ते।

**पंच प्रतिघ-संस्पर्शाः षष्ठोऽधिवचनाह्वयः ॥३०॥**

चक्षुः-स्पर्शादयः पञ्च स्पर्शा प्रतिघ-स्पर्शा उच्यन्ते। यत आश्रयालम्बेन परस्परं प्रतिहत्य एनमुत्पादयतः। षष्ठो मनःस्पर्शः, अधिवचन ( = नाम )-संज्ञकः।

**विद्या-ऽविद्ये-तर-स्पर्शा अमल-क्लिष्ट-शेषिताः।**

विद्यायाः (=अनास्रव-प्रज्ञायाः) अविद्यायाः (=सास्रव ज्ञानस्य), इतरस्याः (=नैवविद्यानाविद्याया अव्याकृतप्रज्ञायाः) स्पर्शाः यथासंख्यं अमलाः, क्लिष्टा, उभयभिन्नाः (नैवक्लिष्टनाक्लिष्टाः) च भवन्ति।

**व्यापादानुनयस्पर्शौ ;**

व्यापादस्य अनुनयस्य च स्पर्शौ व्यापादेन अनुनयेन च सम्बद्धौ स्त।

**सुखवेद्यादयः त्रयः ॥३१॥**

सुखवेदनीया असुखवेदनीया नसुखनासुखवेदनीया इति त्रयः स्पर्शा सुख-दुख-नसुखनदुःख-शब्दै र्व्यवह्रियन्ते।

**तज्जाः षड्वेदना ;**

चक्षुः-श्रोत्र-घ्राण जिह्वा-काय-मनः-स्पर्शेभ्यः षड्भ्यः षड् वेदना जायन्ते।

**पंच कायिकी चैतसी परा।**

तत्र चक्षुः-श्रोत्र-घ्राण-जिह्वा-काय-स्पर्शेभ्यो जाताः पंच वेदना (रूप-शब्द-गन्ध-रस-स्प्रष्टव्यरूपा) कायिक्यः (काय सम्बन्धिन्यः) सन्ति। परा मनः स्पर्श-जा (धर्म-) वेदना चैतसी।

**पुनश्चाष्टादशविधा सा मनोपविचारतः ॥३२॥**

सा चैतसी वेदना, मनसः सौमनस्य-दौर्मनस्यो-पेक्षेत्युपविचार-भेदन चक्षुरादिस्पर्श (रूपादि)-षट्क-सम्बन्धात् अष्टादशभेदा भवति। यथा सौमनस्यसहगत चक्षुः स्पर्श (रूप)-वेदना, सौ० श्रोत्र-स्पर्शवेदना......इत्थं सौमनस्यासहगताः षट्, तथा दौर्मनस्य सहगतचक्षुः स्पर्शवेदनेत्यादि षट्, तथा उपेक्षासहगता अपि षट्, सर्वा अष्टादश चैतस्यो (मानस्यो) वेदना।

**कामे स्वालम्बनाः सर्वाः;**

कामधातौ सर्वाः ताः मनोपविचारा अष्टादशवेदनाः स्वधातु (कामधातु)-गताऽलम्बन (=विषय) वत्यः।

**रूपी द्वादश-गोचराः।**

रूपधातुगतवेदना गन्धः रसयोः षड् उपविचारानन्तरेण अवशिष्टानि द्वादश [ (सौमनस्य + दौर्मनस्य + उपेक्षा) रूप + शब्द + स्प्रष्टव्य + धर्म) ] आलम्बनानि ( = विषयान् ) अधिकुरुते ।

**त्रयाणामुत्तरः;**

उत्तरः आरूप्यधातुः, तत्रस्था वेदना त्रयाणामेव [ (सौमनस्य + दौर्मनस्य + उपेक्षा) धर्म ] ।

**ध्यानद्वये द्वादश कामगाः ॥३३॥**

**स्वोऽष्टालम्बनमारूप्यं द्वयोः;**

प्रथम-द्वितीयध्यानयोः षड् सौमनस्य सहगताः, षड् उपेक्षा-सहगताश्चोपविचारा भवन्ति । तेषां आलम्बनानि ( = विषयाः) कामधातुस्थितानि । स्वः (= रूपधातु) गतोपविचाराणां अष्टौ आलम्बनानि—[ (सौमनस्य + उपेक्षा) (रूप + शब्द + स्प्रष्टव्य + धर्म) ]।

**ध्यानद्वये तु षट् ।**

तृतीय-चतुर्थध्यानयोस्तु उपेक्षासहगता षड् उपविचारा भवन्ति ।

**कामः षण्णां, चतुर्णां, स्व एकस्यालम्बनं परः॥३४॥**

कामधातुः षण्णां, रूप - शब्द - गन्ध - रस - स्प्रष्टव्य- धर्माणां आलम्बनम् ।

स्वः = रूपधातुः चतुर्णां रूप-शब्द-स्प्रष्टव्य-धर्माणाम् । परः आरूप्यधातुः एकस्य धर्मस्यैव ।

**चत्वारोऽरूपि-सामन्ते रूपगाः, एक ऊर्ध्वगः ।**

**एको मौले स्वविषयः;**

रूपधातुगताः चत्वारः [ ( उपेक्षा ) ( रूप + शब्द + स्पर्श + धर्म ) ] आरूपि सामन्ते आकाशानन्त्यायतन सामन्तके ( कोश० ७ : २२ ) यावत् । ऊर्ध्वग आरूप्यधातुगत एक (= धर्मोपविचारः ) एव; मौले ( = आरूप्ये ) च स एको धर्मोपविचारः स्वधातुगतं एक एव विषयीकरोति; तत्रहि स्वतो निम्नधातुगतो विषयो न भवितुमर्हति ।

**सर्वेऽष्टादश सास्रवाः ॥३५॥**

कामधातौ वर्तमानाः सर्वेऽष्टादश = [ ( सौमनस्य + दौर्मनस्य + उपेक्षा ) ( रूप + शब्द + गन्ध + रस + स्प्रष्टव्य + धर्म ) ] उपविचाराः सास्रवा ( = क्लेशसहिताः = मलिनाः ) एव।

( १. कामधातुगता अष्टादश, २. प्रथम-द्वितीय ध्यानयोः दश, ३. तृतीय-चतुर्थध्यानयोः चत्वारः, ४. अरूप्ये धर्मोपविचारः इतीमेऽपि सास्रवा एव )।

**उक्तं च वक्ष्यते चान्यत्;**

पूर्वं ( कोश. १ : १६,६ ) विज्ञानं षडायतनं च उक्ते, संस्कार-भवौ उत्तरत्र चतुर्थ कोशस्थाने, तृष्णो-पादाने पञ्चम कोशस्थाने च वक्ष्यन्ते।

**अत्र क्लेश इष्यते।**

**बीजवत् नागवत् मूलवृक्षवत् तुषवत् तथा ॥३६॥**

प्रतीत्यसमुत्पादः क्लेश-कर्म-वस्तुषु त्रिधा विभक्त इत्युक्त पूर्वम् : क्लेशात् क्लेश-कर्म-वस्तूनि तथैव भवन्ति, यथा—बीजात् शाखापत्रादि, नागः सर्वथा जलार्द्रः, मूलात् वृक्षः, तुषात् धान्य-प्ररोहसन्ततिः।

**तुष-तण्डुलवत् कर्म तथैवौषधि पुष्पवत्।**

कर्म तुषसहित-तण्डुलसदृशं, ( तुष-सहित एव तण्डुलः प्ररोह समर्थः ), औषधेः पुष्पं वा यथा ( तद्धि फलं उत्पाद्य म्लायते )।

**सिद्धान्नपानवद्वस्तु;**

सिद्धं पक्वं अन्नपानं खाद्यपेयं यथा तद्वत् वस्तु। सिद्धं अन्नपा यथा अन्नपानान्तरं नोत्पादयति, तथा वस्त्वपि न वस्त्वन्तरं उत्पादयितुं समर्थम्; तथा न चेत् निर्वाणं असम्भवं हि विपाकाद् विपाकान्तरे जायमाने।

**तस्मिन् भवचतुष्टये ॥३७॥**

**उपपत्तिभवः क्लिष्टः सर्वक्लेशैः स्वभूमिकैः।**

अन्तराभवः, पूर्वकालभवः, मरणभवः, उपपत्तिभवश्चेति

चत्वारो भवाः तेषु चतुर्षु उपपत्तिभवः स्वभूमि ( काम धातु-प्रथम-ध्यानादि ) गतैः सर्वैः क्लेशैः मलिनः ।

**त्रिधाऽन्ये;**

अन्ये भवाः—अन्तराभवः, पूर्वकालभवः, मरणभवश्चेति त्रयः कुशला-ऽकुशला-ऽव्याकृताः त्रिविधा भवन्ति ।

**त्रय आरूप्येषु;**

आरूप्येषु आकाशानन्त्यायतनादिषु चतुर्षु स्थानेषु त्रयो भवाः ( = पूर्वकाल-मरणो-पपत्ति भवाः ) भवन्ति ।

**आहारस्थितिकं जगत् ॥३८॥**

आहारेण जगतः स्थितिः । तत्राहाराः—कवलीकारः, स्पर्शः, मनस्संचेतना, विज्ञानं चेति चत्वारः । कवलीकार आहारो द्विविधः, औदारिकः सूक्ष्मश्च । सूक्ष्मोऽन्तराभविकानां ( गन्धर्वः ३ : ३० ), देवानां, प्राथमकल्पिकानां मनुष्याणां च आहाराः । सूक्ष्म-सत्वानां हि आहारः सूक्ष्मः ।

**कवलीकार आहारः कामे त्र्यायतनात्मकः ।**

कामधातौ कवलीकार आहारः गन्ध-रस-स्पर्शरूपः आयतन-त्रयात्मकः ।

**न रूपायतनं ते स्वाक्षमुक्ताननुग्रहात् ॥३९॥**

रूपायतनं नास्ति आहारः । आहारो हि इन्द्रिय-शरीरयोः अनुग्राहकः, रूपे च नास्ति तादृशं अनुग्राहकत्वम् । नेदं स्वकीयं इन्द्रियं अनुगृह्णाति, न च मुक्त-पुरुषं अर्हन्तं अनुगृह्णाति ।

**स्पर्श-संचेतना-विज्ञा आहाराः सास्रवास्त्रिषु ।**

कामादिषु त्रिषु अपि धातुषु स्पर्शः मनस्संचेतना, विज्ञानं इति त्रय आहाराः सास्रवाः । तत्र स्पर्शः इन्द्रिय-विषय-विज्ञानानां त्रयाणां एकत्र संयोगेन जायते ( ३ : ३० ) । मनः संचेतना मानसं कर्म । विज्ञानं विज्ञान-स्कन्धः ।

**मनोमयः [सम्भवैषी] गन्धर्वश्चान्तराभवः ॥४०॥**

[ निर्वृत्तिः ];

गन्धर्वः अन्तराभविकः मनोमय उच्यते मनोनिर्जातत्वात्; + गन्धर्वः गन्धभक्षणात्; अभिनिर्वृत्तिः, यतोऽस्य निर्वृत्तिः उपपत्तिः अभिमुखे भवति।

सम्भवैषी, यतोऽयं उपपत्तिभवस्थाने गमनेच्छुः;

**[ अत्र वृद्ध्यर्थं आश्रया- ] ऽऽश्रि तयोर्द्वयम्।**

**द्वयमन्यभवाक्षेपनिर्वृत्त्यर्थं यथाक्रमम् ॥४१॥**

तत्र आहारेषु कवलीकाराहारः आश्रयस्य ( = शरीरस्य ) वृद्ध्यर्थं भवति; स्पर्शाहारश्च आश्रितस्य ( = चित्तचैत्तस्य ) वृद्ध्यर्थं भवति। अन्यद् द्वयं मनः-संचेतना विज्ञानं च, तत्र मनः-संचेतना पुनर्भव आक्षिपति ( = पुनर्भवे क्षेपणार्थं ), विज्ञानं निर्वर्त्तयति उपपादयति ( = उपपत्यर्थम् )।

**छेद-संधान-वैराग्य-हानि-च्युत्यु-पपत्तयः।**

**मनोविज्ञान एवेष्टाः;**

छेदः, सन्धिः ( = संयोगः ), वैराग्यं, परित्यागः च्युतिः ( = मृत्युः ), उपपत्तिः ( = उद्भवः = उत्पत्तिः ) मनोविज्ञान एव परिगण्यन्ते।

**उपेक्षायां च्युतोद्भवौ ॥४२॥**

च्युतः ( = च्युतिः = मृत्युः ), उद्भवश्चेति द्वयं उपेक्षा ( = नसुखनासुख )-वेदनायां ( मनो-विज्ञान एव ) गृह्यते।

**नैकाग्राऽचित्तयोरेतौ;**

एतौ च्युत्युद्भवौ मनो-विज्ञाने तिष्ठतः, परं तथापि एकाग्रचित्ते ( = समाहित चित्ते ) न भवतः, विसभागभूमिकत्वात्, अभिसंस्कारिकत्वात्, अनुग्राहकत्वाच्च; तथैव अचित्ते निरोधसमापत्ति गते मनुष्ये, असंज्ञि समापत्ति गते देवे वा नभवतः।

**निर्वात्यऽव्याकृतद्वये।**

सत्वोऽव्याकृतयोः द्वयोः विज्ञानयोः—ऐर्यापथिके विपाकजे ( उपेक्षाविज्ञाने ) वा निर्वाणं गच्छति।

**क्रमच्युतौ पाद-नाभि-हृदयेषु मनश्च्युतिः ॥४३॥**

**अधो-नृ-सुरगा-ऽजानां;**

आकस्मिकघटनाभावात् क्रममृत्यौ—अधोगानां ( नारक-प्रेत-तिरश्चां ) पादे, मानुषानां ( मानुषलोकोत्पत्स्यमानानां ) नाभ्यां; देवेषु गमिष्यतां हृदये, अजानां (= पुनर्जन्मरहितानां अर्हतां ) अपि हृदय एव मनसः ( = विज्ञानस्य ) च्युतिः भवति ।

**मर्मच्छेदः त्वबादिभिः ।**

मर्मच्छेदः ( मर्मस्थानेषु छेदः येन मरणं निश्चितं ), अप्-तेजो-वायुभिर्भवति, तत्प्रतिनिधिभिः कफ-पित्त-वातैर्वा ।

**सम्यङ्-मिथ्यात्व-नियता आर्या-ऽऽनन्तर्यकारिणः ॥४४॥**

सम्यक् = निर्वाणं, तन्नियताः ( = तत्परायणाः ) आर्याः ( = स्रोत आपन्न-सकृदागाम्य-ऽनागाम्य-ऽर्हन्तः ) भवन्ति । आनन्तर्य-कारिणः नारक-प्रेत-तिर्यञ्चः मिथ्यात्व-परायणा भवन्ति । आनन्तर्याणि वक्ष्यन्ते ( ४ : ९६ ) उभयत्र अनियता ये, ते न आर्या न च आनन्तर्य-कारिणः ।

**तत्र भाजनलोकस्य संनिवेशं उशन्त्यधः ।**

**लक्षषोडशकोद्वेधं असंख्यं वायुमण्डलम् ॥४५॥**

तत्र जना निवासलोकस्य संनिवेशं आयामादिकं ज्ञातुं वांछन्ति । तदुच्यते । असंख्यं ( = अपरिमेयं ) वायुमंडलं, अधोभागे षोडश-लक्षयोजन - गम्भीरं अस्ति ।

**अपामेकादशोद्वेधं सहस्राणि च विंशतिः ।**

अपां जलस्य मण्डलं एकादशलक्षविंशति (११,२०,०००) योजनं गम्भीरम् ।

**अष्टलक्षोच्छ्रयं पश्चात् शेषं भवति कांचनम् ॥४६॥**

उपरि अष्टलक्षयोजनं उच्छ्रितं जलमंडलं, अवशिष्टं ( ११,२०,००० – ८,००,००० = ३,२०,००० ) त्रिलक्ष - विंशति - योजनं काञ्चन - मयं भूमण्डलमस्ति ।

**तिर्यक् त्रीणि सहस्राणि सार्द्धशतचतुष्टयम् ।**

**लक्ष-द्वादशकं चैव जल-कांचन-मण्डलम् ॥४७॥**

**समन्ततस्तु त्रिगुणं;**

जलमंडलं कांचनमंडलं च द्वादशलक्ष-त्रिसहस्र-चतुः शत-पञ्चाश- ( १२,०३,४५० ) योजनं व्यासे, समन्ततः परिधौ त्रिगुणम् ( = ३६,४०,३५० योजनम् )।

**तत्र मेरुर्युगन्धरः।**

**ईषाधरः खदिरकः सुदर्शन-गिरिस्तथा ॥४८॥**

**अश्वकर्णो विनतको निमिंधर-गिरिस्तथा।**

**द्वीपाः बहिश्चक्रवालाः;**

तत्र काञ्चनभूमण्डले मेरुः, युगन्धरः, ईषाधरः, खदिरकः, सुदर्शनः, अश्वकर्णः, विनतकः, निमिंधरश्चेति अष्टौ पर्वताः। क्रमेणाऽन्योन्यं परिक्षिप्य। निमिंधरं परिक्षिप्य द्वीपाः ( जम्बू - पूर्वविदेहाऽवरगोदानीयो-त्तरकुरवः )। सर्वतो बहिः परिक्षिप्य चक्रवालपर्वताः सन्ति।

**सप्त हैमाः स आयसः ॥४९॥**

**चतूरत्नमयो मेरुः;**

तत्र सप्त पर्वताः सुवर्णमयाः। चक्रवालो लोहमयः। मेरुः चतूरत्नमयः। तद्यथा उत्तरस्यां सुवर्णमयः, पूर्वस्यां रजतमयः, दक्षिणस्यां नीलमणिमयः, पश्चिमस्यां वैदूर्यमयः। अस्य जम्बूद्वीप - संमुखीनो भागो नीलमणिमयः।

**जलेऽशीति सहस्रके।**

**मग्न ऊर्ध्वं जलान्मेरुर्भूयोऽशीति सहस्रकः ॥५०॥**

अशीतिसहस्र ( ८०,००० ) - योजन - गम्भीरे जले तावन्मात्रः मग्नोऽयं, पुनश्चायं मेरुः जलस्योपरि अपि अशीतिसहस्र - योजनमेव उच्छ्रितः।

**अर्धार्धहानिरष्टासु समोच्छ्रायघनाश्च ते।**

मेरुतः क्रमेण अर्द्धं अर्द्धं प्रमाणं अन्येषां पर्वतानां ह्रस्यति। तेषां पर्वतानामपि मेरुवत् उच्छ्राय-घनत्वे तुल्य एव = यावानेव जलादुपरि पर्वतभागः जलस्याधोऽपि तावानेव भाग इत्यर्थः। तद्यथा उच्छ्राये—

| | | |
|---|---|---|
| मेरुः | ८०,००० | योजनम् । |
| युगन्धरः | ४०,००० | ,, |
| ईषाधरः | २०,००० | ,, |
| खदिरकः | १०,००० | ,, |
| सुदर्शनः | ५,००० | ,, |
| अश्वकर्णः | २,५०० | ,, |
| विनतकः | १,२५० | ,, |
| निमिंधरः | १,६२५ | ,, |
| चक्रवालः | ३१२½ | ,, |

**सीताः ससान्तराण्येषां आद्याऽशीति सहस्रिका ॥५१॥**

एषां पर्वतानां अन्तराले सप्त सीताः जल-परिखावत् सन्ति । तत्र प्रथमा सीता मेरु-युगन्धरयोर्मध्ये ऽशीति-सहस्र-योजन-विस्तृतोऽस्ति ।

**आभ्यन्तरः समुद्रोऽसौ त्रिगुणः स तु पार्श्वतः ।**
**अर्धार्धेनाऽपराः सीताः शेषं बाह्यो महोदधिः ॥५२॥**
**लक्षत्रयं सहस्राणि विंशति द्वे च;**

असौ सीता हि आभ्यन्तरः समुद्रः, स च समुद्रः पार्श्वतः परिधिविस्तारे त्रिगुणः ( = २,४०,००० योजनम् )। अन्याः सीताः स्वपूर्वाभ्योऽर्द्धपरिमाणाः । सर्वतो बहिः महोदधिः निमिंधर-चक्रवालयोरन्तराले महासमुद्रः त्रिलक्षद्वाविंशतिसहस्र ( ३,२२,००० ) योजनः ।

**तत्र तु ।**

**जम्बूद्वीपो द्विसाहस्रः त्रिपार्श्वः शकटाकृतिः ॥५३॥**
**सार्द्धं त्रियोजनं त्वेकं;**

तत्र द्वीपेषु जम्बूद्वीपः ( मेरोर्दक्षिणभागे ) शकटवत् अस्ति । तत्र त्रयाणां भुजानां एकैको द्विसहस्र-योजनः (२,०००), एको भुजस्तु सार्द्धत्रियोजनः ( ३½ ) ।

**प्राग्विदेहार्द्धचन्द्रवत् ।**
**पार्श्वत्रयं तथाऽस्यैकं सार्द्ध-त्रिशत-योजनम् ॥५४॥**

मेरोः पूर्वभागे पूर्वविदेहोऽर्धचन्द्राकृतिः। अस्यापि पार्श्वत्रये जम्बूद्वीपवत् एकैको भुजोद्विसहस्रयोजनः, एकश्च त्रिशत-पंचाशद्योजनः।

**गोदानीयः सहस्राणि सप्त सार्द्धानि मण्डलः।**

**सार्द्धं द्वे मध्यमस्य;**

अवरगोदानीयः (मेरोः पश्चिमदिशाभागे स्थितो द्वीपः) मण्डलाकारः (=गोलाकारः), तत्र परिधिः सप्तसहस्रपंचशत (७,५००) योजनः मध्यमस्य (=व्यासस्य) मानं द्विसहस्रपंचशत (२,५००) योजनम्।

**अष्टौ चतुरस्रः कुरुः समः ॥५५॥**

उत्तरकुरुद्वीपः (मेरोरुत्तरभागेऽवस्थितः) समचतुरस्रः (=वर्गाकारः), सीमामानमस्य अष्टयोजनसहस्रं; एकश्च भुजः द्विसहस्र-(२,०००) योजनः।

**देहा विदेहाः कुरवः कौरवाश्चामराऽवराः।**

**अष्टौ तदन्तरद्वीपाः शाठा उत्तरमंत्रिणः ॥५६॥**

तेषां चतुर्णां द्वीपानां अष्टौ इमे ऽन्तरद्वीपाः। तद्यथा—देहा विदेहाः पूर्वविदेह-समीप-वर्त्तिनौ; कुरवः कौरवाश्चोत्तरकुरु-समीपस्थौ; चामरा अवरचामराश्च जम्बूद्वीपोपगौ; शाठा उत्तरमंत्रिणश्च गोदानीय-पार्श्ववर्त्तिनौ। चमरद्वीपे राक्षसानां वास इत्येके। अन्यत्र मानुषावासाः।

**इहोत्तरेण कीटाद्रि-नवकाद् हिमवान्, ततः।**

**पंचाशद्-वि(पुलाऽगाध) सरोऽर्वाग् गन्धमादनात् ॥५७॥**

इह जम्बूद्वीपे उत्तरदिग्भागे (प्रथमं त्रयः, पुनः त्रयः, तदुत्तरेण पुनः त्रय इत्थं) नवकीटाद्रयः (=कीटाकृतित्वात् कीटाद्रयः) सन्ति। तदनन्तरं हिमालयः। हिमालयस्य उत्तरस्यां विपुलं अगाधं च पंचाशद्योजनविस्तृतं अनवतप्तं नाम सरः। ततोऽग्रे गन्धमादन पर्वतः। इत्थं अनवतप्तं हिमवतः परस्तात्, गन्धमादनपर्वततः अर्वाक् (=प्राग्)। (अनवतप्तात् गंगा-सिन्धु-वक्षु-सीतेति चतस्रो नद्यो निर्गच्छन्ति। अनवतप्तसमीपे जम्बूवृक्षो येनाऽयं जम्बूद्वीपः)।

**अधः सहस्रैर्विंशत्या तन्मात्रोऽवीचिरस्यहि ।**
**तदूर्ध्वं सप्तनरकाः सर्वेऽष्टौ षोडशोत्सदाः ॥५८॥**

अस्य जम्बूद्वीपस्य अधः विंशतिसहस्रयोजनं, तावत्परिमाणं ( २०,००० ) च अवीचिर्नाम नरकः ( न विद्यते वीचिः सुखमिति-व्युत्पत्त्या )। तस्य ऊर्ध्वं सप्तनरकाः क्रमेण प्रतापन-तपन-महा-रौरव-रौरव-संघात-कालसूत्र-संजीवाः ), सर्वं इमेऽष्टौ। षोडश उत्सदाः, अधिक-यातना-स्थानत्वात् उत्सदा इति। 'स्फुटार्थायां नरकावरोधात् ऊर्ध्वं एषु कुकूलादिषु सत्वाः सीदन्तीत्युत्सदाः। पिटके हि—

"इत्येतेऽष्टौ निरया आख्याता दुरतिक्रमाः।
आकीर्णा रौद्रकर्मभिः प्रत्येकं षोडशोत्सदाः॥
चतुः स्कन्धाः चतुर्द्वारा विभक्ता भागशोमिथः।
अयः-प्रकार-पर्यन्ता अयसा-प्रति-कुब्जिताः॥
तेषामयोमयी भूमिर्ज्वलिता तेजसा युता।
अनेकयोजनशतैर्ज्वालाभिः तिष्ठति स्फुटा॥"
( दीर्घनि० १६:१६; अंगु० नि० १ : १४१ म० नि० ३ : १८२ )

**कुकूलं कुणपंचैव क्षुरमार्गादिकं नदी ।**
**तेषां चतुर्दिशं;**

तेषां नरकाणां चतुर्षु पार्श्वेषु कुकूलं, कुणपं, क्षुरमार्गः ( असि-पत्रवनं, श्यामशबल-श्व-स्थानं, अयः-शाल्मलीवनं इति त्रयं आदि-शब्देन ), नदी ( खारोदका = वैतरणी ) चेति चत्वार उत्सदाः।

**शीता अन्येऽष्टावर्बुदादयः ॥५६॥**

अन्येऽष्टौ अर्बुदादयः ( अर्बुद-निरर्बुदा-ऽटट-हहव-हुहुवो-त्पल-पद्म-महापद्माः ) शीतला नरकाः। इमे जम्बूद्वीपस्य अधोभागे महा-नरकाणां धरातले च सन्ति।

**अर्द्धेन मेरोश्चन्द्रार्कौ;**

मेरुपर्वतस्य अर्धेन ( युगन्धर-शिखर-समतल इत्यर्थः ) चन्द्र-सूर्यौ भ्राम्यतः, तयोः कक्षेत्यर्थः।

**पञ्चाशत्सैकयोजनौ ।**

तत्र चन्द्रमण्ड ' पञ्चाशद्योजनं; सूर्यमण्डलं च एकपंचाशद्योजनं परिमाणे।

**अर्द्धरात्रोऽस्तगमनं उदयः समम् ] ॥६०॥**

चतुर्षु द्वीपेषु समकालमेव अर्धरात्रः, अस्तगमनं, मध्याह्नः सूर्योदयश्च भवन्ति। तथाहि यस्मिन् समये जम्बूद्वीपे मध्याह्नकालः तदैव उत्तरकुरुषु अर्धरात्रः, पूर्वविदेहे सूर्यास्तगमन, अवरगोदानीये च सूर्योदयः।

**प्रावृण्मासे द्वितीयेऽन्त्य-नवम्यां वर्धते निशा।**
**हेमन्तानां चतुर्थे तु हीयते;**

वर्षाया द्वितीये भाद्रमासे ऽन्तिम ( शुक्लपक्ष )-नवम्यां निशा वर्धते; तत एव वृद्धयारम्भः। हेमन्तकालस्य चतुर्थे फाल्गुणमासे शुक्लपक्षे नवम्यां रात्रिर्हीयते; ततः ह्रासाऽरम्भः।

**अहर्विपर्ययात ॥६१॥**

दिनं ततो विरुद्धक्रमेण भवति। यदाहि रात्रेर्वृद्धिः ( भाद्र शुक्ल नवम्यां ) तदा दिनस्य ह्रास आरभ्यते।

**लवशो रात्र्यहर्वृद्धी दक्षिणोत्तरगे रवौ।**

दक्षिणायने सूर्ये रात्रेर्वृद्धिर्भवति, उत्तरायणे च दिनस्य क्रमशो वृद्धिः।

**स्वच्छाययाऽर्क [सान्निध्याद् वि] कलेन्दु-समीक्षणम् ॥६२॥**

चन्द्रस्य विकलांगता-दर्शनं सूर्यस्य सामीप्यात्, स्वकीयया छायया चाच्छादितत्वाद् भवति। यथा प्रदीपः, यथा यथा स्तम्भ आसन्नो भवति, तथा तथा छाया स्तम्भं छादयति। दूरे हि वर्तमाने प्रदीपे परिपूर्णः स्तम्भो दृश्यते। किंचित् आसन्नः किंचित् क्षीयते। अत्यासन्नस्तु नष्टरूपो जायते।

**अतस्रोऽस्य दशसाहस्रिकान्तराः।**
**षोडशाऽष्टौ सहस्राणि चत्वारि द्वे च निर्गताः ॥६३॥**
**करोटपाणयस्तत्र मालाधराः सदामदाः।**
**महाराजिकदेवाश्च पर्वतेष्वपि सप्तसु ॥६४॥**

मेरोः चत्वारः परिषण्डा ( = विभागाः ) परस्परं दशसहस्रयोजनमन्तरेण उपर्यधो वर्त्तन्ते । प्रथमः परिषण्डो मेरु-सीताजलस्य दशसहस्रयोजनं ऊपरि, द्वितीयः प्रथमस्यापि उपरि, इत्थं यावच्चतुर्थं उन्नेयम् । स चायं चतुर्थः परिषण्डः सीताजलात् चत्वारिंशत्सहस्रयोजनं उपरि ( मेरुशिखरात् चत्वारिंशद्योजनं अधः ) भवति । तत्र प्रथमः परिषण्डः मेरोः षोडश-सहस्र-योजनं बहिर्निर्गतः, द्वितीय अष्टसहस्रयोजनं तृतीयः चतुस्सहस्र-योजनं, चतुर्थः द्विसहस्रयोजनं ।

तत्र पूर्वस्यां प्रथमपरिषण्डे करोटपाणयो यक्षा वसन्ति, येषां धृतराष्ट्रो राजा । दक्षिणस्यां द्वितीयपरिषण्डे मालाधराः, येषां विरूढको राजा । पश्चिमस्यां तृतीये परिषण्डे सदामदाः, येषां विरूपाक्षो राजा । उत्तरस्यां चतुर्थे चातुर्महाराजिकाः, येषां राजा वैश्रवणः । मेरुवत् सप्तसु पर्वतेष्वपि महाराजिका देवा वसन्ति ।

**मेरु-मूर्ध्नि त्रयस्त्रिंशः स चाशीति-सहस्र-दिक् ।**
**विदिक्षु कूटाश्चत्वार उषिता वज्रपाणिभिः ॥६५॥**

मेरु-शिखर-तले त्रयस्त्रिंशा देवा वसन्ति । त्रयस्त्रिंशस्वर्गलोकस्य विस्तारः अशीतिसहस्रयोजनम् । चतुर्षु दिगन्तरालेषु च तत्र वज्रपाणयो देवा वसन्ति ।

**मध्ये सार्ध-द्विसाहस्र-पार्श्वं अध्यर्ध-योजनम् ।**
**पुरं सुदर्शनं नाम हैमं चित्रतलं मृदु ॥६६॥**

त्रयस्त्रिंशलोकस्य मध्यभागे सुदर्शनं नाम ( शक्रस्य ) नगरं, सुवर्णमयं विचित्रतलं कोमलं च । एकैकं पार्श्वं चाऽस्य द्विसहस्र पञ्चशत ( २,५०० )-योजनं, परिक्षेपो दशसहस्रयोजनम् । सार्द्धैकं-चाऽस्य उच्छ्रायः ।

**सार्द्धद्विशतपार्श्वोऽत्र वैजयन्तः;**

नगरस्य मध्यभागे शक्रस्य प्रासादो वैजयन्तो नाम; द्विशत पञ्चाशद्योजनं तस्यैकं पार्श्वम् ।

**बहिः पुनः ।**

**तच्चैत्ररथ पारुष्य-मिश्र-नन्दन भूषितम् ॥६७॥**

बहिः चैत्ररथादिभिः चतुर्भिरुद्यानैः तन्नगरं सुशोभितम् ।

**विंशत्यन्तरितान्येषां सुभूमीनि चतुर्दिशम्।**
**पूर्वोत्तरे पारिजातः सुधर्मा दक्षिणावरे ॥६८॥**

एषां उद्यानानां चतसृषु दिक्षु विंशतियोजनमन्तरेण देवानां सुभूमीनि क्रीडास्थलानि। पूर्वोत्तरदिग्भागे पारिजातः (कोविदारः) देवद्रुमः। दक्षिण-पश्चिम-भागे च सुधर्मा नाम देवसभा।

**तत ऊर्ध्वं विमानेषु देवाः;**

त्रयस्त्रिंशद्देवलोकात् उपरि यामाः, तुषिताः, निर्माणरतयः, परनिर्मितवशवर्त्तिनो देवा विमानेषु वसन्ति।

**कामभुजस्तु षट्।**
**द्वन्द्वा-लिंगन-पाण्याप्ति-हसिते-क्षण-मैथुनाः ॥६९॥**

चातुर्महाराजिकाः त्रयस्त्रिंशाः, यामाः, तुषिताः, निर्माणरतयः, परनिर्मित वशवर्त्तिन इति षट् कामधातुगताः ( काम भोगिनो वा ) देवा मैथुनं सेवन्ते द्वंद्वेन, आलिंगनेन, पाणिसंयोगेन, हसितेन, अवलोकनेन च। तत्र चातुर्माहाराजिकाः त्रयस्त्रिंशाश्च मनुष्यवदेव द्वन्द्वेन मैथुनं सेवन्ते। यामादयः यथाक्रमं आलिंगनादीनामेकतरेणेति 'लोकप्रज्ञप्ति शास्त्रे'।

**पंच वर्षोपमो यावत् दशवर्षोपमः शिशुः।**
**सम्भवत्येषु;**

कामधातौ एतेषु देवेषु चातुर्महाराजिकादिषु देवाः पञ्चवार्षिकः दशवार्षिकः शिशुर्यथा, तथा उत्पद्यन्ते।

**सम्पूर्णाः सवस्त्राश्चैव रूपिणः ॥७०॥**

रूपधातौ सर्वे देवाः शरीरेण सम्पूर्णा वस्त्रसहिताश्च जायन्ते।

**कामोपपतयस्तिस्रः कामदेवाः समानुषाः।**

कामधातौ तिस्र उपपतयः सन्ति—(१) कामगुणेषुरताः, यथा केचन मनुष्याः ( मन्धातृ प्रभृतयः ), प्रथम-चतुर्विधा देवाः; ( २ ) स्वनिर्मितविषयेषु रता, यथा निर्माणरतयः; (३) परेण निर्मिते विषये रताः यथा परनिर्मितवशवर्त्तिनः।

**सुखोपपत्तयस्तिस्रः नव त्रिध्यानभूमयः ॥७१॥**

रूपधातौ प्रथम-द्वितीय-तृतीय-ध्यानेषु नव भूमयः, तिस्रः सुखोपपत्तय उच्यन्ते । इमेषु त्रिषु ध्यानेषु यथाक्रमं देवाः सुखं विहरन्ति, ( १ ) विवेकजसुखेन उपपत्तिः ( क्लेशप्रहाणात् ), ( २ ) समाधिजप्रीतिसुखेन ( वितर्कविचारप्रहाणात् ); ( ३ ) निःप्रीतिक-सुखेन ( सौमनस्य-प्रहाणात् ) च ।

**स्थानात्स्थानादधो यावत् तावदूर्ध्वं ततस्ततः ।**

स्वकीय-स्थानात् यावद्दूरं अधो जम्बूद्वीपः, तावदेव उपरितन-देवनिकायस्यावासः। तद्यथा चातुर्महाराजकायिकानां देवानां आवासः (=चातुर्महाराजिकः) जम्बूद्वीपात् चत्वारिंशत्सहस्रयोजनमुपरि, अतः ततः त्रयस्त्रिंशानां देवानां आवासोऽपि चत्वारिंशत्सहस्रयोजनमुपरि (=जम्बूद्वीपात् अशीतिसहस्रयोजनं=मेरुशिखरे)। त्रयस्त्रिंशा यावद्दूरमितो जम्बूद्वीपात् (८०,०००) तावदेव तत उपरि यामाः इत्थमेवाग्रेऽपि । अकनिष्ठः तावदेवोपरि सुदर्शनानां, यावत्ते जम्बूद्वीपादुपरि । अकनिष्ठानामुपरि नास्ति देवावासः ।

**नोर्ध्वदर्शनमस्त्येषां अन्यत्रर्द्धि-पराश्रयात् ॥७२॥**

ऋद्धिबलं, अन्यस्य देवस्य आश्रयं (=साहाय्यं) विना वा देवाः स्वत ऊर्ध्वस्थितं देवलोकं द्रष्टुं न शक्नुवन्ति । त्रयस्त्रिंशा मेरुशिखर-वर्त्ति-स्वावासादुपरि यामादिदेवलोकान् न द्रष्टुं शक्नुवन्ति, परं तत्रत्यस्य कस्यचिद् देवस्य साहाय्येन द्रष्टुं शक्नुवन्ति; ऋद्धिबलेन वा स्वत उपरिष्टाननेकान् देवलोकान् साक्षात्कुर्वन्ति ।

**चतुर्द्वीपक-चन्द्रार्क-मेरु-कामदिवौकसाम् ।**
**ब्रह्मलोकसहस्रं च साहस्रश्चूडिको मतः ॥७३॥**

चतुर्द्वीपानां ( =जम्बू-पूर्वविदेहा-ऽवरगोदानीयो-त्तरकुरूणां ), चन्द्राणां, सूर्याणां, मेरूणां कामधातुस्थितदेवावासानां ( चातुर्महाराजिकादीनां) ब्रह्मलोकानां च प्रत्येकं सहस्रैः साहस्रचूडिकलोकधातुरुच्यते ।

**तत्सहस्रं द्विसाहस्रो लोकधातुस्तु मध्यमः ।**
**तत्सहस्रं त्रिसाहस्रः समसंवर्त्तसंभवः ॥७४॥**

साहस्रचूडिक-लोकधातूनां सहस्रेण द्विसाहस्रमध्यमलोक-धातुः। तस्यापि सहस्रेण त्रिसाहस्रलोकधातुः।

एकस्मिन् त्रिसाहस्रलोकधातौ संवर्तः (=प्रलयः) संभवः (=विवर्त्तः=सृष्टिः) च समकालं भवतः।

**जम्बूद्वीपाः प्रमाणेन चतुः-सार्द्ध-त्रिहस्तकाः।**

**द्विगुणोत्तरवृद्ध्यातु पूर्व-गोदोत्तराह्वयाः ॥७५॥**

जम्बूद्वीपवासिनो मनुष्याः सार्द्धत्रिहस्तपरिमाणाः, चतुर्हस्त-परिमाणा वा भवन्ति। पूर्व-विदेहवासिनः ततो द्विगुणाः (७,८ हस्ताः) गोदानीयवास्तव्याः ततोऽपि द्विगुणाः (१४, १६ हस्ताः) उत्तरकुरुषु मनुष्याः ततोऽपि (२८, ३२ हस्ताः)।

**पादवृद्ध्या तनुर्यावत् सार्द्धक्रोशो दिवौकसाम्।**

**कामिनां;**

कामधातुवासिनां देवानां शरीरं चतुर्थांशवृद्ध्या क्रमेण, चातु-र्महाराजिकानां पादक्रोशप्रमाणं त्रयस्त्रिंशानां अर्द्धक्रोशं, यामानां पादोनक्रोशं, तुषितानां क्रोशमात्रम्; निर्माणरतिनां सपादक्रोशं; परनिर्मितवशवर्तिनां एवं सार्द्धैकक्रोशम्।

**रूपिणां त्वादौ योजनार्द्धं ततः परम् ॥७६॥**

**अर्द्धार्द्धवृद्धिरूर्ध्वं तु, परित्ताभेभ्य आश्रयः।**

**द्विगुणद्विगुणो हित्वाऽनभ्रकेभ्यः त्रियोजनम् ॥७७॥**

रूपधातौ प्रथमं अर्द्धयोजनं शरीरं (=आश्रयः) ब्रह्मकायिकानां; ततोऽग्रेऽर्द्धयोजनवृद्ध्या। तथा हि ब्रह्मपुरोहितानां योजनं, महाब्रह्मणां सार्द्धैकयोजनं, परित्ताभानां द्वियोजनम्। इतोऽग्रे द्विगुणं शरीरं यथा—अप्रमाणाभानां चतुर्योजनं, आभस्वराणां अष्टयोजनं, इत्थ-मग्रेऽपि यावत् शुभकृत्स्नानां चतुःषष्ठियोजनं, तेषां द्विगुणं (६४×२=१२८) एकशताष्टाविंशतियोजनं, तत्र त्रियोजनं हित्वा (१२८-३=१२५) एकशतपंचविंशतियोजनं अनभ्रकाणां शरीरं। अग्रे द्विगुणक्रमः; इत्थं पुण्यप्रसवानां द्विशतपञ्चाशद्योजनं ····· यावत् अकनिष्ठानां सहस्रयोजनप्रमाणं शरीरम्।

सहस्रमायुः कुरुषु द्वयोरर्द्धार्द्धवर्जितम् ।
इहानियतमन्ते तु दशाब्दानादितो ऽमितम् ॥७८॥

उत्तरकुरुषु मनुष्याणां आयुः सहस्रवर्षं, अर्द्धं न्यूनं (५०० वर्षं) पूर्वविदेहेषु; गोदानीये ( २५० वर्षं ), जम्बूद्वीपे मनुष्याणां आयुर्न निश्चितम् । तद्धि कदाचिद् दीर्घं कदाचिद् अन्यं वा भवति । अन्ते कल्प ( ३ : ६८ ) स्यान्ते च दशवर्षपरिमाणं जायते; आदितः कल्पस्यादौ प्राथमकल्पिकानां आयुः अपरिसंख्यातम् ।

नृणां वर्षाणि पञ्चाशद् अहोरात्रो दिवौकसाम् ।
कामेऽधराणां, तेनायुः पंचवर्षशतानि तु ॥७६॥
द्विगुणोत्तरमूर्ध्वानामुभयं;

मनुष्याणां वर्षैः पंचाशद्भिः वर्षैः कामधातौ अधःस्थितानां देवानां (= चातुर्महाराजिकानां ) एकोऽहोरात्रः । तेन ( ३० दिनं = मासः, १२ मासं = वर्षः ) ते पञ्चशतवर्षं (= मानुषाणां ९०,००,००० वर्षं ) जीवन्ति । तत ऊर्ध्वं स्थितानां देवानां आयुः दिनं च द्विगुणवृद्धया । तद्यथा त्रयस्त्रिंशानां मानवशतवर्षं अहोरात्रः, त्रिशतषष्ठ्यहोरात्रैः वर्षः तेन सहस्रवर्षं तेषां आयुः । यामानां अहोरात्रो मानवद्विशतवर्षेण, आयुश्च द्विसहस्रवर्षं इत्थमग्रेऽपि योज्यम् ।

रूपिणां पुनः ।
नास्त्यहोरात्रः, आयुस्तु कल्पैः स्वाश्रयसम्मितैः ॥८०॥

रूपधातौ वर्तमानानां देवानां नास्ति अहोरात्रव्यवहारः, चन्द्रार्कयोरभावात् । परं तेषां आयुः कल्पैः परिमितं भवति । कल्पाश्च तेषां स्वीयैः शरीरैरेव परिमिताः । तद्यथा-अर्द्धयोजनशरीराणां ब्रह्मकायिकानां देवानां अर्द्धकल्पप्रमाणं आयुः, इत्थं यावत् अकनिष्ठानां शरीरं सहस्रयोजनं, आयुरपि सहस्रकल्प-प्रमाणम् ।

आरूप्ये विंशतिः कल्प-सहस्राण्यधिकाधिकम् ।

आरूप्यधातौ आकाशानन्त्यायतने विंशति-सहस्र-कल्पप्रमाणं आयुः, विज्ञानानन्त्यायतने चत्वारिंशत्सहस्र-कल्पं, आकिंचन्यायतने षष्टिसहस्र-कल्पम्, नैवसंज्ञानासंज्ञायतने ( = भवाग्रे ) अशीतिसहस्र-कल्पम् ।

**महाकल्पः परित्ताभात् प्रभृत्यर्द्धमधस्ततः ॥८१॥**

परित्ताभानां ( द्वितीयध्याने निम्न-देवानां ) महाकल्पप्रमाणं आयुः। तेषां अधो देवानां ( ब्रह्मकायिक-ब्रह्मपुरोहित-महाब्रह्मणां ) अर्द्ध-महाकल्पप्रमाणम्।

कल्पप्रमाणं व्याख्यास्यते ( ३ : ८९ )। विंशत्यन्तरकल्पैः लोकस्य सृष्टिः, तावद्भिरेव स्थितिः, तावद्भिरेव प्रलयः। इत्थं षष्ठ्य-न्तरकल्पानां सार्द्धैकः कल्पः, स च महाकल्पार्द्धम्। ( महाकल्पः= २ कल्पाः = १८० अन्तर-कल्पाः )।

**कामदेवाऽऽयुषा तुल्या अहोरात्रा यथाक्रमम्।**
**संजीवादिषु षट्स्वायुः तैः तेषां कामदेववत् ॥८२॥**

संजीव-कालसूत्र-संघात-रौरव-महारौरव-तपनानां अहोरात्राः क्रमशः चातुर्महाराजिकादीनां षण्णां कामधातुगतदेवानां आयुषा समाना भवन्ति। यथाहि—चातुर्महाराजिकानां दिनं पंचाशन्मानुष-वर्षप्रमाणं, आयुश्च तद्दिनमितवर्षैः पंचशतवर्षं, संजीवनारकाणामपि अहोरात्रपरिमाणं आयुःपरिमाणं च तदनुरूपमेव। इत्थमेव काल-सूत्रस्य त्रायस्त्रिंशैः साम्यं, तपनस्य च परनिर्मितवशवर्त्तिभिः। तथैवान्येऽपि।

**अर्द्धं प्रतापने ऽवीचावन्तः कल्पं पुनः;**

सप्तमे प्रतापने नरके सत्त्वानां आयुः अन्तरकल्पार्द्धं, अवीचौ एकमन्तःकल्पम्।

पुनः।

**कल्पं तिरश्चाम्;**

तिर्यग्योनिगतानां नागराज-नन्दोपनन्दाऽश्वतरादीनां दीर्घ-कालं जीवतां आयुरेकं अन्तरकल्पम्।

**प्रेतानां मासाहशतपंचकम् ॥८३॥**

प्रेतानां दिनं मनुष्य-मास-प्रमाणं; तेन पंचशतवर्षं ते जीवन्ति।

**वाहाद्वर्षशतेनैकतिलोद्धर-क्षयायुषः।**
**अर्बुदाः; विंशतिगुणप्रतिवृद्ध्यायुषः परे ॥८४॥**

वाहो विंशतिखारीपरिमाणः, खारी च इदानीन्तनैरशीति-रूप्यपरिमाणैः सेरैः प्राय एकचत्वारिंशत्सेर-परिमाणा, तथा च वाहः प्रायः अष्टशतविंशति ( ८२० )-'सेर' परिमाणः । वाहपरिमाण-तिलराशितः, प्रतिशतवर्षं एकैकतिलोद्धरणेन, यावता कालेन स तिलराशिः क्षीयेत, स परिमाणं अर्बुदनरकवासिनां आयुषः । अर्बुदा-युषो विंशति-गुणं द्वितीयस्य, ततो विंशति-गुणं तृतीयस्य; इत्थम-ग्रेऽपि ।

**कुरुवर्ज्योऽन्तरामृत्युः;**

उत्तरकुरुषु आयुषः ( सहस्रवर्षमितस्य ) मध्ये मृत्युर्न भवति । ततोऽन्यत्र पूर्वविदेहादिषु द्वीपेषु देवलोकेषु च अन्तरा मृत्युर्भवति ।

**परमाणवक्षरक्षणाः ।**

**रूप-नामाऽध्वपर्यन्ताः;**

रूपे सूक्ष्मतमोंऽशः परमाणुः, नाम्नि सूक्ष्मतमोंशः अक्षरं, अध्वनि काले च क्षणः ।

**परमाणुरणुस्तथा ॥८५॥**

**लोहा-ऽप्-शशा-ऽवि-गो-छिद्र-रजो-लिक्षाः तदुद्भवः ।**
**यवः तथाऽगुली-पर्व ज्ञेयं सप्तगुणोत्तरम् ॥८६॥**

७ परमाणवः = १ अणुः ।
७ अणवः = लोहरजः ।
७ लोहरजांसि = जलरजः ।
७ जलरजांसि = शशरजः ।
७ शशरजांसि = अवि ( = मेष ) रजः ।
७ अविरजांसि = गोरजः ।
७ गोरजांसि = छिद्र ( = गृहच्छिद्रागतमरीचिगत ) रजः ।
७ छिद्ररजांसि = लिक्षाः ।
७ लिक्षाः = यवः ।
७ यवाः = अंगुलीपर्व ।

**चतुर्विंशत्यंगुल्यो हस्तो, हस्तचतुष्टयम् ।**
**धनुः पञ्चशतान्येषां क्रोशो, ऽरण्यंश्च [तच्छतम्] ॥८७॥**

**ते ऽष्टौ योजनमित्याहुः;**

२४ अंगुल्यः = हस्तः।
४ हस्ताः = धनुः (= 2 yards ).
५०० धनूंषि = क्रोशः (= .568 miles ).
१०० धनूंषि = अरण्यम्।
८ क्रोशाः = योजनम् (= 4. 5 44 miles ).

**विंशत्क्षणशतं पुनः।**
**तत्क्षणः, ते पुनः षष्टिर्लवः, त्रिंशद्गुणोत्तराः ॥८८॥**
**त्रयो मूहूर्त्ता-ऽहोरात्र-मासाः, द्वादशमासकः।**
**संवत्सरः सोनरात्रः;**

१२० क्षणाः = तत्क्षणः।
६० तत्क्षणाः = लवः।
३० लवाः = मुहूर्तः।
६० मुहूर्त्ताः = अहोरात्रः।
३० अहोरात्राः = मासः।
( १२ मासाः-६ अहोरात्राः ) = संवत्सरः (= ३६०-६ = ३५४ अहोरात्राः )।

**कल्पो बहुविधः स्मृतः ॥८९॥**
**संवर्तकल्पो नरकासम्भवाद् भाजनक्षयः।**

अन्तरकल्प-संवर्तकल्प-विवर्तकल्प-महाकल्पा इति सन्ति अनेके भेदाः कल्पस्य। तत्र संवर्त कल्पः, ( = प्रलयः ) यस्मिन् क्षणे नरके सत्वानां सम्भवः ( = उत्पत्तिः = प्रवेशः ) उपरुध्यते, तत आरभ्य यावद् भाजनस्य लोकस्य विनाशः।

**विवर्त्तकल्पः प्राग्वायोर्यावन्नारकसंभवः ॥९०॥**

मूलवायोः ( = भूतानां मूलकारणात् ) आरभ्य यावन्नरके सत्वानां सम्भवः, अयं कालो विवर्त्तकल्पः = सृष्टिः )।

**अंतः कल्पोऽमिताद् यावद् दशवर्षायुषः;**

कल्पादौ जातानां (= प्राथमकल्पिकानां ) आयुः अमितम् (= अपरिमितम् )। अपरिमितात् आरभ्य यावद् आयुषः परिमाणं दशवर्षं जायते, अयं कालोऽन्तरकल्प उच्यते ।

ततः ।

उत्कर्षापकर्षाश्च कल्पा अष्टादशाऽपरे ॥९१॥
उत्कर्ष एकः तेऽशीतिसहस्राद् यावदायुषः ।

तदनन्तरं अपरेऽष्टादश कल्पा भवन्ति; येषु आयुष उत्कर्षोऽपकर्षश्च ( दशवर्षात् अपरिमित-वर्षं, अपरिमितवर्षात् पुनः दशवर्षं यावत् )। तत एकः कल्पः केवलं उत्कर्षस्य, यत्रायुषो वृद्धिर्भूत्वा क्रमेणाऽशीतिसहस्रवर्षं जायते ।

इति लोको निवृत्तोऽयं कल्पांस्तिष्ठति विंशतिम् ॥९२॥
विवर्त्तते च संवृत्त आस्ते संवर्त्तते समम् ।
तेऽह्यशीतिर्महाकल्पः ;

एवं विवृत्तः (= सृष्टः ) अयं लोको विंशतिकल्पं तिष्ठति, पुनः विवर्त्तते विंशतिकल्पं, संवृत्तः तिष्ठति विंशतिकल्पं, संवर्त्तते च तत्समानकालमेव; एतत्सर्वं चतुःस्थिति-परिमाणं अशीतिकल्पं, तस्यैव महाकल्प इति नाम ।

तदसंख्यत्रयोद्भवम् ॥९३॥

बुद्धत्वं ;

कल्पानां असंख्यत्रये साधनसंचयेन ( पारमितापूर्त्या ) बुद्धत्वं भवति। असंख्य-संख्या च दशोत्तरवृद्धया षष्ठिस्थानं यावत्:— दश-शत-सहस्र-प्रभेद ( १०,००० )-लक्षा-ऽतिलक्ष-कोटि-मध्या-ऽयुत-महायुत-नयुत-महानयुत-प्रयुत-महाप्रयुत-कंकर-महाकंकर-बिंबर-महाबिम्बरा-ऽक्षोभ्य-महाक्षोभ्य-विवाह-म०-उत्संग-म०-वाहन-म०-टिटिभ-म०-हेतु-म०-करभ-म०-इन्द्र-म०-सम्पात ( समाप्त )-म०-गति-म०-निम्बरजो-म०-मुद्रा-म०-बल-म०-संज्ञा-म०-विभूत-म०-बलाक्ष-म०-असंख्येति। अत्रमध्येऽष्टौ स्थानानि पुरा विस्मृतानि। सर्वे षष्ठिः बिन्दवोऽपेद्यन्ते ।

अपकर्षे तु शताद्यावत्तदुद्भवः।

आयुषोऽपकर्षे ह्रासे यावत् मनुष्या शतायुषो भवन्ति, तावद् बुद्धानामुत्पादः। विंशति-सहस्रतः शतपर्यन्ते आयुःप्रमाणे बुद्धा उत्पद्यन्ते। न ततोऽधिके न्यूने वा।

द्वयोः प्रत्येकबुद्धानां;

प्रत्येकबुद्धानां तु आयुषोऽपकर्षे उत्कर्षेऽपि उत्पादो भवति।

[ खड्गः ] कल्पशतान्वयः ॥९४॥

खड्गविषाणकल्प (= प्रत्येक-) बुद्धः कल्पशत-पुण्यादिसाधन-संचयेन जायते।

चक्रवर्ति-समुत्पत्तिर्नाऽधोऽशीति-सहस्रकात्।

अशीतिसहस्रवर्षतो निम्ने मनुष्यायुष्यकाले न चक्रवर्तिन उत्पद्यन्ते।

सुवर्ण-रूप्य-ताम्रा-ऽयश्चक्रिणः, तेऽधरक्रमात् ॥९५॥

एक-द्वि-त्रि-चतुर्द्वीपाः; न च ते सह बुद्धवत्।

सुवर्णचक्रवर्तिनो, रूप्यचक्रवर्तिनः, ताम्रचक्रवर्तिनः, अयश्चक्रवर्तिन इति चत्वारः चक्रवर्तिनः ( तेषां चक्रोपादानधातुक्रमेणेमाः संज्ञाः )। ते च अधर (= निम्न )-क्रमेण ( अयस्ताम्र-रूप्य-सुवर्ण-क्रमेण ) एकस्य, द्वयोः, त्रयाणां, चतुर्णां वा द्वीपानां स्वामिनो भवन्ति। यथाऽयश्चक्रवर्ती एकं द्वीपं भुनक्तीत्यादि।

एककाले सहैव अनेकेषां बुद्धानां प्रादुर्भावो यथा न भवति, तथैव चक्रवर्तिनोऽपि न एककालेऽनेके।

प्रत्यु [ द्यान-स्वयंयान-कलहा ] ऽसिजितोऽवधाः ॥९६॥

तत्र सुवर्णचक्रवर्तिनः समीपे स्वयं प्रत्युद्गम्य राजान आत्मनो माण्डलिकतां निवेदयन्ति; रूप्यचक्रवर्तिनः तत्र तत्र गमनमात्रेण; ताम्रचक्रवर्तिनः कलहसूत्रपातानन्तरं; अयश्चक्रवर्तिनः खड्गादिसाहाय्यग्रहणानन्तरम्। परं सर्वत्र चक्रवर्तिनो न स्वयं घ्नन्ति।

प्रागासन् रूपिवत् सत्त्वा रसरागात्ततः शनैः।

आलस्यं संग्रहं कृत्वा भागादि-त्त्रपो भृतः ॥९७॥

पूर्वं मनुष्या आदिकल्पे रूपधातुगतदेवा इव आसन्, पश्चात् शनैः रसलोभेन आलस्यं जातं, संग्रहकरणं च आरब्धं वन्यौषधीनां अकृष्टपच्यानां धान्यादीनाम् । ततः संगृहीतवस्तुन एको भागः क्षत्रपाय दानं, (षष्ठांश उत्पत्तेः मार्गस्यापकाय राज्ञे)। क्षत्रपः = क्षत्रियो = राजेति । स हि भागादिना भृतः पुष्टः ।

**ततः कर्मपथाधिक्याद् अपह्रासे दशायुषः ॥९८॥**

ततः कर्ममार्गस्य ( हिंसास्तेयादेः ) वृद्ध्या, आयुः अपकृष्य दशवर्ष-परिमाणं भवति। रसरागा-ऽऽलस्याभ्यामेव अयं दीर्घनिपातः।

**कल्पस्य शस्त्ररोगाभ्यां दुर्भिक्षेण च निर्गमः ।**
**दिवसान् सप्त मासांश्च वर्षाणि च यथाक्रमम् ॥९९॥**

कल्पस्य निर्गमः (=समाप्तिः) शस्त्रेण ( युद्धेन ), रोगेण, दुर्भिक्षेण भवति । तत्र युद्धं सप्तदिनं, रोगः सप्तमासं सप्तदिनं च, दुर्भिक्षं सप्तवर्षं सप्तमासं सप्तदिनं तिष्ठति ।

**संवर्त्तन्यः पुनः तिस्रो भवन्त्यग्न्यम्बु-वायुभिः ।**

तिस्रः सम्वर्तन्यः, एका संवर्त्तनी (=प्रलयः) अग्निना भवति, अन्या जलेन, अन्या वायुना । यदा सत्वा ध्यानभूमिषु प्रविशन्ति, तदा निम्नस्था वासभूमय अग्निना ( सप्तभिः सूर्यैः ), जलेन ( महौघेन ), वायुना ( महावात्या ) विनश्यन्ति ।

**ध्यानत्रयं द्वितीयादि शीर्षं तासां यथाक्रमम् ॥१००॥**

**तदपक्षाल-साधर्म्यान्न चतुर्थेऽस्त्यनिंजनात् ।**
**न नित्यं सह सत्त्वेन तद्विमानोदयव्ययात् ॥१०१॥**

द्वितीयादि ध्यानत्रयं तासां संवर्तनीनां अग्नि-जल-वायुसम्बंधिनीनां, यथा संख्यम् सीमा-स्थानं ( =शीर्षं )। तद्यथा—द्वितीयध्यानं अग्निसंवर्तन्याः सीमा, तदधस्तमेव अग्निना दग्धं भवति। तृतीयध्यानं जलसंवर्तन्याः ( = जलप्रलयस्य ) सीमा, तदधस्तं सर्वं जलविनाशं याति । चतुर्थध्यानं वायुसंवर्तन्याः सीमा । संवर्तानन्तरं अपि तिष्ठतीति शीर्षशब्दः ।

प्रथमध्यानस्य अपक्षालः ( = दोषः = प्रतिद्वन्द्वी ) वितर्क-विचारौ, तयोः सादृश्यं अग्निना, अतः प्रथमध्यानभूमिः अग्निसंवर्तन्या विनष्टा भवति। एवं द्वितीयध्यानस्य अपक्षालः प्रीतिः, तस्याः सादृश्यं जलेन, तेन हि जलेन द्वितीयध्यानभूमिः विनश्यति। तृतीयध्यानस्य अपक्षाल आश्वास-प्रश्वासौ, तस्य सादृश्यं वायुना, तेन वायुना तृतीयध्यानभूमेः विनाशः। चतुर्थे इंजनं ( = अपक्षालः ) एव नास्ति, अतो न चतुर्थध्यानभूमेर्विनाशः संवर्तनीभिः। संवर्तनीभिः अविनाशिनी चतुर्थध्यानभूमिः, तथापि तस्या नित्यत्वं नास्ति; यतः सत्वानां उत्पत्ति-विनाशाभ्यां, तेषां विमानानामपि उत्पत्ति-विनाशौ निश्चितौ।

**सप्ताग्निनाऽद्भिरेकैवं गतेऽद्भिः, सप्तके पुनः।**
**तेजसा सप्तकः पश्चाद्, वायुसंवर्त्तनी ततः ॥१०२॥**

प्रथमं अग्निना सप्त संवर्त्तन्यः, तत एका जलेन; इत्थं सप्तवारं जलेन जाते विनाशे, पुनः अग्निना सप्तवारं, तदनन्तरं वायुसंवर्तनी भवति।

( लोकधातुनिर्देशो नाम तृतीयं कोशस्थानम् ) ॥

# चतुर्थकोशस्थानम् ।

## कर्म(-निर्देशः) ।

**कर्मजंलोक-वैचित्र्यं;**

कर्माणि हि कुशलाऽकुशलादीनि भवन्ति, तेभ्य एव लोके वस्तूनामुत्पादः; इत्थं हेतुवैचित्र्यात् फलवैचित्र्यम् ।

**चेतना तत्कृतं च तत् ।**

कर्म च द्विविधं चेतना, चेतनाकृतं च । कायिकानि वाचिकानि, मानसानि च कर्माणि,

"तत्र यच्चेतनेत्युक्तं कर्म तन्मानसं स्मृतं"

—मध्यमकावतारे ।

**चेतना मानसं कर्म, तज्जे वाक्काय कर्मणी ॥१॥**

मानसं कर्म चेतनेत्यभिधीयते, चेतयित्वा वाचा कायेन वा कर्म आरभते, अतएव वाक्कर्म कायकर्म च तज्जे, तत उत्पन्ने ।

**ते तु विज्ञप्त्यविज्ञप्ती;**

ते वाक्कायकर्मणी विज्ञप्त्य-ऽविज्ञप्ति-स्वरूपे । इत्थं कायविज्ञप्ति कर्म, कायाऽविज्ञप्तिकर्म, वाग्विज्ञप्तिकर्म, वागविज्ञप्तिकर्म च ।

**संस्थानं कायिकीष्यते ।**

**विज्ञप्तिः;**

संस्थानं, धर्माणां आकार एव कायिकी विज्ञप्तिः ।

**न गतिः, नाशात्, संस्कृतं क्षणिकं यतः ॥२॥**

कायिकी विज्ञप्तिः नास्ति गतिः, यतः सर्वमेव संस्कृतं क्षणिकम् । क्षणो हि आत्मलाभानन्तरविनाशस्वभावः; क्षणवान् क्षणेभवो वा क्षणिकः । यत्रोत्पन्नः तत्रैव द्वितीयक्षणे धर्मो विनश्यति । इत्थं द्वितीय क्षणे स्वरूपस्यैव विनाशः, तर्हि पूर्व-देशत्याग-पूर्वकोत्तरदेशप्राप्ति-रूपां गतिं को विधास्यति ? अतो विज्ञप्तिः न गतिः ।

**न कस्यचित् अहेतोः ( स्याद् ) हेतुरेव विनाशकः ।**

अहेतोः ( = कारणरहितस्य ) कस्यापि विनाशकारको हेतुरेव नापेद्यते । कारणाधीनं यत्तदेवकार्यं, तच्च भावरूपम् । विनाशोऽभावः न कस्यापि कार्यं, अकार्यत्वादभावस्य । इत्थं कायिकी विज्ञप्तिः एकं वस्तु, तच्च संस्थानम् ।

**द्विग्रहणात्;**

रूपायतनं हि द्वाभ्यामिन्द्रियाभ्यां गृह्यते । तत्र चक्षुषा रूप दर्शनकाले वस्तुनो दीर्घत्वस्यापि ग्रहणं भवति । इत्थं कायेन्द्रियेण स्प्रष्टव्ये गृह्यमाणे दीर्घत्वमपि । दीर्घत्वं हि संस्थानं, इदं च द्वाभ्यां चक्षुः-कायाभ्यां इन्द्रियाभ्यां गृह्यते ।

**न चाणौ तत् ;**

संस्थानं हि न परमाणौ विद्यते ।

**वाग्विज्ञप्तिस्तु वाग्ध्वनिः ॥३॥**

वाक् = शब्द एव वाग्विज्ञप्तिः । ध्वनिर्हि वर्णात्मिकाऽत्र ।

**त्रिविधाऽमल-रूपोक्ति-वृद्ध्य-कुर्वत्पथा(दितः) ।**

उक्तिरपि भगवतोऽत्र, रूपं त्रिविधं ( सप्रतिघं रूपं, अप्रतिघं रूपं, अप्रतिघं अरूपं ), एकं अनास्रवं ( एकोत्तरागमे २ : २१ ) इति । पुण्यवृद्धिरपि रूपं ( एकोत्तर ४ : ११३ ) अकुर्वत्पथः न कर्मपथः, वाचिकं कर्म हि आज्ञा-प्रदानमात्रं, तन्न कर्मपथे परिगणितुं शक्यम् ।

**क्षणादूर्ध्वमविज्ञप्तिः कामासाऽतीत-भूतजा ॥४॥**

अविज्ञप्तिः कामधातुजा प्रथमक्षणादूर्ध्वं ( = अनन्तरं ) एव अतीतेभ्यो महाभूतेभ्यो जायते ।

**सास्रवं कायवाक्कर्म [ स्वकीयभूत-हेतुकम् ] ।**

स्व ( = कर्म )-भूमेः ( कामादिधातोः ) महाभूतैर्जातं काय-कर्म वाक्कर्म वा सास्रवं भवति ।

**अनास्रवं ( कर्तृभूजं ) ;**

कर्तुः भूमिकैर्महाभूतैः जातं कर्म अनास्रवम् ।

**अविज्ञप्तिरनुपात्तिका ॥५॥**

नैष्यन्दिकी च सत्त्वाख्या, निष्यन्दोपात्त-भूतजा ।

अविज्ञप्तिः = (संस्थानं = ) रूपं, सा चित्तं चैतसं वा उपादाय न जायते, अतएव अनुपात्तिका । सा पुनः नैष्यन्दिकी, निष्यन्दादुपात्तेभ्यो भूतेभ्यो जातत्वात् । सत्त्वैरेव सम्बद्धत्वात् सत्त्वाख्या चेयम् ।

समाधिजा ऽनुपात्तौपचयिक-भिन्नभूतजा ॥६॥

समाधितो जाता अविज्ञप्तिः, अनुपात्ता = निष्यन्दमनुपादाय जाता औपचयिकभिन्न ( = स्वप्न-समाध्यादि )-महाभूतजा ।

नाऽव्याकृताऽस्त्यविज्ञप्तिः;

अविज्ञप्तिः कुशला अकुशला वा भवितुमर्हति, न तदुभयभिन्ना।

अन्यदेव त्रिधा

विज्ञप्तिकर्म तु कुशला-ऽकुशला-ऽव्याकृतमिति त्रिविधम् ।

अशुभम् ।

कामे;

अकुशलं विज्ञप्ति-कर्म कामधातौ भवति केवलम् ।

रूपेऽप्यविज्ञप्तिः;

अविज्ञप्तिकर्म तु रूपधातौ कामधातौ च अकुशलं ( = अ-शुद्धं ) भवति, परं न आरूप्यधातौ ।

विज्ञप्तिः सविचारयोः ॥७॥

सविचारयोर्द्वयोः भूमिकयोः ( प्रथम-द्वितीय-ध्यानयोः ) ( १ : ३२; ८ : ७ ) विज्ञप्तिरस्ति ।

कामेऽपि निवृता नास्ति,

कामधातौ निवृता (= क्लिष्टा) ऽव्याकृता ( २ : ६६ ) विज्ञप्तिः नास्ति ।

नाऽस्त्युत्थानं यतः;

तस्या विज्ञप्तेः, येन उत्थानं तत् ( = सत्कायदृष्टिः) तदा नास्ति ।

शुभः ।

**मोक्षेपरमतः ;**

मोक्षः ( = निर्वाणं ) सर्वतः कुशलं स्वीकृतं, यतस्तत्र सर्वेषां दुःखानां अन्तो भवति।

**मूल-ह्री-त्र्यपत्राप्यमात्मतः ॥८॥**

कुशलमूलं, ह्री ( = लज्जा), अपत्रपता ( २ : २५ ), इमानि त्रीणि कुशलानि, आरोग्यमिव ( मज्झिम० १ : ५१० ).

**[ सम्प्रयोगाद्धि तद्युक्तं ],**

कुशलमूलादियुक्तं यत्किमपि कर्म तेषां सम्बन्धादेव तदपि कुशलं ( = शुद्धं ) भवति, औषधमिव।

**( उत्थानतः क्रियादयः )।**

क्रियादयः कुशलादिधर्मेषु समुत्थिताश्चेत् कुशलादयो भवन्ति।

**[ तद्विरुद्धमकुशलं ];**

अकुशलधर्मेषूत्थिताः क्रियादयोऽकुशला भवन्ति। यथा संसारः अकुशलं क्षेम-विरहितभावात; अकुशलमूलं लज्जादि-रहितत्वात्। अकुशलमूल-सम्बन्धात तत्सम्बन्धिनो धर्माः। अशुभमूले समुत्थानात् काय-वाक्कर्माणि च। निदर्शनं व्याधिः, अपथ्यौषधम्।

**परमाऽव्याकृते ध्रुवे ॥९॥**

ध्रुवेऽसंस्कृते द्वे (१: ५) आकाशं अप्रतिसंख्यानिरोधश्च अत्यंतं अव्याकृते।

**समुत्थानं द्विधा हेतु-तत्क्षणोत्थानसंज्ञितम्।**

समुत्थानं ( समुत्तिष्ठते येन तत् ) द्विविधम्। हेतु-समुत्थानं तत्क्षण-समुत्थानं च। यत् हेतुः समुत्थानं चाऽपि, तत्प्रथमम्। यत् क्रियाक्षणे समुत्थानं आपतत्, तत् तत्क्षण-समुत्थानम्।

**[ प्रवर्त्तकं द्वयोः पूर्वं द्वितीयं ] अनुवर्त्तकम् ॥१०॥**

तत्र हेतु-समुत्थानं प्रवर्त्तकं, तत्क्षण-समुत्थानं चानुवर्त्तकं भवतः।

**प्रवर्त्तकं दृष्टिहेयं विज्ञानं;**

दृष्ट्या हेयं विज्ञानं प्रवर्त्तकमेव।

[ उभयं मनः ।

तच्चास्ति भावनाहेयं ];

मनोविज्ञानं प्रवर्त्तकं अनुवर्त्तकं च, परं तद्भावना-हेयम् ।

पंचकं त्वनुवर्त्तकम् ॥११॥

पंच विज्ञानकायाः चक्षुर्विज्ञानादयः केवलं अनुवर्त्तकम् ।

[ प्रवर्तकाच्छुभादेरनुवर्त्तकमपि त्रिधा ] ।

कुशला-ऽकुशला-ऽव्याकृतानां प्रवर्तकत्वात् अनुवर्तकमपि त्रिविधं—कुशलानुवर्तकमित्यादि ।

[ मुनेः समं शुभं वैतत् ];

बुद्धस्य भगवतः सर्वमेव मनोविज्ञानं शुभं कुशलैकतानं भवति । मनोविज्ञानं प्रवर्तकं अनुवर्तकं वा, कुशला-ऽकुशला-ऽव्याकृतं वा भवति—

[ नोभयं तु विपाकजम् ] ॥१२॥

निरभिसंस्कारवाहि विपाकजं मनोविज्ञानं तु न प्रवर्त्तकं न अनुवर्त्तकम् ।

अविज्ञप्तिस्त्रि(वि)धेति संवरा-ऽसंवरे-तरा ।

संवरः, असंवरः, नसंवरनासंवर इति त्रिविधा अविज्ञप्तिः । तत्र दौःशील्य-प्रबन्धात् संवरणादेव संवरः । संवराऽभावोऽसंवरः । संवराऽसंवरभिन्नो नैवसंवरनासंवरः ।

संवरः प्रातिमोक्षाख्योऽनास्रवो ध्यानजस्तथा ॥१३॥

संवरः त्रिविधः—प्रातिमोक्षसंवरः, ध्यानसंवरः, अनास्रवसंवरश्च । प्रथमः कामधातौ शीलम् । ध्यानसंवरो ध्यानोत्पादितो रूपधातौ शीलम् । अनास्रवसंवरो विशुद्धशीलस्य (मार्गस्य) उत्पादकः ।

[ अष्टधा प्रातिमोक्षाख्यः ];

प्रातिमोक्ष संवरोऽष्टविधः—भिक्षु-भिक्षुणी-शिक्षमाण-श्रामणेर-श्रामणेरिको-पासको-पासिको-पवासस्थ-समन्वयात् ।

**(वस्तु) [ तत्तु चतुर्विधः ] ।**

प्रातिमोक्षसंवरः तत्त्वतस्तु चतुर्विध एव । भिक्षुणीप्रातिमोक्षः भिक्षुप्रातिमोक्षतो न विसदृशः; तथैव शिक्षमाण-श्रामणेरिकयोः अपि श्रामणेर-प्रातिमोक्षसदृशः, उपासिकाया अपि उपासक-प्रातिमोक्षेऽन्तर्भावो भवितुमर्हति । इत्थं भिक्षु-श्रामणेरो-पासको-पवासस्थ-भेदात् चतुर्विधः प्रातिमोक्षः ।

**[ व्यंजनान्नाम-संचारात् ];**

व्यजनानां ( स्त्रीपुरुषलिंगानां ) भेदेन अयमत्र नाम भेदः । लिंग ग्रहणे चत्वार एव भेदा भवन्ति ।

**पृथक् ते;**

इमे प्रातिमोक्षाः परस्परं पृथग्-भूताः, शिक्षापद-भेदात् । उपासक-प्रातिमोक्षो नहि भिक्षोः प्रातिमोक्षः, एवमन्यत्रापि ।

**न विरोधिनः ॥१४॥**

परं ते न परस्परं विरोधिनः । भिक्षु-प्रातिमोक्षं त्यक्त्वा श्रामणेर-प्रातिमोक्षे स्थातुंशक्नोति, ततोऽपि उपासक-प्रातिमोक्षे ।

**पंचा-ऽष्ट-दश सर्वेभ्यो वर्ज्येभ्यो विरति-ग्रहात् ।**
**उपासको-पवासस्थ-श्रमणोद्देश-भिक्षुता ॥१५॥**

विरतिसमादानं—प्राणातिपाता-ऽदत्तादान-काममिथ्याचार-मृषावाद-सुरामैरयप्रमादस्थानेभ्यः पंचभ्यो विरति-समादानात् उपासकप्रातिमोक्षे समारूढो भवति

प्राणातिपाता-ऽदत्तादाना-ऽब्रह्मचर्य-मृषावाद-सुरामैरयमद्यप्रमादस्थान-माल्यगन्धविलेपननृत्यगीतवादित्रोच्चशयनमहाशयन-विकालभोजनेभ्योऽष्टाभ्यो विरति-समादानात् उपवासस्थप्रातिमोक्षसमारूढो भवति ।

उपवासस्थस्य प्रातिमोक्षे माल्यगन्धविलेपनं, नृत्यगीतवादित्रं इति द्वयं विभागं कृत्वा, जातरूप-रजत-प्रतिग्रहणं च सन्निवेश्य दश श्रामणेरस्य प्रातिमोक्षा भवन्ति ।

इत्थं पंचा-ऽष्ट-दशभ्यो विरति-समादानात् त्रयाणां प्रातिमोक्षाः । कायवचनतः सर्वविधेभ्यो परिग्रह-कर्मभ्यो विरतिः भिक्षुप्रातिमोक्षः ।

शीलं सुचरितं चैव कर्म संवर इत्यपि ।
आद्ये विज्ञप्त्यविज्ञप्ती प्रातिमोक्षः क्रियापथः ॥१६॥

शीलादित्रयं प्रातिमोक्ष एव । प्रथमा विज्ञप्तिः प्रथमा च अविज्ञप्तिः प्रातिमोक्ष उच्यते, इम एव कर्मपथ शब्देन व्यवह्रियन्ते ।

[ प्रातिमोक्षाऽन्विताऽष्टौ तु ];

भिक्षु-भिक्षुण्यादयोऽष्टौ, तत्प्रातिमोक्षसमादानेनैव भवन्ति । तद्विहीना न तत्पद्वाच्याः ।

तद्वन्तो ध्यानजेन तु ।

ध्यानवन्तः पुरुषा ध्यानजेन (= ध्यानात् ध्यानेन वा जातेन) संवरेण सम्पन्ना भवन्ति ।

[ अनास्रवेणाऽऽर्यसत्त्वाः ];

आर्यसत्त्वाः शैक्षाः (= स्रोत आपन्न-सकृदागाम्य-नागामिनः) अशैक्षाः (= अर्हन्तः) (४ : २६) च अनास्रव-संवरेण संयुक्ता भवन्ति ।

सहभूहेतु-व्याख्याने (२ : ५१) चित्तानुवर्त्तिनौ द्वौ प्रातिमोक्षौ समुक्तौ, तौ—

[ अन्त्यौ चित्तानुवर्त्तिनौ ] ॥१७॥

अन्तिमौ ध्यानजा-ऽनास्रव-प्रातिमोक्षौ चित्तानुवर्त्तिनौ, न कायानुवर्तिनौ ।

प्रहाणमित्यनागम्ये तावाऽनन्तर्य-मार्गजौ ] ।

नवाऽनन्तर्यमार्गजातौ अनागामिमार्गे तौ समाधिजा-ऽनास्रव प्रातिमोक्षौ प्रहाण-संवराऽभिख्यौ । यत आभ्यां दौःशील्यात् तत्समुत्थापक-हेतुभ्यश्चोन्मुच्यते ।

[ द्वे स्मृतिः सम्प्रजन्यं च ] मन इन्द्रिय संवरः ॥१८॥

मनः-(= चित्त-) संवरः, इन्द्रिय-संवरश्च क्रमेण स्मृतिः सम्प्रजन्यं चोच्येते ।

यावन्न त्यजति [ प्रातिमोक्षस्थो वर्त्तमानया ।

**अविज्ञप्त्या सदा ];**

प्रातिमोक्षस्थितः पुरुषो यावत् अविज्ञप्तिं न त्यजति, तावत् सर्वदा वर्तमानकालिकयाऽविज्ञप्त्या सहितस्तिष्ठति।

**पूर्वक्षणादूर्ध्वमतीतया ॥१९॥**

पूर्वक्षणानन्तरं स पुरुषो ऽतीतयाऽविज्ञप्त्याऽपि संयुक्तो भवति।

**[ तत्समो ऽसंवरस्थोऽपि ];**

असंवरे स्थितोऽपि पुरुषः, यावत् असंवरं न त्यजति, तावत् प्रत्युत्पन्न-कालिकयाऽविज्ञप्त्या युक्तो भवति। पूर्वक्षणाऽनन्तरं च अतीतयाऽप्यविज्ञप्त्या युक्तः।

**ध्यान-संवरवान् सदा।**

**अतीताऽजातया**

ध्यान-संवरसंयुक्तः सर्वदा अतीतया अनागतया च अविज्ञप्त्या युक्तो भवति।

**आर्यास्तु प्रथमेनाऽप्यतीतया ॥२०॥**

स्वीयेऽनास्रवे संवरे स्थिता आर्याः (= स्रोत आपन्नादयः चत्वारः) प्रथमे क्षणे ऽतीतया ऽविज्ञप्त्या युक्ता न भवन्ति।

**समाहितार्यमार्गस्था वा [ ऽऽधुनिक्या ];**

समाधिस्था आर्यमार्गसमापन्नाश्च प्रत्युत्पन्नयाऽविज्ञप्त्या एव युक्ता भवन्ति; या च अविज्ञप्तिः ध्यानजा अनास्रवजा च। किन्तु समाधितो व्युत्थितानां, तदाहि साऽविज्ञप्तिः चित्तसहगता भवति।

**( अन्तरालगः।**

**मध्यया प्रथमे क्षणे );**

अन्तरालगः (= मध्यस्थः = नैवसंवरनासंवरस्थः = न भिक्षु-प्रातिमोक्षयुक्तो न च असंवर-संयुक्तः) प्रथमे क्षणे मध्यया (= वर्त्तमानया) अविज्ञप्त्या समन्वितो भवति, यदाहि अविज्ञप्तिः आत्मलाभं करोति।

**( ऽतो वर्तमान-जाताभ्यां ) ॥२१॥**

तदनन्तरं यदाऽयं पुरुषः तां त्यजति, अथ अतीतया वर्त्तमानया चाऽविज्ञप्त्या युक्तो भवति ।

**असंवरस्थः शुभयाऽशुभया संवरे स्थितः ।**

**अविज्ञप्त्याऽन्वितो यावत्प्रसाद-क्लेश-वेगवान् ॥२२॥**

यावत्कालं असंवरे स्थितोऽपि पुरुषः प्रसादवेगे ( धर्माभिरुचिकरे ) वर्तते, तावत्कालं स शुभया ( = कुशलया ) अविज्ञप्त्या युक्तो भवति । इत्थमेव यावत् संवरे स्थितोऽपि क्लेशवेगे (बधबन्धकारके) वर्तते, तावत स अशुभयाऽविज्ञप्त्या युक्तः ।

**[ स विज्ञप्तिकरं कुर्वन् सर्वत्र वर्तमानया ] ।**

विज्ञप्तिः = कायवक्कर्म, तत्करं कर्म कुर्वन् संवरेऽसंवरे इतरे वा स्थितः, यावत्कालं तत् कर्म करोति, तावत् वर्त्तमानया विज्ञप्त्या युक्तो भवति ।

**अतीतया क्षणादूर्ध्वं आत्यागात् ;**

प्रथम-क्षणानन्तरं, यावत्स तां विज्ञप्तिं न त्यजति, अतीतया विज्ञप्त्या युक्तो भवति ।

**न त्वजातया ॥२३॥**

अनागतया विज्ञप्त्या न कोऽपि युक्तो भवति, यतो विज्ञप्तिर्न चित्तानुवर्तिनी ।

**[ नाभ्यतीताभ्यां निवृता-ऽनिवृताभ्यां समन्विताः ] ।**

कोऽपि अतीताभ्यां = निवृतया ( = क्लिष्टाऽव्याकृतया ) अनिवृतया ( = अक्लिष्टाऽव्याकृतया ) च विज्ञप्त्या ( २ : ६६ एक काले न युक्तो भवति । विज्ञप्तिर्हि जडा अनालम्बनत्वात्, परतन्त्रा च चित्तपारतन्त्र्यात् ।

**असंवरो दुश्चरितं दौःशील्यं कर्म तत्पथः ॥२४॥**

दुश्चरितं, दुःशीलता, कर्म, कर्ममार्गश्चेति असंवरः । सत्पुरुषगर्हितस्य दण्डनीयस्य कायवाग्गुप्त्यभावात् असंवरः । सत्पुरुषगर्हितस्य दण्डनीयस्य चाचारस्य आचरणात् दुश्चरितम् । शीलरहितत्वात् दुःशीलता ।

कर्म कायवाग्जनितत्वात् । कर्ममार्गः ( ४ : ६८ ) मौल-संगृहीतत्वात ( ४ : ६८ ) ।

**विज्ञप्त्यैवान्वितः कुर्वन्, मध्यस्थो मृदुचेतनः ।**

संवरासंवर-विरहितो मध्यस्थः पुरुषो निर्बलमना कुशलं अकुशलं वा कर्म ( = विज्ञप्ति ) कुर्वन् विज्ञप्त्या एव युक्तो भवति, न तु अविज्ञप्त्या ।

**[त्यक्ताऽनुत्पन्न विज्ञप्तिः अविज्ञप्त्याऽऽर्यपुद्गलः] ॥२५॥**

आर्यपुद्गलाः स्रोत आपन्नादयः केवलं अविज्ञप्त्या युक्ता भवंति विज्ञप्तिर्हि तैः त्यक्ता भवति ।

**[ ध्यानजो ध्यानभूम्यैव लभ्यते ] ;**

ध्यानेनोत्पन्नः संवरः ध्यानभूमिकचित्तेनैव लभ्यते ध्यानमत्र मूलध्यानं ( = प्रथमादि-चतुष्टयं सामन्तकं ( = चतुर्भ्यो ध्यानेभ्यः प्राग् प्रायोगिकध्यानम् ) ।

**आर्यया तया ।**

**निर्मलः ;**

निर्मलः ( = अनास्रवः ) प्रातिमोक्ष आर्यभूम्यैव जायते ।

**प्रातिमोक्षाख्यः परविज्ञापनादिभिः ॥२६॥**

परस्य विज्ञापन, परस्मै वा विज्ञापनम् । परविज्ञापनादिभिः प्रातिमोक्षाख्यः संवरः संगृहीतो भवति । तत्र भिक्षु-भिक्षुणी-शिक्षमाणानां प्रातिमोक्षादानार्थं संघो विज्ञापनीयो भवति । तथा उपसम्पदा-लाभः, उपसम्पन्नस्य च प्रातिमोक्षलाभः । दशविधा हि उपसम्पदा । तथा हि

१ स्वत उपसम्पदा, यथा प्रत्येकबुद्ध-बुद्धानाम् ।

२. नियमावक्रान्तिः ( ६ : २६ ), यथा अज्ञातकौडिन्यादीनां पंचवर्गीयाणाम् ।

३. एहि भिक्षो, यथाऽज्ञातकौण्डिन्यस्य ।

४. शास्तुः अभ्युपगमात्, यथा महाकाश्यपस्य ।

५. प्रश्नव्याकरणेन उपसम्पदा, यथा उदायिनः ।

६. गुरुधर्माभ्युपगमेन, यथा महाप्रजापत्या ।
७. शासनप्रेषणद्वारा, यथा धर्मदिन्नायाः ।
८. पंचवर्गेण गणेन उपसम्पदा, यथा प्रत्यन्तजनपदेषु ।
९. दशवर्गेण गणेन उपसम्पदा, यथा मध्यमण्डले ।
१०. त्रिः शरणगमनोच्चारणेन, यथा त्रिंशभद्रवर्गीयाणाम् ।

**[ यावज्जीवं समादानं अहोरात्रं च ] संवृतेः ।**

भिक्षु-श्रामणेरो-पासक-प्रातिमोक्षा यावज्जीवं गृहीता भवन्ति, उपवासस्थस्य तु केवलं अहोरात्रार्थम् ।

**[ नाऽहोरात्रिकोऽसंवरः ];**

यथा उपवासस्य प्रातिमोक्षग्रहणं अहोरात्रार्थं, तथा असंवरे नियमो न भवितुमर्हति । अयं हि पापधर्माभ्युपगमात् जायते ।

**[ स किलैवं न लभ्यते ] ।**

न खलु असंवरे व्रत-समादान-नियमोऽस्ति, येन उपवासस्थवत् अयमपि अहोरात्रार्थं भवेत् ।

**( उपवासं समादत्तेऽनुवदन् गौरवान्वितः ।**
**मण्डनादि-विहीनः सन् प्रातःकालादहर्निशम् ) ॥२८॥**

गौरवयुक्तः शिक्षापदानि अनुवदन् मण्डनादि-रहितो भूत्वा प्रातःकालादारभ्य यावद् द्वितीयदिन-प्रातःकालं व्रतं गृह्णाति ।

**शीलांगं अप्रमादांगं व्रतांगं च यथा क्रमम् ।**
**चत्वार्येकं तथा त्रीणि,**

शीलं पाराजिकाऽभावः संघावशेषाद्यभावः । तत्र प्रातिमोक्षे चत्वारि शीलांगानि—प्राणातिपाता—ऽदत्तादाना-ऽब्रह्मचर्य-मृषावाद-विरतिरिति । सुरामैरयविरतिः अप्रमादांगम् । उच्चशयन-नृत्यगीत-विकालभोजन-विरतयः व्रतांगम् । व्रतं हि नियमः ।

**स्मृतिमोष-मदौ ततः ॥२९॥**

मद्यपानेन व्रतादिस्मृतेः प्रमोषो जायते । उच्चशयन-नृत्यगीतादिभिरभिमानो भवति ।

**[ उपवासोऽन्येष्वपि न ] शरणगमनैर्विना।**

उपासकभिन्नेष्वपि जनेषु उपवास-प्रातिमोक्षो भवितुमर्हति, परं त्रि ( = बुद्ध-धर्म-संघ ) शरणगमनं विना न। त्रिशरण-परिग्रहात् पंचशिक्षापद-परिग्रहाच्च उपासकः तथोपासिकेति द्विधाभेदः। "त्रिशरण-परिगृहीतं, उपासकं मां आचार्यो धारयतु। तथा त्रिशरणगतं पंचशिक्षा-पदपरिगृहीतं उपासकं मां आचार्यो धारयत्विति।"

**[ उपगस्योपासकतां दमः ],**

उपासकभावं प्राप्य संवरः प्रतिगृहीतो भवति, 'धारयतु मां अद्यप्रभृति प्राणापेतं शरणागतं' इति कथने उपासकतां प्राप्नोति।

**उक्तिस्तु भिक्षुवत् ॥३०॥**

"यथैव हि भिक्षुः लब्धसंवरोऽपि ज्ञप्तिचतुर्थेन कर्मणा शिक्षापदानि यथास्थूलं ग्राह्यते प्रज्ञाप्यते। इतश्चामुतश्च पाराजिकादिभ्यः तव संवरः। अन्यानि च ते सब्रह्मचारिणः कथयिष्यन्तीति।" तथैव श्रामणेरस्याऽप्युक्तिः—

"अहं एवं नामा तं भगवन्तं तथागतं अर्हन्तं सम्यक् संम्बुद्धं शाक्यमुनिं शाक्याधिराजं प्रव्रजितं अनुप्रव्रजामि, गृहस्थलिंगं परित्यजामि, प्रव्रज्यालिंगं समाददामि।" तथैव उपासकस्यापि। त्रिवारं बुद्ध-धर्म-संघानां शरणगमनेन ततः प्राणातिपाता-( = हिंसा) ऽदिन्नादान-काममिथ्याचार-मृषावाद-सुरामेरयप्रमादस्थानेभयः पचभ्यो विरतिरिति शीलानि। इत्थं त्रिशरण-पंचशील-समादानेन उपासको भवति। तत्र शीलेषु एकं "प्राणातिपातं प्रहाय··· एकदेशकारी भवति। ·· द्वाभ्यां प्रतिविरतः प्रदेशकारी भवति। त्रिभ्यः प्रतिविरतश्चतुर्भ्यो वा यद्भूयस्कारी भवति। पंचभ्यः प्रतिविरतः परिपूर्णकारी भवति।" ( संयुत्त नि० ३३ : ११ )। इमे चत्वार उपासकाः।

**सर्वे चेत् संवृताः, एकदेशकार्यादयः कथम् ?**

यदि सर्व एव उपासका पंचापि शीलानि समादाय भवन्ति, तर्हि एकदेशकार्यादयः चत्वारः भेदाः कथम् ? तत्रहि शीलांग न्यूनाधिक्येनैव चत्वारो भेदाः।

ते किल रक्षकाख्याताः,

आचार्याणां एकेषां मतेन ते शीलरक्षकाः समाख्येया ।

मृद्वादयो मनो यथा ॥३१॥

मनसो मृदु-मध्या-ऽधिमात्र-क्रमेण प्रातिमाक्षा अपि मृद्वादयो भवन्ति ।

बुद्ध [संघ]-करान् धर्मान् अशैक्षान् उभयांश्च स ।
निर्वाणं चैति शरणं, यो याति शरणत्रयम् ॥३२॥

मनसो यो बुद्धं शरणं गच्छति स बुद्धकरान् धर्मान् शरणं गच्छति। बुद्धकरा धर्माः (= अर्हद्धर्माः) सन्ति क्षयज्ञान, अनुत्पाद-ज्ञानं, सपरिवारा सम्यग्दृष्टिश्च । परिवारः पंच शुद्ध-स्कन्धाः, धर्मकाय इति यावयःत् । यः संघं शरणं गच्छति, स शैक्षाऽशैक्षाणां (= अनर्हता-र्हतां) धर्मान् शरणंगच्छति, इमे हि धर्माः संघ-कारकाः (= संघी-भावा पादकाः)।

यो धर्मं शरणं गच्छति, स निर्वाणं (= प्रतिसंख्यानिरोधं) शरणं गच्छति । निर्वाणं हि शांत्यैकलक्षणं तृष्णाक्षयस्वभावम् ।

[ मिथ्याचारोऽतिसावद्यं सुखाकरणलाभतः ]।

कामेषुमिथ्याचारः; यतोऽयमतिसदोषः, अस्याकरणं हि सुखेन साध्यं, आर्यैः तदकरणं लब्धं च ।

संवरो यथोपगतो लभ्यते न तु तानतः ॥३३॥

यदैव संवरं (= प्रातिमोक्ष संवरं) गृहीतवान् (= उपगतः), तदैव तेन संवर उपलब्धः । कामेषु मिथ्याचाराद् विरतिः हि सर्वाग-म्यागमनपरित्यागः, न तु अमीषां अमीषां परित्यागः । प्रातिमोक्षग्रह-णानन्तरं न तु तान् मिथ्याचारान् असौ स्वीकरोति ।

सर्वशिक्षा अतिक्रान्तो मृषावादी प्रसज्यते ।

सर्वा शिक्षा एव प्रत्याख्याता, तन सो हि मृषावादी जायते ।

प्रतिक्षेपण-सावद्या [ न्मद्यात् ] ।

शिक्षाऽतिक्रमणदोषात मद्यपानात् विरतिः ।

( शिक्षाऽभिरक्षणात् ) ॥३४॥

मद्यपरित्यागात् अन्यासां शिक्षाणामभ्यारक्षा ।

**सर्वोभयेभ्यः [कामाप्तो वर्त्तमानेभ्य आप्यते] ।**

कामधातुगतः संवरोस्ति, सर्वकर्मसम्बन्धेन, द्विविध-सत्त्व-सम्बन्धेन, द्विविध-कर्मसम्बन्धेन, वर्तमानकालिकवस्तु-सम्बन्धेन च । कामधातुगतसंवरः प्रातिमोक्षो नाम । सर्वकर्म मनो-वचन-काय सम्बन्धि । द्विविधाः सत्वाः सप्राणकाः (= मनुष्यादय ) अप्राणकाः, (= वृक्षादयः ) । द्विविधं कर्म कुशलाऽकुशलम् ।

**मौलेभ्यः सर्वकालेभ्यो ध्यानाऽनास्रव-संवरौ ॥२५॥**

ध्यानसंवरः सम्यग्वाग्व्यवहार-सम्बन्धेन प्राप्यते, अनास्रव-संवरश्च सर्वकालिकवस्तु-सम्बन्धेन । स्कन्धा-ऽऽयतन-धातवो हि सर्वकालिकवस्तूनि ।

**[ संवरः सर्वसत्वेभ्यः, भेदस्त्वस्त्यंगकारणे ] ।**

संवरस्य आदानं सर्वसत्वसम्बन्धेन भवति । तत्र एकोऽङ्ग-सम्बन्धेन, अपरः कारणसम्बन्धेन भेदः । भिक्षु-संवरस्तावत् सर्वेभ्योंगेभ्यो भवति, स हि कर्मणो दशभ्यो मार्गेभ्यो विरतिः । अन्ये संवराः चतुरंग-समन्विताः । चतुरंगं हि प्राणातिपा ा-दिन्नादान-काममिथ्याचार-मृषावाद-विरतिः । कारणं (=मूलं) कुशलमूलं (= अलोभः, अद्वेषः, अमोहः ) ।

**असंवरस्तु सर्वेभ्यः सर्वांगैश्च न कारणैः ॥३६॥**

सर्वैः दशभिः अंगैस्सह सर्वेभ्यो वस्तुभ्यो ( ःगेभ्यश्च ) भवति । परं न कारणैस्सह व तुभ्यः ।

**( असंवरं हि लभते कर्मणाऽऽदानतस्तथा ) ।**

असंवर-कुलीना मनुष्या असंवरं लभन्ते प्राणातिपातप्रारम्भि-कक्रर्मविधानेन; अन्यकुलोनाश्च तमेव जीवनोपायं स्वीकृत्य ।

**[शेषाऽविज्ञप्तिलाभस्तु] क्षेत्रा-ऽऽदाना-ऽऽदरेहणात् ॥३७॥**

अन्या अविज्ञप्तयः क्षेत्रात् , आदानात् , आदर-प्रयत्नाच्च लभ्य-न्ते । क्षेत्रं औपाधिक-पुण्यक्रियावस्तु, आरामादि-दानम् । प्रतिज्ञा-

ऽऽदानंऽयथा बुद्ध-वन्दनां विना नाहं भोजनं करिष्यामि । आदरेण प्रयत्नः, रागादि प्रचोदनया कर्मण्युत्साहः ।

**प्रातिमोक्ष-दमत्यागः शिक्षा-निक्षेपणात् च्युतेः ।**
**उभयव्यंजनोत्पत्तेः मूलच्छेदात् निशात्ययात् ॥३८॥**

प्रातिमोक्ष-संवरस्य त्याग एभिः कारणैर्भवति ।—शिक्षापद-प्रत्याख्यानेन, मृत्युना, पुरुषस्त्रीत्युभयलिंग प्रादुर्भावेन, कुशलमूलानां ( = अरागा-ऽद्वेषा-ऽमोहानां ) उच्छेदेन, निशासमाप्त्या वा । तत्रान्ये प्रातिमोक्ष-संवरा आद्यैश्चतुर्भिः कारणैः त्यज्यन्ते । उपवासस्थस्य तु पंचमेन रात्रि-समाप्त्याऽपि । अहोरात्रावधिक एव स किल संवरः ।

**पतनीयेन चेत्ये [ के ];**

पतनीयाः = पाराजिकाः । मैथुनं, अदत्तादानं मनुष्यवधः, उत्तरिमनुष्य-धर्म ( = दिव्यशक्ति )-मृषावादश्चेति चतस्रो भिक्षूणां पाराजिकाः । पुरुष-प्रतिषिद्धांगस्पर्शः, पाराजिकापन्न भिक्षुणीदोषाऽनाविष्करणं, समग्र-संघ-प्रतिक्षिप्त-भिक्ष्वनुवर्तनं, कामास्वादेन पुरुषस्य पाणिवस्त्रादि-स्पर्शनश्चेति चतस्रोऽन्या अपि, सर्वा अष्टौ भिक्षुणीनां पाराजिकाः ।

एकेषां सौत्रान्तिकानां मते पतनीयधर्मासेवनेन भिक्षु-श्रमण प्रातिमोक्षः त्यज्यते ।

**सद्धर्म ह्रानितोऽपरे ।**

धर्मगुप्तास्तु सद्धर्मलोपेन प्रातिमोक्षलोपं मन्यन्ते ।

**धनार्णवत् तु काश्मीरैरापन्नस्येष्यते [ द्वयम् ] ॥३९॥**

पाराजिकापन्नस्यापि यथा धनं ऋणं च तथा संवरासंवरौ । स्वपापस्वीकारेण ऋणप्रतिदानवत् स असंवरान्मुच्यत इति कश्मीरकाणाम् ।

**भूमिसंचार-ह्रानिभ्यां ध्यानाप्तं त्यज्यते शुभम् ।**

उपरितनायां अधस्तनायां वा भूमिकायां उत्पत्तितः, रूपधातूत्पन्नानां सत्त्वानां ध्यानभूमिकं कुशलं हीयते; ध्यायिनस्तु ध्यानपरिहाण्या ।

**तथाऽऽरूप्यासम् ;**

आरूप्यधातुगतं कुशलमपि भूमिपरित्यागेन, ध्यानपरित्यागेन च हीयते ।

**आर्यं तु फलाप्त्युत्पत्तिहानिभिः ॥४०॥**

फल (= सकृदागाम्यादिफल )-प्राप्त्या आर्यं ( = अनास्रवं ) कुशलं त्यज्यते । इन्द्रियसंचारे मृद्विन्द्रियमार्गः त्यज्यते । ध्यान-परिहाणौ फलं उपरितन-फलमार्गौ वा परिहीयते ।

**असंवरः संवराप्ति–च्युति–द्विव्यंजनोदयात् ।**

संवर–प्राप्त्या, मृत्युना षण्ढ–पण्ड–द्विव्यंजन ( = स्त्रीपुरुषोभय-लिंग ) समुत्पत्त्या वा असंवरः त्यज्यते ।

**वेगा-ऽऽदान-क्रिया-ऽर्था-ऽऽयु-र्मूलच्छेदैस्तु मध्यमा ॥४१॥**

मध्यमा अविज्ञप्तिः ( = नसंवरनासंवर-रूपा ) प्रसादक्लेश वेगेन, व्रतसमादानोच्छेदेन, प्रतिज्ञातक्रिया (बुद्धपूजादि)-परित्यागेन चैत्या-रामविहारादि-समुच्छेदेन, आयुश्छेदेन, कुशलमूल-समुच्छेदप्रारम्भेन वा परिहीयते ।

**[कामाप्तं] कुशलाऽरूपं मूलोच्छेदोर्ध्वजन्मतः ।**

कामधातौ अरूपि कुशलं कर्म कुशलमूलोच्छेदेन, उपरितनभूमौ उत्पत्त्या वा प्रहीयते ।

**( क्लिष्टाऽरूपं प्रतिद्वन्द्वि समुत्पादात्प्रहीयते ) ॥४२॥**

क्लिष्टं अरूपि कर्म, तत्प्रतिपक्ष–मार्गोत्पत्त्या त्यज्यते ।

**नृणां असंवरो, हित्वा षण्ढ-पण्डद्विधाकृतीन् ।**

**[ कुरूंश्च ] ;**

असंवराविज्ञप्तिः मनुष्याणामेव भवति, परं तत्र नपुंसकादि स्त्रीपुरुषोभयलिंग–युक्ताः, उत्तर-कुरुवासिनश्चापवादाः ।

**संवरोऽप्येवं [ देवानां च ]**

उक्तापवाद-विरहित-मनुष्याणां देवानां च संवरो भवति ।

संवरे समर्थ एव असंवरं अधिकरोति, कारणोत्पादादवस्थान्तरे। षण्ढ-पण्डा-ऽपायसत्त्वेषु संवराऽसंवरयोरभावः।

**नृणां त्रयः ॥४३॥**

प्रातिमोक्ष-ध्यानजा-ऽनास्रवेति त्रयोऽपि संवरा नृणां सन्ति।

**कामरूपज-देवानां ध्यानजः,**

ध्यानजः संवरः कामधातुगतानां चातुर्महाराजिकादिदेवानां, रूपधातुगतानां ब्रह्मकायिकादीनां देवानां च अस्ति; आरूप्य-धातौ न।

**अनास्रवः पुनः।**

**ध्यानान्तरासंज्ञिसत्त्वान् हित्वाऽऽरूप्येऽपि सम्भवेत् ॥४४॥**

अनास्रव-संवरो भवति, रूपधातौ आरूप्यधातौ च; किन्तु रूपधातौ ध्यानान्तरिकाः (प्रथमद्वितीयध्यानजाः) असंज्ञिसत्त्वाः (चतुर्थध्यानजाः) च अपवादाः।

**[ क्षेमं अक्षेमं इतरत् कर्म शुभाऽशुभेतरत् ]।**

कुशलं (=शुभं) कर्म क्षेमं इष्ट-विपाकत्वात्; अकुशलं कम अक्षेमं अनिष्टविपाकत्वात्, कुशलाऽकुशल-व्यतिरिक्तं (=अव्याकृत) कर्म न क्षेमं नाक्षेमं; उभय-विपाक-रहितत्वात्।

**[ पुण्यमपुण्यमानिंज्यं सुखवेद्यादिकं त्रयम् ] ॥४५॥**

पुण्यं कर्म हि सुखवेदनीयं, अपुण्यं दुःखवेदनीयं, आनिंज्यं अदुःखासुखवेदनीयम्। आनिंज्यं = आनेज्यं (एजतेः) = आनिंज्य (इंगतेः गत्यर्थात्)।

**[ कामधातुशुभंकर्म पुण्यमानिंज्यमूर्ध्वजम् ]।**

कामधातुगतं कुशलंकर्म पुण्यमिति संज्ञायते। रूपाऽऽरूप्य-धात्वोः कुशलं कर्म आनिंज्यमित्युच्यते।

**तद्भूमिषु यतः कर्म विपाकं प्रतिनेंजति ॥४६॥**

कामधातुगतं कर्म इंजितमस्ति, यतस्तद् सविपाकम्। रूपाऽऽरूप्ययोस्तु आनिंज्यं, यतस्तद् विपाकाभिमुखं न भवति।

**सुखवेद्यं शुभं ध्यानादात्रितयात्;**

तृतीयध्यानाद् उपरि नास्ति सुखा वेदना; अतः सुखवेदनीय-पुण्यविपाकः यावत् तृतीयध्यानम्।

**अतः परम्।**

**अदुःखाऽसुखवेद्यं;**

तृतीयध्यानादुपरि चतुर्थध्याने, आरूप्यधातौ च अदुःखाऽसुखवेदना एव। अतः तादृशमेव कर्म तत्र विपच्यते।

**[दुःखवेद्यं ऐहिकाऽशुभम्] ॥४७॥**

ऐहिकं = कामधातुगतं अकुशलं कर्म दुःखवेदनीयं अस्ति।

**अधोऽपि मध्यमित्येके;**

एक आचार्याः, अदुःखाऽसुखवेदनीयं कर्म (= मध्यं) चतुर्थ-ध्यानादधोऽपि भवतीति वदन्ति।

**ध्यानान्तर-विपाकतः।**

यदि मध्यं कर्म चतुर्थध्यानादधोऽपि न भवेत्तर्हि, तद् ध्यानान्तर-कर्मणो विपाको न भवितुमर्हति। तत्र सुखा दुःखा वा वेदना नास्ति। तस्मादस्य अदुःखाऽसुखा वेदना विपाक इति।

**[त्रयस्या]ऽपूर्वाचरमं [विपाक इष्यते यतः] ॥४८॥**

विभाषाशास्त्रे, त्रिविधस्यापि (सुखवेदनीया-ऽसुखवेदनीय-नसुखनाऽसुख-वेदनीयानां) कर्मणो विपाक एककाल एव, न तु पूर्वाऽपर-भागयोः समुच्यते। तेन चतुर्थ-ध्यानादधो मध्यं कर्म भवति।

**स्वभावतः सम्प्रयोगात् आलम्बनविपाकतः।**

**संमुखीभावतश्चापि पंचधा वेदनीयता ॥४६॥**

कर्मणो वेदनीयता पंच विधा—स्वभाव-वेदनीयता, संयोग-वेदनीयता आलम्बन-वेदनीयता विपाक-वेदनीयता, संमुखीभाव-वेदनीयता चेति। संप्रयोगः = स्पर्शः। षड् विषयाः रूपादय इन्द्रियाणां, आलम्बन-शब्दवाच्याः।

**तच्च नियताऽनियतं;**

सुखवेदनीयादि कर्म त्रिविधं, नियतं अनियतं च ।

**दृष्ट धर्मादिवेद्यतः ।**

**त्रिधा नियतं;**

दृष्टधर्म-वेदनीयं, उपपद्य-वेदनीयं, अपरपर्याय-वेदनीयं इति त्रिविधं नियतं कर्म ।

**[ एके तु ब्रुवते कर्म पंचकम् ] ॥५०॥**

एक आचार्याः पंच-विधं कर्म स्वीकुर्वन्ति । तत्र पूर्वोक्तं त्रिविधं नियतं, अनियतं च विपाककालाऽनियतं, अनियत-विपाकश्चेति ।

**[ चतुष्कोटिकमित्यन्ये ];**

सौत्रान्तिकाः चतुर्विधं कथयन्ति—( १ ) विपाक-कालनियतं विपाका-ऽनियतं ( = नियतवेदनीयं अनियत-विपाकं ); ( २ ) विपाक नियतं विपाककालाऽनियतं ( = नियतविपाकं अनियतवेदनीयं ); ( ३ ) नियतविपाकं नियतवेदनीयं; ( ४ ) अनियतविपाकं अनियत वेदनीयं च ।

**निकायः क्षिप्यते त्रिभिः ।**

तत्कालस्थिति-वेदनीयं कर्म न तत्कालिकीं स्थितिं उद्भावयति । अतोऽन्यानि त्रीण्येव निकायं ( = जन्म = स्थितिं ) क्षिपन्ति ।

**[ सर्वत्र चतुर्धा क्षेपः ];**

त्रिषु निकायेषु सर्वासु गतिषु चेति सर्वत्र चतुर्विधं कुशला-कुशलं कर्म विधीयते ।

**शुभस्य नरके त्रिधा ॥५१॥**

( शुभस्य क्षेपः ) नरके त्रिविधं कुशलं कर्म संभवति—आसन्न निकायवेदनीयं कुशलं कर्म, अनन्तरनिकायवेदनीयं कुशलं कर्म, अनियतं कुशलं कर्म च । तन्निकाय-वेदनीयं कुशलं कर्म न भवितु-महर्ति, नरक इष्टविपाकाऽभावात् ।

**यद्विरक्तः स्थिरो बालो [ नात्रोपपद्यवेद्यकृत् ] ।**

यावत् अपरिहाणधर्मा बालः ( = पृथग्जनः ), तस्याश्च स्थिते विरक्तः, तावत् तादृशस्थिति-वेदनीयं कर्म नोत्पादयति।

**नान्यवेद्यकृदप्यार्यः [ ऽऽर्यः ];**

यदा आर्यपुद्गलो यावत् स्थिरः ( = अच्युतः ) स्वविराग-विषय भूत-स्थिति-वेदनीयं कर्म नोद्भावयति; आसन्न-निकाय समनन्तर निकाय वेदनीयमपि न। स्थिर आर्यः = स्रोत आपन्नः सकृदागामी।

**[ नापि कामाग्रतोऽस्थिरः ]।**

अस्थिर आर्योऽपि, यतः स कामधातोः भवाग्राच्च विरक्तः, अतो न आसन्न-समनन्तर-निकाययोः भवाग्रे च वेदनीयं कर्म विदधाति। कामधातु-विरक्त आर्य अनागामी ( ६ : ३६ ), भवाग्रविरतो र्हन् ( ६ : ४५ )। अर्हन् अनागामी च अस्थिरौ आर्यौ।

**[ द्वाविंशतिधा क्षिपति कामधात्वन्तराभवः ]।**

पंच गर्भस्थितयः— कलला-ऽर्बुद-पेशि घन-प्रशाखाः। पुरुषस्य च पंच अवस्थाः बाल-तरुण-प्रौढ़-मध्य-वृद्ध-भेदात्। अन्तराभवो नियत-वेदनीयं कर्म क्षिपति तेन तेन रूपेण, यथा अन्तराभवः, कललं, अर्बुदं ... बालः, तरुणः, ... ... इमानि एकादश नियतानि कर्माणि, तावन्ति एव अनियत-कर्माण्यपि समुत्पादयति ( = क्षिपति )।

**[ एतद् दृष्टधर्म-फलं ];**

एकादश नियत-कर्माणि अन्तराभविक-क्षिप्तानि दृष्टधर्म-फलं ( = एतच्छरीर वेदनीयं ) उच्यते।

**एक निकायमेव स ॥५३॥**

अन्तराभव-निकायेन सह ताः सर्वा अपि स्थितयः एकनिकाया-पन्नाः। स कामधात्वन्तराभव एकनिकायमेव क्षिपति।

**[ तीव्रक्लेश-प्रसादेन गुणक्षेत्रे निरन्तरम्।**
**यत्कृतं, मातापित्रोश्च बधो नियतमेव तत् ] ॥५४॥**

तीव्रक्लेशेन कृतं कर्म, तीव्रप्रसादेन च गुणक्षेत्रे फलप्राप्ता (स्रोत आपन्ना ) दि सम्बन्धे निरन्तरं कृतं कर्म, मातापित्रोः मारणमिति च यत् कर्म, तदिदं सर्वं नियतं कर्म।

[ दृष्टधर्म-फलं कर्म क्षेत्राशयविशेषतः ] ।

इह जन्मनि फलदं कर्म ( = दृष्टधर्मफलं ) भवति, यदि ( कार्य- ) क्षेत्रे विशेषः, आशये ( = अभिप्राये ) वा विशेषो भवेत् । यथा संघावमानेन "स्त्रियो यूयं" इति भाषमाणो भिक्षुः स्त्रीत्वं गत । आशय विशेषेण षण्ढोऽसौ ।

तद्भूम्यत्यन्तवैराग्यात् ;

यस्यां भूमिकायां पुरुषस्याऽत्यन्तं वैराग्यं, स तस्यां भूमिकायां नोत्पद्यते । अतएव तस्यां भूमिकायां शरीरान्तरे विपक्तिमं कर्म स्व-प्रकृतिं परिवृत्य वर्तमाननिकाये ( = शरीरे ) परिपाकोन्मुखं ( = दृष्ट-धर्मफलं ) भवति ।

विपाके नियतं च यत् ॥५५॥

विपाक-कालनियतमपि कर्म अवश्य-विपाकं इहजन्मनि फलदम् ।

ये निरोध-मैत्र्य-रण-दर्शना-ऽर्हत्फलोत्थिताः ।

तेषु कारापकाराणां सहसा वेद्यते फलम् ॥५६॥

ये निरोधाद्युत्थिताः पुरुषाः तेषु अपकारोपकाराणां फलं तूर्णं मेवाऽनुभूयते । अरणं = क्लेशाऽभावः, अरणसमापत्त्या उत्थितः । मैत्री समापत्तिः = अरणसमाप्तिः ।

[ कुशलस्याऽवितर्कस्य विपाकः कर्मणो मता ।

वेद्या चैतसिकथेव ];

वितर्करहितस्य कुशलस्य कर्मणो विपाकभूता या वेदना, सा केवलं चैतसिकी एव । ध्यानान्तर-भूमिकाः प्रथम-द्वितीयध्याने ( ४ : ४८ ) उपरितन-स्थितयश्च वितर्करहिताः ।

[ अकुशलस्य तु कायिकी ] ॥५७॥

अकुशलकर्मफलभूता वेदना कायिकी एव । दौर्मनस्यं हि ना-ऽस्ति सर्वविपाकफलम् ( २ : १० ) ।

चित्तक्षेपो [ मनश्चित्ते ];

चित्तक्षेपः ( = उन्मादः ) मनोविज्ञान उत्पद्यते ।

**स च कर्मविपाकजः।**

स च उन्मादः पूर्वजन्मसु कृतकर्मणो विपाकेन जायते।

**भयोपद्रवविकोप-शोकैः;**

उन्मादे हेतवः—भयदर्शनं, भूतप्रेतादीनामुपद्रवः; वात-पित्त कफानां प्रकोपः, अतिशोकश्च।

**अकुरु-रागिषु ॥५८॥**

उन्मादः ( = चित्तविक्षेपः ) कामधातौ उत्तरकुरुद्वीपं वर्जयित्वा अन्यत्र सर्वत्र भवितुमर्हति।

**[ कौटिल्य-दोष-कषायोक्तं शाठ्य-द्वेष-रागजम् ]।**

कौटिल्यं ( ५ : ५० ) शाठ्याज्जायते, दोषो द्वेषात्, कषायो रागात्। कषायो रंजनहेतुः ( = राग-द्वेष-मोहाः )।

**[ कृष्ण-शुक्लादि-भेदेन भवेत्कर्म चतुर्विधम् ] ॥५९॥**

कृष्णं कृष्णविपाकं; शुक्लं शुक्लविपाकं; कृष्ण-शुक्लं कृष्णशुक्ल-विपाकं; नकृष्णनशुक्लं, नकृष्णनशुक्लविपाकम्। अकुशलं कर्म क्लिष्टं भवति, तेन तत् केवलं कृष्णम्। रूपधातोः कुशलं कर्म अकुशला-संस्पर्शतया केवलं शुक्लम्। कामधातौ कुशलं अकुशलसंपृक्तया कृष्णशुक्लम्। एतत्त्रिविधकर्मभिन्नतया चतुर्थं नकृष्णनशुक्लम्।

**[अशुभं रूप]-कामाऽऽप्तं [शुभमेव यथाक्रमम्।**
**कृष्ण-शुक्लोभयं कर्म तत्क्षयकृदनास्रवम् ] ॥६०॥**

अकुशलंकर्म, रूपधातोः कुशलं कर्म, कामधातोः कुशलं कर्म चेति त्रीणि क्रमशः कृष्णं, शुक्लं, कृष्णशुक्लं च भवन्ति। यदन्यद् सर्वविधं कर्म विनाशयति तदनास्रवं कर्म।

**[ धर्मक्षान्ति-कामवैराग्याऽऽनन्तर्यपथाष्टसु।**
**कृष्णस्य क्षयकृत् कर्म द्वादशविध-चेतना ] ॥६१॥**

धर्मक्षान्तिः चतुर्विधा, अष्टविधाः प्रथमाः कामधातुगत वैराग्यानन्तर्यमार्गाः। चतस्रश्चेतना धर्मक्षान्तयः चतस्रःसम्यग्दृष्टि-मार्गे। इमा द्वादश चेतना अकुशलं कर्म विनाशयन्ति।

**कृष्णशुक्लस्य क्षयकृद् या नवमस्य चेतना ।**

नवमस्य कामधातुगत-वैराग्यानन्तर्य-मार्गस्य चेतना कृष्ण-शुक्लं कर्म विनाशयति, परिशुद्धत्वात् ।

**शुक्लस्य ध्यान-वैराग्येष्वा [ नन्तर्य-पथान्त्यजा ] ॥६२॥**

ध्यानवैराग्येषु आनन्तर्यमार्गान्तरं या चेतना जायते सा शुक्लं कर्मापि विनाशयति ।

**( नारकं इतरत् ) [ कामेऽन्यत्रवेद्यद्वयं विदुः ] ।**

इतरे कथयन्ति—कृष्णं कर्म तत् यन्नरके वेदनीयं; कृष्ण-शुक्लं तत् यत्कामधातौ वेदनीयम्; शुक्लं रूपधातौ ।

**दृग्घेयं कृष्णम [न्ये] ऽन्यत् कृष्णशुक्लं तु कामजम् ॥६३॥**

अन्ये आचार्याः कथयन्ति—दृष्टिहेयं कर्म कृष्णम्; कामधातोरन्यत् सर्वं कर्म ( ध्यानपरिवर्जितं ) कृष्ण-शुक्लमस्ति ।

**अशैक्षं काय-[वाक्]-कर्म मन एव [ यथाक्रमम् ] ।**

**मौन-त्रयं ;**

कायमौनं, वाङ्मौनं, मनोमौनं इति त्रिविधं मौनम् । तत्र अशैक्षस्य अर्हतः कायकर्म कायमौनं, वाक्कर्म वाङ्मौनं, मनःकर्म मनो मौनम् ।

**[ त्रिधा शौचं ] सर्व-सुचरित [ त्रयम् ] ॥६४॥**

कायसुचरितं कायशौचं, वाक्सुचरितं वाक्छौचं, मनःसुचरितं मनःशौचमिति त्रिविधं शौचम् ।

**[ कायिकादिकमशुभं दुश्चरित्रत्रयं मतम् ] ।**

कायिकं अकुशलं कर्म कायदुश्चरितं, इत्थं अग्रेऽपि ।

**[ अक्रियमप्यभिध्यादि मनोदुश्चरितं त्रिधा ] ॥६५॥**

क्रियारहितमपि अभिध्या, व्यापादः; मिथ्यादृष्टिश्चेति त्रिविधं दुश्चरितम् ।

**[ विपरीतं सुचरितं ]**

अनभिध्यादित्रयं मनः-सुचरितम् ।

[ तदौ ] दारिक-संग्रहात् ।

[दश कर्मपथा उक्ता] यथायोगं [शुभाऽशुभाः]॥६६॥

तेषां सुचरितानां, दुश्चरितानां स्थूलरूपेण संग्रहात् दश कर्मपथा उच्यन्ते। ते यथायोगं शुभा अशुभाश्च भवन्ति।

**अशुभाः षडविज्ञप्तिः;**

प्राणातिपाता-ऽदत्तादान-मृषावाद-पैशुन्य-परुषवचन-सम्प्रलापइति षट् अकुशला अविज्ञप्तिः।

**द्विधैकः;**

प्रत्येकं अकुशलं द्विविधं भवति – विज्ञप्ति रविज्ञप्तिश्चेति।

[ तेऽपि कुर्वतः ]।

संप्रयोगकाल एव ( मृत्युस्तर्हि ) विज्ञप्तिः, कालं व्यतीत्य चेत् अविज्ञप्तिः।

**द्विविधाः सप्त कुशलाः ;**

रूपिणः सप्तकुशलाः कर्मपथाः, काय-वाक् सम्बन्धिनः सन्ति द्विविधाः— विज्ञप्त्यविज्ञप्ति-भेदात्।

**अविज्ञप्तिः समाधिजाः ॥६७॥**

समाधिजाः कर्मपथाः केवलं अविज्ञप्तिः। ध्यानजा-ऽनास्रव संवरयोः ( धर्मताशोले ) कर्मपथाः समाधिजा इति।

**सामन्तकास्तु विज्ञप्तिः ;**

कामधातौ प्रथम-कर्मपथप्रयोगाः सामन्तकाः। इमे सर्वदा विज्ञप्तिरेव।

**अविज्ञप्तिर्भवेन्न वा।**

पर्यवस्थाना ( ५ : ४७ ) ऽऽह्रीक्य ( २ : ३२ ) वेगेन प्रसाद-घनरसेन वा विहिता इमे अविज्ञप्तिरपि। अन्यथा नाऽविज्ञप्तिः।

**[ तद्विपर्ययतः पृष्ठम् ] ;**

तस्य विपर्ययात् पृष्ठं कर्मापि अविज्ञप्तिः। कर्मपथे परिपूर्तिं गते विज्ञप्तिः। "इह कश्चित् परस्वं हर्तुकामो मंचादुत्तिष्ठति; शस्त्रं

गृह्णाति, परगृहं गच्छति, सुप्ता न वेत्याकर्णयति, परस्वं स्पृशति, यावन्न स्थानात्प्रच्यावयति तावत् प्रयोगः । यस्मिं तु क्षणे स्थानात्प्रच्यावयति तत्र या विज्ञप्तिः तत्-क्षणिका चाऽविज्ञप्तिरयं मौलः कर्मपथः । द्वाभ्यां हि कारणाभ्यां अदत्तादानावद्येन स्पृश्यते प्रयोगतः फलपरिपूरितश्च । ततः परं अविज्ञप्तिक्षणः पृष्ठं भवति । यावत् तत् परस्वं विभजते विक्रीणीते गोपायत्यनुकीर्तयति वा तावदस्य विज्ञप्तिक्षणा अपि पृष्ठं भवन्ति ।"

प्रयोगस्तु त्रिमूलजः ॥६८॥

सर्वेषां कर्मपथानां प्रयोगाः त्रिभिर्मूलैर्जायंते । यथा—प्राणातिपातः पश्वंगग्रहणार्थं, क्रीडार्थं आत्म-सुहृत्परित्राणार्थं वा भवति ।

[तदन्वयत उत्पादात् अभिध्यादि त्रिमूलजम्] ।

तेषां मूलानां सम्बन्धेनैव मनः-कर्मपथाः अभिध्या-व्यापाद-मिथ्यादृष्टयश्च त्रिमूलजाः भवन्ति । स्वार्थसाधनं, क्रीडा, आत्म-सुहृत्-त्राणं चेति त्रयंमूलम् ।

शुभाः स-प्रयोग-पृष्ठा अलोभ-द्वेष-मोहजाः ॥६६॥

प्रयोग-पृष्ठाभ्यां सहिता अलोभेन अद्वेषेण अमोहेन जाताः कर्मपथाः कुशला भवंति ।

श्रामणेरस्य उपसम्पादने यथा—यस्मिं क्षणे श्रामणेरो नानावासं (= उपसम्पदा-मण्डलं) प्रविशति, संघं वन्दते, उपाध्यायं स्वाभिप्रायं कथयति, तत आरभ्य प्रथम-द्वितीय-कर्मवाचनं यावत् प्रयोगः । तृतीय कर्मवाचनावसाने विज्ञप्तिरेका जायते अविज्ञप्त्या सह, कर्मपथ-रूपाया विज्ञप्तेः समकालमेवेति । यदा निःश्रया नवभिक्षोरुपस्थाप्यते, तत आरभ्य यावत्प्रातिमोक्षाप्रत्याख्यानं या अविज्ञप्तिपरम्परा तत् पृष्ठम् । "चत्वारो निःश्रयाः—चीवर-पिण्डपातशयनासन-ग्लानप्रत्ययभैषज्य-लक्षणाः ।"

बध-व्यापाद-पारुष्यनिष्ठा द्वेषेण;

प्राणातिपातः (= बधः), व्यापादः, पारुष्यं (परुषवचनता), द्वेषेण जायंते ।

लोभतः ।

**परस्त्रीगमना-ऽभिध्या-ऽदत्तादानसमापनम् ॥७०॥**

काममिथ्याचारः, अभिध्या (=लोभः), चौर्यं च समाप्तिं गच्छन्ति लोभेन; लोभमूला इमे ।

**मिथ्यादृष्टेस्तु मोहेन;**

समापनमिति शेषः ।

**शेषाणां त्रिभिरिष्यते ।**

अन्ये कर्मपथाः मृषावाद-पैशुन्य-प्रलापवचनानि त्रिभिरपि द्वेष-लोभ-मोहैः परिपूरितां गच्छन्ति ।

**[ सत्त्वा भोगा अधिष्ठानं नामरूपं च नाम च ]॥७१॥**

प्राणातिपात-व्यापाद-पारुष्याणां विषया (=अधिष्ठानं) सत्त्वा भवन्ति। भोग-विषया एव काममिथ्याचार-लोभा-ऽदत्तादानानां विषयाः । नामरूपं ( =पंचस्कन्धाः ) मिथ्यादृष्टेर्विषयाः । नाम (=नामकायः २ : ४७) मृषावादादीनां वाग्दुश्चरितानां अधिष्ठानम् ।

**समं प्राग् वा मृतस्याऽस्ति न मौलः;**

आहतपुरुषो यावत्कालं जीवति, तावत्कालं, ततः प्राक् च हन्ता नाऽस्ति बधदोषलिप्तः; परं यदा स मृतः, ततः तत्क्षणे मृतः प्राग्वेति न हेतुः, हन्ता बधदोषलिप्तः स्यादेव। यदि मृत्युः प्राग् समकालं वा, नाऽयं मौलकर्मपथः तस्य भवति ।

**अन्याश्रयोदयात् ।**

आश्रयस्य (=शरीरस्य) उदयात्=उत्पत्तेः। असमाप्तबध-सत्वस्य शरीरान्तर उत्पन्ने, ( कृतेऽपि प्रयोगे ) न मौलः कर्मपथः (=बधः) भवति ।

**[सैनिकाद्येककार्यत्वात् सर्वेषां अस्ति कर्तृवत् ]॥७२॥**

सैनिकादिवत् एकीभूय कार्यकर्तॄणां सर्वेषां कर्तृवत् एव दोषः ।

**[ प्राणातिपातः संचिन्त्याऽभ्रान्त्यैव पर-मारणम् ] ।**

भ्रान्तिविना ज्ञानपूर्वकं पर-सत्वस्य मारणं प्राणातिपात उच्यते ।

**अदत्तादानं परस्वस्वीकरणं बलाच्छलात् ॥७३॥**

स्पष्टम् ।

**[ अगम्यागमनं काममिथ्याचारः चतुर्विधः ] ।**

अगम्यस्त्रीगमनं काममिथ्याचारः चतुर्विधः—परपरिगृहीतागमनं, स्वपरिगृहीताया अन्ययोनिमार्गे मैथुनप्रतिसेवनं, स्वपरिगृहीताया अपि अस्थाने (चैत्यविहारादिषु), स्वपरिगृहीताया अपि अकाले (व्रतनियमादिकाले) गमनम् ।

**अन्य-संज्ञोदितं वाक्यं अर्थाभिज्ञे मृषावचः ॥७४॥**

अन्यसंज्ञया, तदर्थं परिज्ञातुं समर्थाय पुरुषाय कथितं वाक्यं मृषावाद उच्यते ।

**चक्षुः-श्रोत्र-मनो-विज्ञानानुभूतं त्रिभिश्चयत् ।**
**तद् दृष्ट-श्रुत-विज्ञात-मतं उक्तं यथाक्रमम् ॥७५॥**

चक्षुर्विज्ञानानुभूतं दृष्टं उच्यते, श्रोत्रविज्ञानानुभूतं श्रुतं, मनोविज्ञानानुभूतं विज्ञातं, चक्षुरादिमनोविज्ञानपर्यन्तेन त्रयेणाऽनुभूतं च मतम् ।

**पैशुन्यं [ परभेदाय क्लिष्टचित्तस्य भाषणम् ] ।**

दूषितचित्तं = क्लिष्टचित्तम् ।

**पारुष्यं [ अप्रियं ];**

अप्रिय-वचनं = पारुष्यम् ।

**सर्वं क्लिष्टं भिन्न-प्रलापिता ॥७६॥**

क्लेशान्वितं सर्वं वचनं संभिन्न-प्रलापः ।

**[ ततोऽन्यत् क्लिष्टमन्ये तु ];**

अन्य आचार्यास्तु—मृषावादादिवचनेभ्यो भिन्नं क्लिष्टं वचनं सम्भिन्नप्रलाप इति वदन्ति ।

**लयनागीतनाट्यवत् ।**

**कुशास्त्रवत् ;**

यथा—लयनं, नाट्यानुष्ठानं गीतानुष्ठानं कुदृष्टि-सम्बन्धिशास्त्राध्ययनाऽध्यापनं, इदं सर्वमेव क्लिष्टं वचनम्।

**अभिध्या या परस्वे विषमा स्पृहा ॥७७॥**

विषमा = अन्याय-समन्विता। स्पृहा = लिप्सा।

**[ व्यापादः सत्वेषु द्वेषः ];**

सत्त्वाः = प्राणिनः तेषु द्वेषो व्यापाद-शब्द-वाच्यः।

**नास्तिदृष्टिः शुभाऽशुभे।**

**मिथ्या-दृष्टिः ;**

कृत-कर्मणां शुभाऽशुभं फलं नास्तीति दृष्टिः (= दर्शनं) मिथ्या दृष्टिः।

**त्रयं तत्र पथः, कर्मापि सप्तकम् ॥७८॥**

तत्र मिथ्यादृष्टौ कर्म-मार्गस्य त्रयो भेदाः—अभिध्या, व्यापादः, मिथ्यादृष्टिश्चेति। प्राणातिपातादयः सप्त कर्मभेदाः।

**मूलच्छेदो नास्ति-दृशा ;**

नास्ति-दृष्टिः = मिथ्या-दृष्टिः। तया सर्वेषां कुशलमूलानां समुच्छेदो जायते।

**( मूलं कामोपपत्तिकम् )।**

कुशलमूलं कामधातौ उपपद्यते (= उत्पद्यते)। एवं कामधातौ कुशलमूले समुच्छिन्ने न रूपाऽऽरूप्ययोः तस्यावाप्तिः।

**हेतु-फलापवादिन्या;**

हेतोरपवादः—"नास्ति कुशलंकर्म नास्त्यकुशलम्"। फलापवादः—"नास्ति विपाकः शुभस्याऽशुभस्य वा कर्मणः फलम्"। हेतु-फलाऽपवादिन्या मिथ्या-दृष्ट्या कुशलमूलोच्छेदः।

**सर्वया;**

सर्व-विधया मिथ्या-दृष्ट्या कुशलमूलोच्छेदः। कुशल-मूलं मृदुमध्याऽधिमात्र-विकल्पानुविकल्पाभ्यां नवधा = [ (मृदु + मध्य + अधिमात्र) ( मृदु + मध्य + अधिमात्र ) ]।

**क्रमशः;**

मृदुमध्यादि-क्रमेण मिथ्यादृष्ट्या मूलोच्छेदो भवति।

**नृषु ॥७९॥**

मनुष्येषु एव कुशलमूल-समुच्छेदः सम्भवति, न तु देवादौ।

**छिनत्ति स्त्री, पुमान्;**

स्त्री कुशलमूलं छेत्तुं समर्था पुरुषश्चापि।

**दृष्टि-चरितः;**

सत्कायदृष्ट्यादिषु पंचसु चरितः (= प्रवृत्तो) = दृष्टिचरितः छेत्तुं समर्थः, यतः स पाप-दृढ-गूढाशयः।

**सोऽसमन्वयः।**

कुशलमूलोच्छेदो हि कुशलमूलस्य अप्राप्तिः।

**विमत्याऽस्ति-दृशा सन्धिः;**

प्रतिसन्धिः (= पुनरुत्पत्तिः) संशयेन (= विचिकित्सया) अस्तिदृष्ट्या च भवति, कुशलमूलोच्छेदानन्तरमपि।

**नेहाऽऽनन्तर्य-कारिणः ॥८०॥**

आनन्तर्य (४ : ९७)-कारिणः समुच्छिन्न-कुशल-मूला न इह शरीरे कुशलमूलं प्राप्तुं समर्थाः, अन्येतु शक्ताः।

**अष्टभिर्यावदशुभैः चेतना सह वर्तते।**

**युगपत्;**

चेतना एककालेऽष्टभिरशुभैः सह वर्तते, नातोऽधिकैः। अभिध्या-व्यापाद-मिथ्यादृष्टीनां युगपदभावात् नव दश वा अशुभान् न परिगृहीतुं शक्नोति। दश कर्ममार्गाः प्राणातिपातादयः।

**[ दशभिः यावच्छुभः ];**

चेतना युगपत् दशभिः शुभैः (= कुशलैः) युक्ता भवितुमर्हति।

**नैकाष्टपंचभिः ॥८१॥**

परं सा एकेन अष्टभिः पंचभिर्वा शुभैः सहिता न तिष्ठति; द्वि-त्रि-चतुः-षट्-सप्त-नव-दशभिर्भवितुमर्हति। आरूप्य-समापत्तौ द्वय-

ज्ञानेन अनुत्पादज्ञानेन ( ६ : ४५,५० ) वा (१) सम्पन्नस्य पंच विज्ञानानि कुशलानि भवन्ति। तदा चेतनयासह द्वौ मार्गौ—अनभिध्या, अव्यापादश्चेति। (२) सम्यग्दृष्टि-समन्विते विज्ञाने सप्तरूपिकुशल मार्ग-परिवर्जिते त्रयोमार्गाः। (३) एकेन कुशल-चित्तेन अकुशल-चित्तेन वा उपासकस्य श्रामणेरस्य वा प्रातिमोक्ष-समादाने ( चत्वारो रूपिकुशलमार्गा ह्यत्र ) चत्वारो मार्गाः। ( ४ ) यदा पंच कुशल-विज्ञानैः तमेव प्रातिमोक्षं समादत्ते, तदा षड्। (५) एकेन कुशल मनो विज्ञानेन तमेव प्रातिमोक्षं समादत्ते, तदा सप्त। (६) कुशलेषु पंचसु विज्ञानेषु तत् ( भिक्षु प्रातिमोक्ष )-समादाने क्षयानुत्पाद ज्ञानसंप्रयुक्ते च मनो-विज्ञाने तस्मिन् एव च ध्यान-संगृहीते नव। (७) तत्रैव क्षयानुत्पादज्ञानाऽसम्प्रयुक्ते दश।

**[ भिन्नप्रलाप-पारुष्य-व्यापादा नरके द्विधा ]।**

नरके संति—भिन्न-प्रलापः, यतस्तत्र नारकाः परिदेवंते; पारुष्यं परस्परं निग्रहसंव्यवहारो यतः; व्यापादः, परस्परं हिंसन्ति हि। अभिध्या समन्वागताः, मिथ्या-दृष्टि-समन्वागताश्चेति द्विविधा इमे नरके।

**[ समन्वागमतोऽभिध्या-मिथ्यादृष्टी ];**

अभिध्यया मिथ्या दृष्ट्या च समन्वागताः ( = संयुक्ताः ) नरके सत्त्वाः।

**[ कुरौ त्रयम् ] ॥८२॥**

उत्तरकुरुषु अभिध्या-व्यापाद-मिथ्यादृष्टय इति त्रयं भवति।

**[ सप्तमोऽत्र ] स्वयमपि;**

सप्तमो मार्गः ( = संभिन्न-प्रलापः ) अपि वर्तते, यतोऽत्रत्याः कालान्तरे क्लिष्टचित्तेन गायन्ति।

**[ कामेऽन्यत्र दशाऽशुभाः ]।**

नरकं उत्तरकुरूंश्च त्यक्त्वाऽन्यत्र सर्वत्र कामधातौ दश अकुशलकर्मपथा भवन्ति।

**[ शुभत्रयं तु सर्वत्र सम्मुखीभाव-लाभतः ] ॥८३॥**

त्रिषु सत्त्व-स्थितिषु पंचसु गतिषु च सर्वत्र अनभिध्या, अव्यापादः, सम्यग्दृष्टिश्चेति त्रयं कुशलं अस्ति; यतस्तत्र सर्वत्र तेषां संमुखीभावः (= साक्षात्कारः) लाभश्च ।

**[ आरूप्या-ऽसंज्ञिसत्त्वेषु लाभतः सप्त ];**

आरूप्यधातौ चतुर्थध्याने (= असंज्ञिसत्वेषु) सप्त कुशलकर्मपथा रूपिणः कायिकाः वाचिकाश्च, प्राप्त्या एव भवन्ति ।

**[ शेषिते ।**

**संमुखीभावतश्चापि नारक-कुरुवर्जिते ] ॥८४॥**

शेषासु सत्वस्थितिषु गतिषु च सप्तकुशलपथाः संमुखीभावेन = लाभेन (= प्राप्त्या) च वर्तन्ते, परं नारका उत्तराः कुरवश्चात्रापवादाः ।

**सर्वेऽधिपति-निष्यन्द-विपाक-फलदा मताः ।**

सर्वं एव कुशला अकुशला दश कर्मपथाः त्रिविधं फलं ददति— अधिपतिफलं, निष्यन्दफलं, विपाकफलं चेति । तत्र अकुशलस्य विपाकफलं नरकादौ, निष्यन्दफलं अल्पायुरल्पभोगतादि, अधिपतिफलं दुर्भगशरीरेन्द्रिय-परिग्रहत्वादि । एतद्विपर्ययात् अकुशलस्यापि ।

**दुःखनात् [ मरणात् ] ओजोनाशनात् त्रिविधंफलम् ॥८५॥**

त्रिविधं फलं—तत्र विपाकफलं नरके यातनाः, निष्यन्दफलं अल्पायुष्कता; अधिपतिफलं वाह्यवस्तुषु अल्पौजस्विता ।

**[ रागजं काय-वाक्-कर्म मिथ्याजीवः, पृथक्कृतः ।**

**दुःशुद्धेः ];**

रागसम्प्रयुक्तं कायिकं वाचिकं कर्म मिथ्याजीव इत्युच्यते । दुष्करा तच्छुद्धिः, तेन पृथग्-ग्रहणमिह ।

**[ वस्तुरागोत्थः चेन्न सूत्रविरोधतः [ ॥८६॥**

जीवितापेक्षितवस्तुरागेणैवाऽयं (-मिथ्याजीवः) जायत इति कथनं न समंजसं, सूत्र-विरोधात् । सूत्रे हि "यथा त्रिदण्डिन्, एके श्रमण-ब्राह्मणाः श्रद्धादेयं परिभुज्य विविधदर्शन समा-

रम्भाऽनुयोगं अनुयुक्ता विहरन्ति। तद्यथा हस्तियुद्धेऽश्वयुद्धे ...... कुमारयुद्धे ... सेनाव्यूहेऽनीकसंदर्शने महासमाजं वा प्रत्यनुभवन्त्येके"।

**[प्रहाणमार्गे समलं], सफलं [कर्म पंचभिः]।**

समलं प्रहीयतेऽत्रेति प्रहाणमार्गः समुच्यते। प्रहाण-भागीयं सास्रवं कर्म पंचभिः प्रकारैः फलवत्—(१) विपाकफलं; (२) निष्यन्दफलं; (३) प्रहाणफलं; (४) पुरुषकारफलं; (५) अधिपतिफलं चेत्येभिः।

**[चतुर्भिरमलं];**

विपाकफलमन्तरेण चतुर्भिः फलैः, अमलं कर्म फलवद् भवति।

**[अन्यत्सास्रवं] यच्छुभाऽशुभम् ॥८७॥**

प्रहाणभागीय-व्यतिरिक्तं सास्रवं कुशलं अकुशलं वा कर्मापि चतुर्भिः फलैरेव, विपाकफलमन्तरेण।

**अनास्रवं पुनः शेषं अव्याकृतं च यत् त्रिभिः।**

प्रहाणफलं विपाकफलं च विना शेषैः त्रिभिः, शेषं अनास्रवं अव्याकृतं च कर्म फलवद्।

**चत्वारि द्वे तथा त्रीणि कुशलस्य [शुभादयः] ॥८८॥**

कुशलं, अकुशलं, अव्याकृतम् (=नकुशलनाकुशलं)। कुशलस्य कर्मणो निष्यन्द-प्रहाण-पुरुषकारा-धिपतिफलानि चत्वारि कुशला धर्माः। कुशलस्य कर्मणो द्वे पुरुषकारा-ऽधिपति-फले ऽकुशलौ धर्मौ। तथा त्रीणि विपाक-पुरुषकारा-ऽधिपति-फलानि अव्याकृता धर्माः।

**अशुभस्य शुभाद्या द्वे त्रीणि चत्वार्यनुक्रमम्।**

अकुशलस्य कर्मणो द्वे पुरुषकारा-ऽधिपति-फले कुशलौ धर्मौ। तथा विपाक-प्रहाणान्तरेण त्रीणि अकुशलाः, प्रहाणान्तरेण चत्वारि अव्याकृताः।

**अव्याकृतस्य द्वे त्रीणि त्रीणि चैते शुभादयः ॥८९॥**

अव्याकृतस्य कर्मणः, द्वे पुरुषकारा-ऽधिपतिफले कुशले; त्रीणि विपाक-प्रहाणमन्तरेण अकुशलाः; तान्येव अव्याकृता अपि धर्माः।

**[ चत्वार्यतीतस्य सर्वे ];**

त्रैकालिकाः सर्वे एव धर्माः, अतीतकालस्य प्रहाणव्यतिरिक्तानि चत्वारि फलान्यनुगताः ।

**मध्यमस्याऽप्यनागताः ।**

अनागता धर्माः, अतीतस्य वर्तमानस्य ( = मध्यमस्य ) च प्रहाण-व्यतिरिक्तानि चत्वारि फलान्यनुगताः ।

**[ द्वे मध्यमा ];**

प्रत्युत्पन्नाः धर्माः प्रत्युत्पन्नस्य द्वे पुरुषकारा-ऽधिपति-फले समनुगताः ।

**अजातस्य फलत्रयमनागताः ॥६०॥**

अनागताः धर्माः अनागतस्य त्रीणि विपाका-ऽधिपति-पुरुषकार फलानि अनुगताः ।

**[स्वभूमिकास्तु चत्वारि, त्रीणि द्वे चान्य-भूमिकाः]।**

स्वभूमिका धर्मा प्रहाण-व्यतिरेकेण चत्वारि फलानि उत्पादयन्ति । स्वभूमिकाः = कर्म-भूमिकाः ।

अन्यभूमिकाः ( = कर्मभिन्न-भूमिकाः ) अनास्रवा धर्माः त्रीणि पुरुषकारा-ऽधिपति-निष्यन्द-फलानि उत्पादयन्ति । अन्यभूमिकाः सास्रवा धर्म्माः द्वे पुरुषकारा-ऽधिपतिफले उत्पादयन्ति ।

**[ शैक्षस्य त्रीणि शैक्षाद्याः ];**

शैक्षाः = अनर्हत आर्य-पुद्गलस्य धर्माः । शैक्षस्य शैक्षाद्या धर्म्माः त्रीणि निष्यन्द-पुरुषकारा ऽधिपतिफलानि उत्पादयन्ति । तथैव अर्हतो धर्माणां स्वभावः । नशैक्ष-नाशैक्षधर्माः शैक्षस्य कर्मणः त्रीणि पुरुषकारा-धिपति-प्रहाण-फलानि ।

**अशैक्षस्य तु कर्मणः ॥६१॥**

**शैक्षधर्मादय ( एकं त्रीणि द्वे ऽशैक्षकादयः )।**

अशैक्ष-कर्मणः, शैक्षा धर्माः, अधिपतिफलमेकम् । अशैक्षा धर्माः तत्कर्मणोऽधिपति-निष्यन्द-पुरुषकारफलानि त्रीणि । नशैक्ष-नाशैक्ष-धर्माः तत्कर्मणोऽधिपति-पुरुषकारफले द्वे ।

[शैक्षादयस्तदन्यस्य द्वे द्वे फलानि पंच च] ॥६२॥

शैक्षकर्मणः शैक्षा अशैक्षाश्च धर्माः पुरुषकारा-ऽधिपति फले ( द्वे द्वे )। नशैक्ष-नाशैक्ष-धर्माः तत्कर्मणः पंचापि फलानि।

[ त्रीणि दर्शनहेयस्य चत्वार्येकं ] तदादयः।

दर्शन-हेया धर्माः दर्शनहेयकर्मणोऽधिपति-पुरुषकार-निष्यन्द फलानि।

भावनाहेया धर्माः तत्कर्मणः चत्वारि प्रहाणफलमन्तरेण। अहेया धर्माः तत्कर्मणोऽधिपतिफलम्।

[ते तु द्वे चत्वारि त्रीणि भावनाहेयकर्मणः] ॥६३॥

दर्शनहेया धर्मा भावनाहेयकर्मणः पुरुषकारा-ऽधिपति-फलानि। भावनाहेया धर्माः तत्कर्मणः प्रहाणमन्तरेण चत्वारिफलानि। अहेया धर्माः तत्कर्मणः पुरुषकाराऽधिपति-प्रहाण-फलानि।

अप्रहेयस्य ते त्वेकं द्वे चत्वारि यथाक्रमम्।

दर्शनहेया धर्मा अहेयस्य कर्मणोऽधिपतिफलं उत्पादयन्ति। भावनाहेया धर्माः तत्कर्मणोऽधिपति-पुरुषकारफले। अहेया धर्माः तत्कर्मणो विपाकफलमन्तरेण चत्वारि फलानि।

[ अयोगविहितं क्लिष्टं विधि-प्रभ्रष्टमित्यपि ] ॥६४॥

"ज्ञान-प्रस्थानशास्त्रे" योगविहितं, अयोगविहितं नयोगनायोग-विहितमिति त्रिविधं कर्म उक्तम्। तत्र केचनाचार्याः क्लिष्टं कर्म अयोग-विहितं मन्यन्ते। "अयोनिशोमनस्कार = अयोन्या अन्यायेन क्लेश-योगेन यः प्रवृत्तो मनस्कारः"। अन्ये, विधिप्रभ्रष्टं कर्म अयोगविहित-मपि वदन्ति। तथैव योगविहितकर्म-विषयेऽपि विभिन्नानि मतानि, केचन अक्लिष्टमिति; अन्येऽविधिभ्रष्टमिति।

एकं जन्माऽऽक्षिपत्येकं;

जन्मशब्दो नाऽत्र जातिवाचकः, निकायसभागो ( २ : ४१ ) ऽनेन विवक्षितः। य एकं निकायं समुपगच्छति, स जात इत्युच्यते। एकं कर्म एकमेव जन्म उपाक्षिपति, नानेकम्। अनेकानि कर्माणि युगपद् नाक्षिपन्ति एकं जन्म।

अनेकं परिपूरकम् ।

अनेकं कर्म एकस्य जन्मनः परिपूरकं भवितुमर्हति; यथा चित्रेऽनेके परिपूरका वर्णाः ।

[ अचित्तक-समापत्ती नाक्षिपतो, न चाऽसयः ] ॥६५॥

द्वे अचित्तक समापत्ती ( २ : ४२ ) न कर्माक्षिपतः, यत इमे न कर्मणा सह भवतः। प्राप्तयो ( २ : ३६ ) ऽपि न आक्षिपन्ति, "तदाक्षेपकेन कर्मणा सहभवन्त्योऽपि न तेनैव सफला ।

[आनन्तर्याणि कर्मास्यभीक्ष्णक्लेश(श्च दुर्गतिः) ।
असंज्ञि-सत्त्वाः कुरव आवरणत्रयं मतम् ] ॥६६॥

१. पंच आनन्तर्य-कर्माणि, (१) मातृघातः, (२) पितृघातः, (३) अर्हद्घातः, ४) संघभेदनं, (५) दुष्टचित्तेन तथागतस्य लोहितोत्पादनमिति । इत्येकं आवरणम् ।

२ क्लेशो द्विविधः, अभीक्ष्ण क्लेशोऽधिमात्रक्लेशश्चेति । निरन्तरप्रवाही क्लेशोऽभीक्ष्ण-क्लेशः । इदं द्वितीयं आवरणम् ।

३. नारक-तिर्यक्-प्रेतगतयः, सु-गतिषु च उत्तरकुरु-मनुष्यजन्म चतुर्थध्यान-भूमिकाऽसंज्ञि-सत्त्व जन्म चेति; गतिषु । एतानि तृतीयं आवरणम् । एतज्जन्मानन्तरमेव विपाकदत्त्वादानन्तर्यमित्युच्यते ।

त्रिषु द्वीपेष्वानन्तर्यं;

उत्तरकुरुभिन्नेषु त्रिषु जम्ब्वादिद्वीपेषु आनन्तर्य-कर्माणि भवन्ति ।

षण्ढादीनां तु नेष्यते ।

अल्पोपकार-लज्जित्वात् ।

लज्जित्वं = ह्रीव्यपत्राप्यं ( २ : ३२ ) । आदि-शब्देन तिर्यक् प्रेतादीनां ग्रहणम् । षण्ढादीनां आनन्तर्यं कर्म न सम्भवति । अल्पोपकार-भावेन, सलज्जभावेन च षण्ढादीनां तत्र असामर्थ्यम् ।

[ शेषा गतिषु पंचसु ] ॥६७॥

मनुष्याणां उत्तर-कुरुषु जन्म विपाकेऽन्तरायः, देवानां असंज्ञि-

सत्त्वेषु जन्म च अन्तरायः। द्वौऽन्यौ अन्तरायौ नरकादि पंचस्वपि गतिषु भवतः।

**संघभेदस्त्वसामग्रीस्वभावो, विप्रयुक्तकः।**

**अक्लिष्टाऽव्याकृतो धर्मः**

संघभेदः संघस्य असमग्रतारूपः, स च चित्त-विप्रयुक्तः धर्मः अक्लिष्टाऽव्याकृतः ( = अनिवृताऽव्याकृतः )।

**तेन सङ्घः समन्वितः ॥९८॥**

संघभेदेन संघः संयु वति, न तु संघभेदकः।

**[ तदवद्यं मृषावादस्तेन भेत्ता समन्वितः ]।**

दोषो हि संघभेदनं मृषावादरूपं, तेन दोषेण संघभेदकः संयुक्तो भवति।

**[ अवीचौ पच्यते कल्पं ];**

संघभेद-कर्मणा स सत्त्वोऽवीचि-नरके कल्पं विपाकं भुंक्ते।

**अधिकादधिका व्यथा ॥९९॥**

आनन्तर्याणां संख्याऽऽधिक्ये पीडाऽप्यधिका जायते।

**भत्तुर्दृष्टि-सुचरितो भिनत्ति;**

बुद्धिमान् आचारसम्पन्नो भिक्षुरेव संघभेदं करोति।

**अन्यत्र;**

तथागतस्य अनासन्न-प्रदेशे भिनत्ति।

**बालकान्।**

बालकान् एव भिनत्ति, न तु दृष्ट-धर्मानार्यान्।

**( अन्य-शास्तृ-पथा-ऽऽदानात् भिन्नः );**

यदैव अन्यः शास्ता अन्यो मार्गश्च स्वीकृतः, तदैव संघो भिन्नः।

**न विवसत्यसौ ॥१००॥**

असौ संघो न ( विशेषकालं विवसति )। प्रत्यूषे नूतनः संघो ततो जायते।

( चक्रभेदो मतश्चायं );

यावत् संघो न प्रतिसंधीयते तावन्मार्ग-प्रवृत्तिर्विघ्निता भवति । न कस्य चित्संताने मार्गः संमुखोभवतीत्यर्थः ।

[ जम्बूद्वीपे ];

अयं चक्रभेदो जम्बूद्वीपे भवति ।

नवादिभिः ।

नवादिभिः भिक्षुभिः सहितस्य संघस्य भेदो भवितुमर्हति। संघो न चतुर्भ्यो न्यूनैर्भिक्षुभिर्भवति । अतः संघभेदकं गृहीत्वा पंच पंच भिक्षव एकस्मिन् पक्षे, बुद्धं गृहीत्वा पंच अन्यस्मिन् पार्श्वे।

[ कर्मभेदः ] [ त्रिषु द्वीपेषु ];

कुरुविरहितेषु त्रिष्वपि द्वीपेषु, यत्र धर्मस्य स्थितिः, तत्र कर्मभेदो जायते ।

अष्टाभिरधिकैश्च स ॥१०१॥

अष्टभिर्भिक्षुभिरयं भवितुमर्हति। इत्थं प्रतिगणं चत्वारो भिक्षवः, किन्तु अत्र संघभेदको नाऽस्ति यः शास्तृस्थानमादद्यात्।

[आदावन्ते]ऽर्बुदाद् [एकयुगात् प्राङ् निर्वृते मुनौ] ।
अबद्धायां [च] सीमायां [ न चक्र-भेद-सम्भवः ] ॥१०२॥

आदौ धर्मचक्रप्रवर्तन-समये, अन्ते भगवतः परिनिर्वाण-समये च एतस्मिन् कालद्वये संघ एक-मनस्कतया तिष्ठति, न चक्रभेदस्तदा । मध्यवर्त्तिकाले, अर्बुदोत्पत्तेः प्राक् चक्रभेदोऽसम्भवः; यावत् शासने शीलार्बुदो दृष्ट्यर्बुदो नोत्पद्येत न तावत् । अर्बुदः = मलः । एकयुगं = अग्र-श्रावक-युगम् । यावत् तच्छ्रावकयुगं न प्रत्युपस्थितं भवेत्तावदपि न संघभेदो भवितुमर्हति, यतो रात्रिपर्यन्तमेव संघो भिन्नः स्थातुं शक्नोति, श्रावकयुगाभावात् प्रभाते संघ-स्थापनं असम्भवं स्यात् । निर्वाणानन्तरमपि न चक्रभेदः प्रतिद्वन्द्यभवात्। यावच्च सीमा अबद्धा ( न पृथक् जाता ) तावदपि न चक्रभेदः। "एकस्यां हि सीमायां पृथक् कर्म ( = विनय-कर्म ) करणात् संघद्वैधं भवति" ।

उपकारि-गुण-क्षेत्र-निराकृति-विपादनात् ।

माता-पितरौ हि उपकारिणौ, तयोर्घातेन उपकारि-क्षेत्रघातः; अतएव अस्यानन्तर्यकर्मसु ग्रहणम् । अर्हन्, संघो बुद्धश्च गुण-क्षेत्रम् । अर्हद्वधेन गुणक्षेत्र-विघातः, तद्वदेव बुद्धस्य रुधिरोत्पादने, संघस्य भेदने गुणक्षेत्र-विपादनं ( = विकोपनं ) भवति । निराकृतिः = निराकरणं, उपकारि-क्षेत्रनिराकरणमित्यादि ।

**[ व्यंजनस्यान्यथाभावेऽपि ]**

मातुः पितुः लिंगपरिवर्तनेऽपि आनन्तर्यकार्यत्वं तयोर्विघातस्य अस्ति एव ।

**[माता] यच्छोणितोद्भवः ॥१०३॥**

यस्य रुधिरेण शरीरोत्पादः, सा माता । आपायिका, पोषिका सम्बर्द्धिका अपि मातृकल्पाः ।

**[ न बुद्धताडचित्तस्य ];**

बुद्धा हन्तुं अशक्याः, तेन बुद्धमारणचित्तेन रुधिरोत्पादनादपि आनन्तर्यं कर्म भवति ।

**[ न बधादूर्ध्वमर्हति ] ।**

साधारणजनभ्रमेण कृतार्हद्घातस्य न आनन्तर्य-कर्म भवति; बधाद् ऊर्ध्वं अर्हति ज्ञाते सत्यपि ।

**[ नानन्तर्य-प्रयुक्तस्य वैराग्य-फल-सम्भवः ] ॥१०४॥**

आनन्तरस्य प्रयोगो येनाऽनुष्ठितः, तस्येह जन्मनि वैराग्यं स्रोत आपन्नादि फलप्राप्तिर्वा न संभवति ।

**[ संघभेद-मृषावादः सावद्यं सुमहन्मतम् ] ।**

धर्मं अधर्मं च जानन्नपि संघभेदार्थं स मृषा किमपि किमपि वदति । संघभेदेन स तथागतस्य धर्मकायमेव भिनत्ति, अत इदम-तीव दोषयुक्तं कर्म आनन्तर्य-कर्मसु परिगणितम् ।

**भवाग्रचेतना शुभे लौकिके फलवत्तमा ) ॥१०५॥**

लौकिकेषु कुशलेषु धर्मेषु भवाग्रचेतना महत्फलवती । भवाग्र चेतनया हि आरूप्यधातौ अष्टकोटि कोटिकल्पं ( ३ : ८१ ) शान्त आवासो भवति ।

**दूषणं मातुरर्हन्त्या [ बोधि-सत्त्वस्य ] मारणम् ।**
**[नियतिस्थस्य], शैक्षस्य; संघा-यऽऽद्वार-हारिका ॥१०६॥**
**आनन्तर्य-सभागानि पंचमं स्तूप-भेदनम् ।**

(१) मातुरर्हन्त्याश्च दूषणं (=व्यभिचरणं); (२) नियतौ वर्त्तमानस्य निश्चितानागतबुद्धत्वस्य बोधि-सत्त्वस्य, (३) शैक्षस्य ( अनर्हदार्यपुद्गलत्रयस्य स्रोत आपन्न-सकृदागाम्य-नागामिनां ) च मारणं; (४) संघ-लाभमार्गस्य प्रतिषेधनं; (५) स्तूपभेदनं चेति पंच आनन्तर्य-कल्पानि। तत्र प्रथमं मातृघातसमानम्। द्वितीयं पितृघातेन समम्। तृतीयं अर्हद्घातेन। चतुर्थं संघभेदेन। पंचमं तथागत रूधिरोत्पादेन।

**क्षान्त्यनागामितार्हत्त्वप्राप्तौ कर्माऽतिविघ्नकृत् ॥१०७॥**

क्षान्ति ( ६ : २३ )-प्राप्तिः, अनागामिता ( ६ : ३६ )-प्राप्तिः, अर्हत्व-प्राप्तिश्चेति त्रिषु अतिविघ्नकरं कर्म इदम्।

**बोधिसत्त्वः कुतो यावत् लक्षणकर्मकृद् यतः ।**

कुतः प्रभृति बोधिसत्वो भवति ?—द्वात्रिंशल्लक्षणोत्पादकानि कर्माणि यतः प्रभृति करोति, ततः प्रभृत्येव स बोधिसत्त्वः। हस्तपादादिषु द्वात्रिंशन्महापुरुष लक्षणानि भवन्ति।

**[सुगो-च्चकुल-पूर्णाक्षः पुमान् जाति-स्मरोऽविवृत्] ॥१०८॥**

बोधिसत्त्वभूमि-प्राप्त्यनन्तरमसौ सदा सुगः (=सुगतिपरायणः), उच्चकुलोत्पन्नः, पूर्णेन्द्रियः ( न काणः खंजो वा ) पुरुषः ( न स्त्री उभयलिंगी वा ), पूर्वजन्म-स्मृति-सहितः, अवैवर्त्तिकः ( अविवर्त्तनीयः ) च भवति।

**[ जम्बूद्वीपे पुमानेव संमुख-बुद्धचेतनः ।**
**चिन्तामयं कल्पशते शेषे तदाक्षिपत्यसौ ] ॥१०६॥**

असौ बोधिसत्त्वः अवशिष्टे कल्पशते जम्बूद्वीप एव चिन्तामयं तत् कर्म आक्षिपति, तत्र च संमुखबुद्ध-चेतनः ( संमुखे बुद्धाः यस्य चेतनस्य ) पुमांश्च भूत्वा जायते।

**एकैकं पुण्यशतजम् ;**

तस्य शरीरे वर्तमानेषु लक्षणेषु एकैकं पुण्यशतेन जातम्।

**[ असंख्येय-त्रयान्तजः।**

**पश्यी दीपो रत्न-शिखी ];**

त्रयाणां असंख्येय ( ३ : ६४ )-कल्पानां अन्ते गौमत-बुद्धो जातः। तत्र प्रथमासंख्येयो रत्नशिखिसम्बुद्धकाले, द्वितीयो दीपंकरकाले, तृतीयो विपश्यि-काले समाप्तः।

**( प्रथमः शाक्यमुनि रसौ ) ॥११०॥**

प्रथमः शाक्यमुनिर्बुद्धोजातः।

**[ दानस्य पूरिः कृपया सर्वेभ्यः सर्वदानतः ]।**

कृपा-पुरस्सरं सर्वेभ्यः सर्वं दत्त्वा बोधिसत्त्वेन दानपारमिता पूरिता।

**[ क्षान्तिशीलस्यांगच्छेदे सरागस्याप्य ]कोपतः ॥१११॥**

सरागस्य (=अवीतरागस्य ) अपि बोधिसत्त्वस्य कोपं विनैव अंगच्छेदः क्षान्ति-पारमितायाः शीलपारमितायाश्च पूर्तयेऽभूत्।

**( वीर्यस्य पुष्य-स्तवनात् );**

पुष्य ( = तिष्य)-संबुद्धस्य एकपादे स्थित्वा सप्ताहोरात्रं स्तुतिः अस्य वीर्यपारमिता पूर्तये। स्तुतिश्च—

"न दिवि भुवि वा नास्मिं लोके न वैश्रवणालये।
न मरु-भवने दिव्ये स्थाने न दिक्षु विदिक्षु च॥
चरतु वसुधां स्फीतां कृत्स्नां स-पर्वत-काननाम्।
पुरुष वृषभ! त्वत्तुल्योऽन्यो महाश्रमणः कुतः॥"

**समाधि-ध्योरनन्तरम्।**

अनन्तरं ध्यान (=समाधि )-पारमितां, प्रज्ञा ( = धी )-पारमितां च पूरितवान्।

**(पुण्यं क्रिया च तद्वस्तु त्रयं कर्मपथो यथा) ॥११२॥**

कर्मपथवद्, पुण्यं, क्रिया, वस्तु इति त्रयं भवति। कर्मपथः कर्म भवति कर्मपथश्च। दानं, शीलं, समाधिश्च प्रत्येकं स्वभावतः पुण्यं,

क्रिया, वस्तु ( = क्रियास्थानं ) भवन्ति । कायिकं वाचिकं वा कर्म पुण्यक्रिया वस्तु—इष्ट-विपाकत्वात् तत्कर्म पुण्यं; तत्स्वभाव-कर्म भावात् पुण्य क्रिया; चेतना-विषयाभ्यास-स्थानत्वात् वस्तु ।

**दीयते येन तद्दानं;**

स्पष्टम् ।

**पूजाऽनुग्रह काम्यया ।**

तच्च दानं पूजाकाम्यया अनुग्रहकाम्यया वा दीयते ।

**काय-वाक्-कर्म सोत्थानं;**

दानं च कुशलचित्तोत्थान-सहितं कायिकं वाचिकं कर्म ।

**[ तन्महाभोगवत्फलम् ] ॥११३॥**

तद्दान पुण्यक्रियावस्तु महाभोगसम्पन्नं फलं प्रददाति ।

**स्व-परार्थो-भयार्थाय नोभयार्थाय दीयते ।**

दानं स्वार्थाय भवति, परार्थाय, उभयार्थाय ( = स्वपरार्थाय ), न च स्वार्थाय न परार्थाय वा । अनन्योपयोगि चैत्यं स्वार्थाय करोति; वीतरागः परार्थाय दानंकरोति; अवतीरागार्थः स्वपरार्थाय; वीतरागार्थ-चैत्यनिर्माणे चतुर्थ-कोटौ ।

**( तद्विशेषो दानपति-वस्तु-क्षेत्र विशेषतः ) ॥११४॥**

दानपतिः, वस्तु, क्षेत्रमिति त्रयस्य विशेषेण दानस्याऽपि विशेषो भवति । दानपतिः = दायकः । दान-वस्तु = देयम् । दानक्षेत्रं = प्रतिग्रहीता ।

**[ श्रद्धादि-विशिष्टो दाता ];**

श्रद्धा-शील-श्रुत-त्याग-प्रज्ञा-ऽल्पेच्छतादि-समन्वितो दाता समीचीनो भवति ।

**सत्कृत्यादि ददाति [ हि ] ।**

सत्कारादिपूर्वकं हि अयं श्रद्धादि-सम्पन्नो दाता ददाति, तेन तस्य दानमपि उत्तमम् ।

**[सत्कारानुदारान् काले]ऽनुच्छेद्यान् लभते ततः ॥११५॥**

ततस्तेन दानेन दाता उच्छेत्तुमशक्यान् महत सत्कारान् लाभांश्च लभते।

**वर्णादि सम्पन्नं वस्तु;**

उत्तमं दानमिति शेषः।

**[ सुरूपः कीर्तिमान् रतः।**
**अति-सुकुमारः ऋतुसुखस्पर्शाश्रयस्ततः ] ॥११६॥**

तादृशदानस्य प्रतिफले, दाता भवति सुरूपः……ऋतुषु सुख-स्पर्शशरीरः।

**गति-दुःखोपकरणगुणैः क्षेत्रं विशिष्यते।**

क्षेत्रं = दान-पात्रम्। तच्चतुर्भिः कारणैः उत्कृष्टं भवति। पात्रं यदि सुगतिविशिष्टं अस्ति, दुःखविशिष्टं ( रोगादि-समन्वितं ), परोपकार-निरतं, शीलादिगुण-सहितं वा।

**[ श्रेष्ठं मुक्तस्य मुक्ताय ];**

वीतरागेण वीतरागाय दत्तं सर्वोत्कृष्टम्।

**[ बोधिसत्त्वस्य च ] ;**

बोधिसत्त्वस्य दानमपि महादानं, वीतरागतया दानात्।

**[ अष्टमम् ] ॥११७॥**

दानानि—१. आसद्य दानं; २. भयेन दानं; ३. अदान्मे दानमिति दानं; ४. दास्यति मे दानमिति दानं; ५. दत्तपूर्वं मे पितृभिश्च पितामहैश्चेति दानं; ६. स्वर्गार्थ-दानं; ७. कीर्त्यर्थ-दानं; ८ चित्तालंकारार्थ-दानम्। इदं अष्टमं श्रेष्ठं दानम्।

**[माता-पितृभ्यां ग्लानाय भाणकाया-ऽन्त्यजन्मने]।**
**बोधिसत्त्वाय, चामेया अनार्येभ्योऽपि दक्षिणाः ॥११८॥**

ग्लानः = रोगी। भाणकः = धर्मोपदेष्टा। अन्त्यजन्मा = अन्तिम शरीरधारी निर्वाणासन्नो बोधिसत्त्वः। यदि इमे आर्या नाऽपि भवेयुस्तथाऽपि एतेभ्यो दत्तं दानं ( = दक्षिणा ) अपरिमेय-फलम्।

[ पृष्ठं क्षेत्रं अधिष्ठानं प्रयोगः चेतनाऽऽशयः ।
तदल्प-महत्त्वादल्पमहत्त्वंअपि कर्मणः ] ॥११९॥

पृष्ठादीनां अल्पत्वा-न्महत्त्वाद्वा कर्मणामपि भवत्यल्पत्वं महत्त्वम् ।

[संचेतना-समासत्वा-ऽकौकृत्या-ऽप्रतिपक्षतः ।
परिवार-विपाकाच्च कर्मोपचितमुच्यते ] ॥१२०॥

संचेतना = अभिप्रायः ( ज्ञानाऽज्ञानापूर्वकता वा ) । असंचित्य कृतं कार्यं नोपचितं, संचेतनातः कृतं तूपचितम् । "कश्चिद् एकेन दुश्चरितेन दुर्गतिं याति कश्चिद्यावत् त्रिभिः । कश्चित् एकेन कर्मपथेन कश्चिद्यावद् दशभिः । तत्र यो यावता गच्छति, तस्मिन् असमाप्ते कृतं कर्म नोपचितम् । समाप्तेतूपचितम्" एवं समाप्तत्वात् उपचितम् । कौकृत्यं = पश्चात्तापः, तदभावोऽकौकृत्यम् । पश्चात्तापाभावेन, प्रतिपक्षाभावेन च कृतं कर्म उपचितं उच्यते । अकुशल परिवारेण कृतं कर्मापि तथा विपाक ( ४ : ५० ) तो . पि ।

[ चैत्ये त्यागान्वयं पुण्यं ];

चैत्ये दानस्य पुण्यं परित्यागाज्जातं भवति "सति हि प्रतिग्रहीतरि युक्तं त्यागान्वयं पुण्यम् । तत्र हि प्रीत्यनुग्रहेण ग्रहीता युज्यत इति" ।

मैत्र्यादिवत् अगृह्णति ।

प्रतिग्राहकाभावेऽपि मैत्र्यादिवत् दातारं फलमुपगच्छति । मैत्रीभावस्यापि नास्ति कोपि प्रतिग्रहीता, तथाऽपि तस्य फलं तद्भावसमापन्नस्य भवत्येव ।

कुक्षेत्रेऽपीष्टफलता फलबीजाऽविपर्ययात् ॥१२१॥

बीजं स्वानुरूपमेव फलं कुक्षेत्रेऽप्युप्तं ददाति, तथैव दानं कुपात्रे दत्तमपि दातुः इष्टफलमेव ददाति ।

[दौःशील्यं अशुभं रूपं, शीलं तद्विरितिः ];

अशुभं रूपं दौःशील्यमित्युच्यते । दौःशील्य-विरतिरेव शीलम् ।

[ द्विधा ] ।

विरतिरस्ति विज्ञप्तिः, येनकर्मणा हेतुभूतेन विरतो भवति। अविज्ञप्तिः स्वविरति-कार्यम्।

**[ बुद्धेन प्रतिषिद्धाच्च ];**

भगवता प्रतिषिद्धात्कर्मणो विरतिरपि शीलम्। यथा विकाल-भोजनादि-विरतिः।

**परिशुद्धं चतुर्गुणम् ॥१२२॥**

शीलं परिशुद्धं अस्ति, यत इदं चतुर्भिः गुणैर्युक्तम्।

**[ दौःशील्य-तद्धेत्वस्पृष्टं तद्विपक्ष-शमाश्रयम् ]।**

तच्च चतुर्गुणं—न दौःशील्य-विप्लुतं, न दौःशील्यहेतु-विप्लुतं, दौःशील्य विपक्षस्य सुशीलताया आश्रयभूतं, शान्त्याश्रयः दौःशील्य-हेतवः क्लेशाः ( ४ : १७ ) उपक्लेशाः ( ५ : ४१ )।

**समाहितं तु कुशलं [ भावना ];**

"[समाहितं इति किमिदं?"], समाधि स्वभाव-सहभू यत् चित्तम्।

[ कस्मात् इदं भावनेत्युच्यते ? चित्तवासनात् ] तद्धि समाहितं कुशलं चित्तं अत्यर्थं वासयति, गुणैः तन्मयी करणात् संततेः। पुष्पैः तिलवासनवत्।" ( भाष्ये )।

**चित्तवासनात् ॥१२३॥**

भावना हि चित्तं वासयति।

**स्वर्गाय शीलं प्राधान्यात्, विसंयोगाय भावना।**

शीलस्य फलं प्रधानतः स्वर्गं, प्रहाण-मार्गार्था च भावना।

**[ब्राह्मं पुण्यं चतुष्कस्य] कल्पं स्वर्गेषु मोदनात् ॥१२४॥**

"चत्वारः पुद्गला ब्राह्मं पुण्यं प्रसवन्ति। अप्रतिष्ठिते पृथिवी-प्रदेशे तथागतस्य शारीरं स्तूपं प्रतिष्ठापयति। अयं प्रथमः पुद्गलः ब्राह्मं पुण्यं प्रसवति। चातुर्दिशे भिक्षुसंघे आरामं निर्यातयति। अयं द्वितीयः··· ।) भिन्नं तथागतस्य श्रावकसंघं प्रतिसंदधाति। अयं तृतीयः·····। मैत्रीसहगतेन चित्तेनाऽवैरेण असपत्नेन अव्याबाधेन विपुलेन महद्गतेन अप्रमाणेन सुभावितेन एकं दिशं अधिमुच्य स्फरित्वोपसम्पद्य विहरति·····अयं चतुर्थः।" ( एकोत्तर २१ : ५ )।

"भिन्नं पन भन्ते ! संघं समग्गं कत्वा किं सो पसवतीति ? ब्रह्मं आनन्द पुञ्ञं पसवतीति । किं पन भन्ते ! ब्रह्मं पुञ्ञंति ? कप्पं आनन्द ! सग्गम्हि मोदतीति ।" ( अंगुत्तर निकाय V. 76 ). "संघं समग्गं कत्वान कप्पं सग्गम्हि मोदति" । ( इतिवुत्तक. १८ ) ।

**[धर्मदानं] सूत्रादीनां [सम्यग] क्लिष्ट-देशना ।**

अक्लिष्ट-देशना = अक्लिष्ट-चित्त-समुत्थापिता देशना । क्लेश इह लाभ-सत्कार-कीर्ति-लिप्सा । सूत्रादीनां धर्मग्रन्थानां तादृशी देशना ( = उपदेशः ) धर्मदानमित्युच्यते ।

**पुण्य-[निर्वाण]-निर्वेध-भागीयं [ कुशलं त्रिधा ] ॥१२५॥**

पुण्य-भागीयं ( = इष्ट-विपाकजनकं ), निर्वाणभागीयं, निर्वेध ( ६ : १७ )-भागीयमिति त्रिविधं कुशलम् ।

**[ त्रिविधं ] ससमुत्थानं [ कर्म ], योग-प्रवर्त्तितम् ।**
**लिपिर्मुद्रा [स-] गणनं काव्यं संख्या यथा-क्रमम् ॥१२६॥**

योग-प्रवर्तितं = उपाय-विशेष-प्रवर्तितं चित्तसमुत्थान-सहितं त्रिविधं कर्म काय-वाङ्-मनो-जातम् । तत्र लिपिर्मुद्रा च कायकर्म; मुख-गणनं काव्यं च वाक्कर्म; संख्यानं मनः कर्म ।

**सावद्या निवृता हीनाः क्लिष्टा [धर्माः] ;**

क्लिष्टा धर्माः, सावद्या निवृता हीनाः संज्ञायन्ते ।

**शुभाऽमलाः ।**

**प्रणीताः;**

कुशला धर्मा अमलाः प्रणीताश्चोच्यन्ते ।

**संस्कृताः शुभाः सेव्याः;**

संस्कृताः कुशलाश्च धर्माः सेवितव्याः ।

**मोक्षस्त्वनुत्तरः ॥१२७॥**

मोक्षः = निर्वाणम् । तद्धि ध्रुवं, कुशलं च, अतः सर्वोत्कृष्टम् ।

( इति कर्मनिर्देशः ) ।

( समाप्तं चतुर्थं कोश स्थानम् ) ।

---

# पञ्चमं कोशस्थानम् ।

## अनुशयाः ।

**मूलं भवस्याऽनुशयः;**
स्पष्टम् ।

**[ षड् रागः प्रतिघस्तथा ।**
**मानोऽविद्या (च) दृष्टिश्च विमतिः ];**
ते ऽनुशया रागादयः षट् । विमतिः = विचिकित्सा = संशयः ।

**[ षडमी अपि ॥ १ ॥**
**रागभेदेन सप्तोक्ताः ];**
कामरागो भवरागश्चेति द्विधा रागः, इत्थं सप्त अनुशया भवंति ।

**भवरागो द्विधातुजः ।**
रूपधात्वारूप्यधातुसम्बन्धेन जायतेऽयं भवरागः ।

**अन्तर्मुखत्वात् तन्मोक्षसंज्ञा-व्यावृत्तये स्मृतः ॥ २ ॥**
ते सत्त्वाः स्वविमानादि-सम्बन्धे रागिणो भवन्ति, स च रागो ध्यान-सम्बन्धितयाऽन्तर्मुखोऽस्ति, तेनाऽस्य नाम भवराग इति । रूपाऽऽरूप्ययोः मोक्षे परिसंख्यानं मास्त्विवति भवरागस्य पृथक् ग्रहणम् ।

**[ दृष्टयः पंच सत्काय-मिथ्या-ऽन्तग्राह-दृष्टयः ।**
**दृष्टि-शीलव्रत-परामर्शाव(नुशया ) दश ] ॥ ३ ॥**
पंच दृष्टयः—सत्कायदृष्टिः, मिथ्यादृष्टिः, अन्तग्राहदृष्टिः, दृष्टि-परामर्शः, शीलव्रतपरामर्शश्च । इत्थं दृष्टेः पंचभेदग्रहणेन सर्वे दश अनुशया भवन्ति—राग-प्रतिघ-माना-ऽविद्या-विचिकित्सा-( सत्काय-मिथ्या-अन्तग्राह ) दृष्टि-दृष्टिपरामर्श-शीलपरामर्शा इति ।

**दशैते सप्त सप्ताष्टौ दृष्टिद्वित्रि-विवर्जिताः ।**
**यथाक्रमं प्रहीयन्ते कामे दुःखादि-दर्शनैः ॥ ४ ॥**

कामे दश इमे अनुशयाः, ते दुःखदृष्ट्या प्रहातुं शक्याः । सत्काया-ऽऽन्तग्राह-शीलव्रतपरामर्शेति त्रिकं विहाय अन्ये सप्त उत्पत्ति-दृष्ट्या प्रहाण-दृष्ट्याच प्रहेयाः । सत्काया-न्तग्राहवर्जिता अष्टौ मार्ग-दृष्ट्या प्रहेयाः ।

**चत्वारो भावना-हेयाः;**

राग-प्रतिघा-ऽविद्या-मानेति चत्वारो भावनया प्रहेयाः । द्वादश दृष्टयः, चतस्रो विचिकित्साः, पंच रागाः, पंच प्रतिघाः; पंच मानाः, पंच अविद्याः, सर्वे षट्-त्रिंशत् अनुशयाः ।

**तेच प्रतिघवर्जिताः ।**

**रूपेषु;**

पञ्च प्रतिघवर्जिता एकत्रिंशत् अनुशया रूपधातौ भवन्ति ।

**[ तद्वदारूप्ये ];**

त एव एकत्रिंशत् आरूप्येऽपि ।

**[ तथाष्ट-नवतिर्मताः ] ॥ ५ ॥**

इत्थं त्रिषु धतुषु काम-रूपा-ऽऽरूप्येषु अष्टनवतिः अनुशया भवन्ति । ( ३६ + ३१ + ३१ = ९८ ) ।

**भवाग्रजाः क्षान्तिबध्या [ दृग्हेया एव, शेषजाः ।**
**दृग्भावनाभ्यां ] ;**

क्षान्ति ( = धर्मज्ञाना-ऽन्वयज्ञान-क्षान्ति द्वय )-हेया अनुशया यदा भवाग्रे ( = नैवसंज्ञानासंज्ञायतने) जाताः, तदा दृष्टिहेया एव भवन्ति ।

अन्यासु अष्टासु भूमिषु ( काम-रूपचतुष्टया-ऽऽरूप्यत्रयेषु ) जाताः, दृष्ट्या भावनया च हेया भवन्ति ।

**अक्षान्तिबध्या भावनयैवतु ॥ ६ ॥**

अक्षान्तिबध्या यत्रकुत्रापि जाता अनुशया भावनया एव हेया भवन्ति ।

**आत्माऽऽत्मीय-ध्रुवोच्छेद-नास्ति-हीनोच्च-दृष्टयः।**
**[ अहेत्वमार्ग-तद्-दृष्टिरेता हि पंच दृष्टयः ] ॥ ७ ॥**

(१) आत्माऽऽत्मीयदृष्टिः **सत्कायदृष्टिः**। सत् = विनश्यत् सत्, कायः = निचयः = समुदायः। (विनश्यत्-) सत् + कायः पंच उपादान स्कन्धा (१ : ८) एव। तत्राहं-मम-दृष्टिः **सत्कायदृष्टिः**।

(२) ध्रुवोच्छेद-दृष्टिरेव **अन्तग्राह-दृष्टिः**। यतोऽत्र-केवलं ध्रुवं इत्येव एकोऽन्तो गृह्यते, केवलं उच्छेद धर्मं सर्वं इत्येव वा। अंत-ग्रहणात् अन्तग्राह-दृष्टिः।

(३) नाऽस्ति-दृष्टिरेव **मिथ्या-दृष्टिः**। सुकृत-दुष्कृतादीनां फलस्यापवादोह्यत्र।

(४) हीनोच्च-दृष्टिः **दृष्टि-परामर्शः**। ममेव सत्यं अन्यदनृतमिति।

(५) अहेतुर्हेतुः अमार्गो मार्गो यत्र स्वीक्रियते, स **शीलव्रत-परामर्शः**। यथा अकर्तृभूतानां महेश्वरादीनां जगतः कर्तृत्वस्वीकार, स्वर्गादि-लाभेऽमार्गभूतानां आत्महत्या-ऽग्निप्रवेशादीनां मार्गत्व-स्वीकारः।

**ईशादि हेत्वभिष्वंगः शाश्वतात्म-विपर्ययात्।**
**प्रवर्तते; ततो हेयः स एव दुःखदर्शनात् ॥ ८ ॥**

ईश्वरादीनां जगत्कर्तृत्व-स्वीकारः शाश्वत-वादात्म-वादसम्बन्धि-मिथ्या-ज्ञानात् जायते; स च अभिनिवेशो दुःख-दृष्ट्या प्रहातव्यः।

**[ दृष्टि-त्रयाद् विपर्यास-चतुष्कं ];**

अन्तग्राह-दृष्टेः नित्य (=ध्रुव)-दृष्टि-भाग एको विपर्यासः (= मिथ्या-ज्ञानं), दृष्टि-परामर्शे भागद्वयं द्वौ विपर्यासौ, सत्काय-दृष्टेः आत्मदृष्टि-भाग एकः; एवं दृष्टित्रये चत्वारो विपर्यासा भवन्ति।

**[ विपरीततः ]।**

**अतीरण-समारोपात् ];**

अन्ये क्लेशा न विपर्यासाः । विपर्यासे त्रीणि लक्षणानि भवन्ति—विपरीतता, अतीरणता, समारोपता च । विपरीतता यथा अनात्मनि आत्मज्ञानम् । अतीरणं = अनध्यवसायः, यथा स्थाणुर्वा पुरुषो वा । समारोपः तद्गुणाभाववति तद्गुणारोपः ।

**चित्तं संज्ञा च तद्वशात् ॥ ९ ॥**

दृष्टिवशादेव, चित्तं, संज्ञा च विर्यासः । चित्त-संज्ञा-संयुक्ता हि दृष्टिः विर्यासे परिगृह्यते ।

"विपर्यासेन संज्ञानां चित्तं ते परिदह्यते ।
निमित्तं वर्ज्यतां तस्माच्छुभं रागोपसंहितम् ॥' (सुत्तनिपाते) ।

**मानाः सप्त;**

मानः, अधिमानः, मानातिमानः, अस्मिमानः, अभिमानः, ऊनमानः, मिथ्यामान इति सप्त । तत्र मानः = उन्नतिः, अहं विशिष्ट इत्यादि । २. अधिमानः "अहं उत्कृष्टः" उत्कृष्टानां सम्बन्धे । ३. उत्तमानां सम्बन्धे । ४. उपादान स्कन्धानां सम्बन्धेऽहंकारममकार-भावोऽस्मिमानः । ५. विशेष भावगर्भितं चित्तम् । ६. ऊनमानः "अहं अकिंचनः" ७. मिथ्यामानः, अगुणवतो गुणाभिमानः ।

**[ नवविधास्त्रयः ] ;**

मानः, अधिमानः, ऊनमानश्चेति त्रयो मानाः नव विधा भवंति । तत्र प्रथमः, अहं-सम्बन्धेन, त्रयः; द्वितीयः; अहं श्रेष्ठ इति सम्बन्धेन, त्रयः; तृतीयः, मानः, अधिमानः, ऊनमान इति क्रमेण । प्रथमे त्रिके क्रमः = अधिमानः, मानः, ऊनमानः । द्वितीये ऊनमानः, मानः, अधिमानश्चेति ।

**दृग्भावनात्त्यः ।**

सप्ताऽपि माना दृष्ट्या भावनया च विलयं गच्छन्ति ।

**बधादि पर्यवस्थानं हेयं भावनया तथा ॥१०॥**

**विभवेच्छा;**

बधादीनां (आदिशब्देन अदत्तादान-काममिथ्याचार-मृषावादानां ग्रहणं) पर्यवस्थानं (५ : ४७) = बधादि-प्रयोजकः क्लेशः, भावनाहेयः ।

विभवतृष्णा अपि भावनया हेया। त्रैधातुकी अनित्यता विभवस्तत्र तृष्णा।

न चाऽऽर्यस्य संभवन्ति वधादयः।
नोस्मिताऽदृष्टि-पुष्टत्वात्, कौकृत्यमपि नाऽशुभम् ॥११॥

मानादय आर्य-पुद्गलस्य न संभवन्ति, अस्मिमानोऽपि न, यत इमे सत्काय-दृष्टि-पुष्ट्या भवन्ति। आनुशयिक-दृष्ट्य-भावेनानुपपत्तिरेषाम्। अकुशल-पश्चात्तापो (=कौकृत्यं) ऽपि आर्याणां न सम्भवति।

सर्वत्रगा दुःख-हेतु-दृग्हेया दृष्टयस्तथा।
द्विमतिः सह ताभिश्च याविद्यावेणिकी च या ॥१२॥

पंच दृष्टयो दुःखदर्शन-प्रहेयाः, मिथ्यादृष्टि-दृष्टिपरामर्शौ हेतु (=समुदय)-दर्शनेन प्रहेयौ; विचिकित्साद्वयं (=द्विमतिः) अविद्याद्वयं च दुःख-हेतु(=समुदय)-दर्शनाभ्यां प्रहेयाः। इम एकादश अनुशयाः सर्वत्रगाः सन्ति, स्वधातौ सर्वत्र विद्यमानत्वात्।

[तेषां नवोऽर्ध्व-विषया] दृष्टि-द्वयविवर्जिताः।

तेषां एकादशानां अनुशयानां मध्ये दृष्टिद्वयं (सत्काया-न्तग्राह दृष्टी) त्यक्ता अवशिष्टा नव रूपाऽऽरूप्ययोरपि विद्यमानाः।

प्राप्तिवर्ज्याः सहभुवो येऽप्येभिस्तेऽपि सर्वगाः ॥१३॥

प्राप्तिं त्यक्त्वा सर्वत्रगानुशय-समकालिकाः (सहभुवः) धर्मा अपि सर्वत्रगाः।

मिथ्या-दृग्विमती ताभ्यां युक्ताऽविद्याऽथ केवला।
निरोधमार्गदृग्घेयाः, षडनास्रवगोचराः ॥१४॥

मिथ्या-दृष्टिः विचिकित्सा, तदुभय-युक्ताऽयुका च अविद्या निरोधदर्शनेन हेयाः। त एव त्रयोऽनुशया मार्गदर्शनेनाऽपि हेयाः। षड् अन्येऽनुशया अनास्रवान् धर्मान् विषयीकुर्वन्ति।

[स्वभूम्युपरमो, मार्गः षड्भूमि-नवभूमिकः]।
तद्गोचराणां विषयो, मार्गो ह्यन्योन्य-हेतुकः ॥१५॥

स्वभूमेर्निरोधो हि अनुशयानां विषयः ( निरोधो हि येषां भूमिः ) । षड्-भूमि-सहितो मार्गः, नवभूमि-सहितो वा मार्गोऽस्ति तेषां ( = अनुशयानां ) गोचराणां विषयः, यतो मार्गा अन्योऽन्यावलम्बिनो भवन्ति । मिथ्यादृष्टि-विचिकित्सा-ऽविद्येति त्रयो निरोधदर्शन-हेया अनुशया निरोध-गोचराश्च, न सर्वनिरोधगोचरा भवन्ति ।

**न रागस्तस्य वर्ज्यत्वात् न द्वेषोऽनुपकारतः ।**
**[न मानो न परामर्शौ शान्त-शुद्धोत्तमं हि तत्] ॥१६॥**

रागो हि प्रहेयः, अतः स न अनास्रवस्योत्पादकः । द्वेषः ( = प्रतिघः ) अपि न, अनपकारात् ( अनास्रवाश्च नानुपकारं विदधति ) । मानः, दृष्टिपरामर्शः शीलव्रतपरामर्शश्चापि न तस्योत्पादकाः, यतोऽनास्रवधर्मः शान्तः शुद्ध उत्तमश्चास्ति :

**[ सर्वत्रगा अनुशयाः स्वभूमावनुशेरते ।**
**सर्वस्यामालम्बनतः, स्वनिकाये त्वसर्वगाः ] ॥१७॥**

सर्वत्रगा अनुशयाः सर्वस्यां स्व( पंच )-भूमिकायां आलम्बन-सम्बन्धेन सर्वत्र गोचरं गृह्णन्ति । असर्वगा अनुशयास्तु केवलं स्वनिकाये ।

**नानास्रवोर्ध्वविषयाः, अस्वीकाराद् विपक्षतः ।**

अनास्रवः = निर्वाणं, मार्गो ( ५ : १४ ) वा विषयो येषां ते ऽनास्रवविषयाः । ऊर्ध्वभूमिः ( ५ : १३ ) विषयो येषां त ऊर्ध्व-विषयाः । अनास्रवो-र्ध्वविषया अनुशया न स्वकीय-भूमिकायां अनुशेरते; यतस्तत्र तद्वस्तु नात्मीयत्वेन स्वीक्रियते; तेच अनुशयन-विपक्ष भूताः । अनुशयनं = प्रतिष्ठा-लाभः ।

**[ येन यः सम्प्रयुक्तोऽत्र स एव संप्रयोगतः ] ॥**

योऽनुशयो येन धर्मेण संयुक्त, तेन सहैव संयोगेन हेतुना सोऽनुशेते । एव कारेण अनुशयप्रहाण-कालावधिर्द्योत्यते ।

**ऊर्ध्वा अव्याकृताः सर्वे, कामे सत्कायदृक् सह ।**
**[अन्तग्राह-दृशाविद्याऽपि] च, शेषस्त्विहाऽशुभाः ॥१६॥**

सर्वे रूपाऽऽरूप्यधातुगता अनुशया अव्याकृताः। सर्वे हि क्लिष्टा धर्मा विपाकोत्पादे दुःखविपाकमेवोत्पादयन्ति । रूपाऽऽरूप्ययोश्च दुःखाभावः, यतः परव्यावाध-हेतवो व्यापादादयस्तत्राविद्यमानाः ।

कामधातौ सत्काय-दृष्टिः, अन्तग्राह-दृष्टिः अविद्या च भवन्त्य व्याकृताः ।

कामधातौ विद्यमाना अन्येऽनुशया अशुभाः ( = अकुशलाः ) ।

**कामेऽकुशलमूलानि राग-प्रतिघ-मूढयः ।**

सर्वे रागाः, प्रतिघाः ( = द्वेषाः), मूढयः ( = मोहाः) च काम धातुगताः ( सत्काया-न्तग्राह-दृष्टी वर्जयित्वा ) यथाक्रमं लोभ-द्वेष मोहा अकुशलमूलानि ।

सत्कायदृष्टिः, अन्तग्राह-दृष्टिश्च नाकुशलमूले, यद्धि केवलं अकुशलं अकुशल मूलं च तदेवाकुशल-मूलं भवितुमर्हति । अन्येऽनुशया नाकुशल-मूलानि ।

**त्रीण्यव्याकृतमूलानि तृष्णाऽविद्या मतिश्च सा ॥२०॥**
**[ द्वैधोर्ध्ववृत्तितो नान्ये ];**

तृष्णा, अविद्या, मतिः ( = प्रज्ञा ) स्वयं अव्याकृत-भूता, त्रीणि अव्याकृत-मूलानि । विचिकित्सा द्विकोटिकत्वात् न मूलम् । ऊर्ध्वा-धोवृत्तिः = द्वैधा वृत्तिस्तत्र, मानश्च चित्तस्योर्ध्ववृत्तिता, मूलं हि लोकेऽधोवृत्ति, तेन मानादयो न मूलम्, वृत्तिवैषम्यात् ।

**[ चत्वारीत्यपरान्तकाः ।**
**तृष्णादृङ्मान मोहास्तेऽविद्यातो ध्यायिनस्त्रयः ॥२१॥**

अपरान्तका आचार्याः चत्वारि अव्याकृतमूलानि मन्यन्ते । तद्यथा—अव्याकृताः तृष्णा, दृष्टिः, मानः, मोहश्च । अविद्या तृष्णो-त्तरध्यायी, दृष्ट्युत्तरध्यायी मानोत्तरध्यायी चेति त्रयो ध्यायिनो भवन्ति । आस्वाद-सम्प्रयुक्तं ध्यानं तृष्णोत्तरध्यानम् । अनादिव-दृष्ट्युत्पादकं दृष्ट्युत्तरध्यानम् । मम सदृशं उत्कृष्टं ध्यानं न कस्या-पीति चित्तपूर्वकं ध्यानं मानोत्तरध्यानम् ।

अव्याकृतं = उत्तररहितं = अकथितं = अनिश्चितम् ।

**[ एकांशेन विभागेन पृच्छातः स्थापनीयतः ।**
**व्याकृतं] मरणोत्पत्ति-विशिष्टा-त्मान्यतादिवत् ॥२२॥**

चतुर्विधं प्रश्न-व्याकरण—१ एकांशेन व्याकरणं; २. विभज्य व्याकरणं; ३. परिपृच्छा-व्याकरणं; ४. स्थापनीयं (= अनुत्तरितं) इति ।

**राग-प्रतिघ-मानैस्तैरतीत-प्रत्युपस्थितैः ।**
**यत्रोत्पन्नाऽप्रहीणाः ते [तत्र वस्तुनि संयुतः] ॥२३॥**

संयुतः = बद्धः । क्लेशाः द्विविधाः—स्वलक्षण-क्लेशाः राग-प्रतिघ-मानाः, सामान्य-क्लेशाः— दृष्टि-विचिकित्सा-ऽविद्याः । सामान्य-क्लेशाः किंचिद्वस्तु-सम्बन्धेनोत्पद्यन्ते । यथाऽतीताऽनागत-प्रत्युत्पन्नवस्तु संबधेन, दृष्ट्यादि-प्रहेयवस्तु-सम्बन्धेन वा । अप्रहीणास्ते ऽतीते प्रत्युत्पन्ने वालभ्यन्ते यस्मि वस्तुनि इमे अप्रहीणाः समुत्पन्नाः, तस्मिन् वस्तुनि तैः अतीतवर्तमानैः क्लेशैः ( रागादिभिः ) स पुद्गलो बद्धो भवति ।

**सर्वत्रानागतैरेभिर्मानसैः ;**

सर्वस्मिन् वस्तुनि ( अतीतानागतप्रत्युत्पन्ने दृष्ट्यादि-प्रहेये च ) पुद्गलोऽनागतैः ( = भविष्यद्भिः ) चैत्तैः एभिः क्लेशैः संयुतः ।

**स्वाध्विके परैः ।**

स्वसमकालिके वस्तुनि चैत्तभिन्नैस्तैरेवानागतैः क्लेशैः संयुतो भवति । परे = रागप्रतिघभिन्नाः = अचेत्ताः = पंच विज्ञानानि । पंच विज्ञानानि हि समकालिकमेव विजानन्ति ।

---

१. 'म्रियंते सर्वे सत्त्वा' इति प्रश्ने, 'म्रियन्त' इति एकांशेन व्याकर्तुं शक्यते ।

२. "उत्पत्स्यन्ते सर्वे सत्त्वा" इति प्रश्ने, विभज्य व्याकर्त्तव्यं भवति, क्लेश समन्विता उत्पत्स्यन्ते न क्लेशवर्जिताः" ।

३. "मनुष्यो विशिष्टो हीनो वे" ति प्रश्ने, "कस्य सम्बन्धेने" ति प्रष्टव्यं भविष्यति । 'देवसम्बन्धेने'त्युक्ते 'हीन' इति व्याकर्त्तव्यः, 'अपायगति सत्त्वसम्बन्धेने' त्यभिहिते 'विशिष्ट' इति व्याकर्त्तव्यम् ।

४. 'स्कन्धाः सत्त्वा एव ततो भिन्ना वे' ति प्रश्नः सत्त्वस्य विषये, सत्त्वश्च नास्त्येव किमपि वस्तु । तेनायं प्रश्नः 'वन्ध्यापुत्रः शुक्लः कृष्णो वे' ति वत् स्थापनीय एव ।

[ अजैः सर्वत्र ];

अतीतानागतप्रत्युत्पन्नेति सर्वकालिके वस्तुनि स अनुत्पन्नैः क्लेशैः संयुतो भवति ।

शेषैस्तु सर्वैः सर्वत्र संयुतः ॥२४॥

शेषैः दृष्टि- विचिकित्सा-ऽविद्यात्मकैः सर्वैः सामान्यक्लेशैः उपादानस्कन्धालम्बनैः सर्वत्र वस्तुनि संयुतः स ।

(त्र्यध्वकास्ते तदु) [क्तेः] द्वयात् [सद्विषयात्] फलात् ।

ते धर्माः त्रिकाले स्थायिनः, तथाहि १. भगवत उक्तिः—"रूपं अनित्यं अतीतं अनागतम् , कः पुनर्वादः प्रत्युत्पन्नस्य ? एवं दर्शी श्रुतवान् आर्यश्रावकोऽतीते रूपे ऽनापेक्षो भवति । अनागतं रूपं नाभिनन्दति । प्रत्युत्पन्नस्य रूपस्य निर्विदे विरागाय निरोधाय प्रतिपन्नो भवति । अतीतं चेद् भिक्षवः ! रूपं नाभविष्यन्न श्रुतवानार्य श्रावकः (संयुक्तागम ३ : १४). २. विज्ञानं द्विहेतुनोत्पद्यते, चक्षुरिन्द्रियं रूपं च, श्रोत्रेन्द्रियं शब्दश्च,......मन इन्द्रियं धर्मश्च ( ३ : ३२ ) । यदि अतीतानागता न भवेयुः, मनोविज्ञानं (यस्यते विषयाः) न द्वाभ्यामुत्पद्येत । ३. अतीतानागतवस्त्वभावे, विज्ञानं निरालम्बनं ( = निर्विषयं ) स्यात् । सालम्बनं ( = सद्विषयं) हि विज्ञानम् । ४ अतीताभावे न फलोत्पादः । फलोत्पत्ति-काले हि विपाकहेतुरतीतो भवति ।

एवं धर्माणां त्रिकालाऽस्तित्त्वम् ।

[ तदस्तिवादात् सर्वास्तिवादी मतः ];

तेषां ( धर्माणां ) त्रैकाल्येऽस्तितत्वं वदति, तेन हि सर्वास्तिवादी त्युच्यते । येहि प्रत्युत्पन्नस्य अतीतैकांशस्य (अदत्तफलं कर्म) चास्तित्वं चास्तित्वं; अनागतस्य अती कांशस्य ( दत्तफलं कर्म ) च नास्तित्वं मन्यन्ते, ते विभज्यवादिनः; न सर्वास्तिवादिनः ।

[ चतुर्विधाः ॥२५॥

एते भाव-लक्षणा-वस्था-न्यथा-न्यथिकाह्वयाः ] ।

तृतीयः शोभनोऽध्वानः कारित्रेण व्यवस्थिताः ॥२६॥

सर्वास्तिवादिनश्चतुर्विधाः । —

१. भदन्तधर्मत्राता भावान्यथात्वं ( अतीता-नागत-प्रत्युपन्ना इति त्रयोऽध्वानो भाववैसादृश्येन सन्ति ) मन्यते। तद्यथा—अनागत-धर्मं परित्यज्यानागतं प्रत्युत्पन्नाध्वानमागते अनागतभावो हीयते, प्रत्युत्पन्न-भावश्चादीयते; परं द्रव्यं तदेव भवति। प्रत्युत्पन्नात् अतीताध्वानंगते प्रत्युत्पन्न-भावः प्रहीयते, अतीतभावश्चादीयते, परं न द्रव्येऽन्यथात्वम्। दधिभावंगते दुग्धे रसादि-भावानां अन्यथात्वे शुक्लता यथा।

२. भदन्त-घोषको लक्षणान्यथात्वं मन्यते। अतीतोहि धर्मोऽतीतलक्षणो भवति, परं नासौ प्रत्युत्पन्नानागतलक्षण-वियुक्तः। अनागतोऽनागतलक्षणः, परं न प्रत्युत्पन्नातीतलक्षणवियुक्तः, प्रत्युत्पन्नः प्रत्युत्पन्न-लक्षणः, परं न अतीतानागतलक्षण-विप्रयुक्तः। यथा, एकस्यां रागयुक्तः पुरुषोऽन्यासु न विरक्तः।

३. भदन्त-वसुमित्रः, अवस्थाऽन्यथात्वं स्वीकरोति।—अवस्थाभेदेन काला भिद्यन्ते। तां तां अवस्थां प्राप्य अनागतं प्रत्युत्पन्नं अतीतं वाऽध्वानं समुपगच्छन्ति। धर्मेषु अवस्थात एव भेदो न द्रव्यतः। यथा गुलिका एकत्व-स्थानस्य अवस्थायां एकेत्युच्यते, दशत्व-स्थाने दश। अवस्था = कर्म।

४. भदन्त-बुद्धदेवो ऽन्यथान्यथात्वं मनुते। धर्माः कालं अतिक्रामन्तः तानि तानि नामानि गृह्णन्ति। अतीत इति प्रत्युत्पन्नानागतावपेक्ष्य संज्ञायते, अनागतश्च प्रत्युत्पन्नातीतावपेक्ष्य। आचार्याणां चतुर्णां मतानुसारं सर्वास्ति-वादे चत्वारो भेदाः। तत्र चतुर्षु वादेषु भदन्त-वसुमित्रस्य अवस्थाऽन्यथात्ववादः सुन्दरः; यत्र हि कारित्रेण (=क्रियया) व्यवस्थापनम्। अनुत्पन्नक्रियोऽनागतः, प्रत्युत्पन्नः अतीत इति।

## ( किं विघ्नं );

धर्माणां कारित्रे किं विघ्नं, यत एकदा क्रियोत्पाद एकदा च न? कारण-विशेषाभावेन क्रियानुत्पाद इति न, तेषां सर्वकालिकत्वात्।

## [ तदपि कथं ];

कथं कारित्रं स्वयं अतीतं...जायते? कारित्रान्तरादितिचेत्

अन्योन्याश्रयः, स्वरूपसत्ताऽपेक्षयेति चेत् कारित्रमपेक्ष्यैव अतीतादि भेदः । कारित्रं हि अवस्था ।

**[ नान्यदध्वा न युज्यते ] ।**

यदि कारित्रं धर्मात्पृथक् न स्यात, तर्हि अध्वा ( = कालभेदः ) न युज्यते ।

**[ तथा सन् किमजो नष्टः ];**

यदि अतीतानागतधर्मस्तेनैवात्मना स्थितः (= तथा सन् ), तर्हि 'अनुत्पन्न':, 'नष्ट' इति कथनं कथम् ?

**गम्भीरा जातु धर्मता ॥२७॥**

वस्तूनां धर्माः गम्भीरा अवबोधे ।

**प्रहीणे दुःखदृग्घेये [ संयुक्तः ] शेष-सर्वगैः ।**
**[ प्रहीणे प्रथमाकारे ] शेषैस्तद्विषयैर्मलैः ॥२८॥**

दुःखदृष्ट्या यत्प्रहातव्यं, तस्मिन् प्रहीणे, अवशिष्टैः सर्वगैः ( ५ : १२ ) क्लेशैः संयुक्तो भवति । मृदु-मृद्वादयो नव आकारा- क्लेशानां ध्यानमार्गे क्रमशः प्रहेयाः, तत्र प्रथम आकारे प्रहीणे, अन्ये ष्वष्टसु चाप्रहीणे, शेषैः तद्विषयैः (= प्रहीणप्रकारविषयैः ) क्लेशैः संयुक्तो भवति ।

**दुःख-हेतु-दृगभ्यास-प्रहेयाः कामधातुजाः ।**
**स्वक-त्रयैक-रूपाप्तामल-विज्ञान-गोचराः ॥२९॥**

कामधातुगता स्वकीय-धातुगत-त्रिभिर्विज्ञानै गोचराः दुःख दृष्टि-हेतुदृष्टि-भावना ( = अभ्यास ) भिः प्रहेयाः सन्ति । रूपधातुगत एकोऽमल-विज्ञान-गोचरो भावनाहेयः ।

**स्वकाधरत्रयोर्ध्वैकामलानां रूपधातुजाः ।**

रूपधातु-गताः त्रयः क्लेशाः रूपधातुगत ( = स्वक )-त्रयाणां विज्ञानानां विषयाः; अधर ( = काम )-धातुगतानां त्रयाणां विज्ञा- नानां च विषयाः दुःख-हेतु दृष्टि-भावनाभिः प्रहातव्याः ।

ऊर्ध्वं ( = आरूप्य)-धातुगतस्य एकस्य विज्ञानस्य प्रहाणं भाव- नया कर्त्तव्यम् । अनास्रवविज्ञानस्यापि तथैव ।

**[आरूप्यजाः] त्रिधात्वास्त्रयानास्रवगोचराः ॥३०॥**

आरूप्यधातुगताः क्लेशाः त्रैधातुकानां त्रिविध-विज्ञानानां, अनास्रवविज्ञानस्य च गोचराः ।

**निरोध-मार्ग-दृग्हेयाः सर्वे स्वाधिक-गोचराः ।**

( क ) कामधातुगता धर्मा निरोध-दृष्टि-प्रहेयाः—पंच विज्ञान-गोचराः, मार्ग-दृष्टि-प्रहेयं विज्ञानं चेति सर्वे षट् ।

( ख ) कामधातुगता धर्मा मार्गदृष्टिहेयाः—पंच विज्ञानगोचराः, मार्गदृष्टि-प्रहेयं विज्ञानं चेति सर्वे षट् ।

( ग ) रूपा-ऽऽरूप्यगता धर्मा निरोध-मार्ग-दृष्टि-हेयाः ।—ते यथासंख्यं नवानां एकादशानां विज्ञानानां च गोचराः ।

**अनास्रवाः त्रिधात्वन्त्यत्रयानास्रवगोचराः ॥३१॥**

अनास्रवा धर्माः सन्ति, काम-रूपा-ऽऽरूप्यगतानां त्रयाणां विज्ञानां गोचराः ( निरोध-मार्ग-भावना-प्रहेयाः ), अनास्रव-विज्ञान-गोचराश्च ।

श्लोकद्वय ( ३०, ३१ ) संक्षेपः—"त्रयाणां धातूनां धर्माः दुःख-दृष्टि-हेतु-भावना-हेयाः सन्ति धातुक्रमेण पंचा-ऽष्ट-द्विविज्ञान-गोचराः ।" "निरोध-मार्ग प्रहेयाः स्वप्रकार-चित्त-संयोजकाः । अनास्रवा धर्मा द्विविज्ञान-गोचराः" ।

**द्विधा सानुशयं क्लिष्टं, अक्लिष्टं अनुशायकैः ।**

क्लिष्टं चित्तं द्विधा सानुशयं भवति-( १ ) साधिष्ठाना ऽनुशय निर्मितं, ( २ ) अनधिष्ठानानुशयनिर्मितम् । अक्लिष्टं चित्तं सानुशयं भवति, साधिष्ठानैः ( = अनुशायकैः ) ।

**( मोहाद् विमतिर्मिथ्या-सत्काया-ऽन्तग्राह-दृष्टयः ॥३२॥**
**शील-दृष्टि-परामर्शौ राग-मानौ स्वदृष्टितः ।**
**प्रतिघश्चाऽन्यसम्बन्धात् तदुत्पाद-क्रमो मतः ) ॥३३॥**

मोह ( = अविद्या )-संयुतः संमुह्यते सत्यसम्बन्धे, नाऽसौ दुःख-सत्य प्रत्येति । मोहाद् जायते विचिकित्सा—दुःखं सत्यं अदुःखं सत्यमित्यत्र सदिहान-भावः । सन्देहात् मिथ्या-दृष्टिः—नास्तीदं दुःख-

मित्यादि। मिथ्यादृष्टेः सत्काय-दृष्टिः, स्कन्धेष्वात्मबुद्धिः। ततोऽन्त-ग्राह-दृष्टिः; आत्मत्त्वे स्वीकृते तत्र नित्यत्वध्रुवत्वादि-ग्रहणं...। ततः शीलव्रत-परामर्शः, शील-व्रतादिभिः शुद्धि-स्वीकारः। ततो दृष्टि-परामर्शः। ततो रागः स्वदृष्टौ, मानश्च। ततः प्रतिघः (= द्वेषः) स्वभिन्न-दृष्टौ द्वेष-भावात्। अयमस्ति एषामुत्पादक्रमः।

**[ अप्रहीणानुशयतः पर्यवस्थित-गोचरात्।**
**अयोनिशोमनस्कारात्, क्लेशः सकल-कारणः] ॥३४॥**

कुतः क्लेशः सकल-कारणो भवति ?—

(अयोनिशो मनस्कारः = भ्रान्त-निर्णयः)। तद्यथा कामराग उत्पद्यते (१) यदा रागानुशयोऽप्रहीण', अनुच्छिन्नस्व-प्राप्तिः,—अपरिज्ञातः, अनुत्पन्न-प्रतिपक्षः; (२) यदा कामराग-पर्यवस्थानीया धर्मा रूपादयः, विषय-रूपतापन्नाः; (३) यदा चायोनिशोमनस्कारः। अनुशयाः हेतुभूताः; धर्माः = विषयाः (= आलम्बनाः); सूत्रक्रमेण अष्टनवत्यनुशयाः, पर्यवस्थान द्वयेन सह, भवन्ति—

त्रय आस्रवाः—कामास्रवः, भवास्रवः, अविद्यास्रवः।

चत्वार ओघाः—कामौघः, भवौघः, दृष्ट्योघः, अविद्यौघः।

चत्वारो योगाः—काम-भव-दृष्ट्यविद्या-योगाः।

चत्वारि उपादानानि—काम-दृष्टि-शीलव्रता-ऽऽत्मवादोपादानानि।

**[ कामे सपर्यवस्थानाः क्लेशाः कामास्रवाह्वयाः।**
**विना मोहेनानुशया रूपाऽऽरूप्ये भवास्रवाः] ॥३५॥**

कामधातौ अविद्यारहिताः पर्यवस्थान-सहिताश्च क्लेशाः (= अनुशयाः) कामास्रवा उच्यन्ते। रूपाऽऽरूप्ययो अनुशया एव भवास्रवाः।

**( तेऽव्याकृता-ऽन्तरोन्मुखा-ध्यान भूजा हि सहोक्ताः )।**

ते रूपाऽऽरूप्यधात्वोरनुशयाः सहैव भवास्रवा उक्ताः, यतस्ते उभय-विधा अप्यऽव्याकृताः, अन्तर्मुखीनाः (न तु बाह्य-विषयप्रधानाः) ध्यानभूमिगताः सन्ति। अव्याकृतत्वादि-धर्मसाम्यादेव तेषां रूपाऽऽरूप्यगतानुशयानां सहवचनं भवास्रवकथने।

[ मूल-भावेन ] ( साऽविद्या तेनेयं ) पृथगास्रवः ॥३६॥

अविद्या हि मूलं, तेन इयं एकः पृथग् आस्रवः प्रतिगृहीतः।

ओघा योगास्तथा;

ओघा योगा अपि तस्मादेव पृथग् अविद्यौघा अविद्यायोगाश्च उच्यन्ते।

( दृष्टिस्तु नौ कारित्र-हेतुतः )।

दृष्टिस्तु पृथक् ओघ-योगावुच्यते, स्व-क्रियातः। कामास्रवो-दृष्टौ कामौघः, कामयोगश्च भवति; भवास्रवोऽपि दृष्टौ भवौघो भवयोगश्च—विनेयजनवशाद् दृष्टियोगः पृथग् उक्तः।

नास्रवेष्वसहायानां आसनानुकूलता ॥३७॥

आस्रवेषु एतेषां पृथग् ग्रहणं न कृतं, यत इमेऽसहाया आसनस्य ( = तथा स्थापनस्य ) अनुकूलतां न भजन्ते।

"आसयन्तीत्यास्रवाणां निर्वचनम्"। असहाया दृष्टिः आसनोपयुक्ता न भवति, क्रियातत्परत्वात् ( = कारित्रात् )।

( कामौघः = ५ रागाः, ५ प्रतिघाः, ५ मानाः, ४ विचिकित्साः, १० पर्यवस्थानानि, सर्वाणि २९ वस्तूनि।

( ख भवौघः = १० रागाः, १० मानाः, ८ विचिकित्साः = २८ वस्तूनि।

( ग ) दृष्ट्योघः त्रयाणां धातूनां द्वादश दृष्टयः = ३६ वस्तूनि।

( घ ) अविद्यौघः = त्रयाणां धातूनां ५ अविद्याः = १५ वस्तूनि।

योगोऽपि तथैव

यथोक्ता एव साविद्या द्विधा दृष्टि-विवेचनात्।

[ उपादानानि ];

उपादानान्यपि द्विविध-दृष्टि-विभागेन प्रथम द्वयसहिताविद्या ग्रहणेन तथैव भवन्ति।

( क ) कामोपादानं = कामयोगाः कामधातु-गताविद्यासहिताः = ५ रागाः, ५ प्रतिघाः, ५ मानाः, ५ अविद्याः, ४ विचिकित्साः, १० पर्यवस्थानानि = ३४ वस्तूनि।

( ख ) आत्मवादोपादानं = भवयोगो रूपाऽऽरूप्यगताविद्यास-हितः = १० रागाः, १० मानाः, १० अविद्याः, ८ विचिकित्साः = ३८ वस्तूनि।

( ग ) दृष्ट्युपादानं = दृष्टियोगः शीलव्रतपरामर्श-विरहितः = ३० वस्तूनि।

( घ ) शीलव्रतोपादानं = ६ स्थिर-वस्तूनि।

**अविद्या तु ग्राहिका नेति मिश्रिता ॥३८॥**

असंप्रख्यातस्वभावा ह्यविद्या, न कारित्र-समन्विता, ( अग्राहिका ) अतएव अन्यैरनुशयैर्मिश्रिता।

**अणव [ स्तेऽनुसज्जन्त ] उभयतोऽनुशेरते।**
**अनुबध्नंति [ च यत उक्ता अनुशयास्ततः ] ॥३९॥**

अनुशया इमे कथमुच्यन्त इति चेदुच्यते—इमे हि अणवोऽनुशयाः; अनुसज्जन्तश्च स्वप्राप्तिं प्रति; धर्म-विषय-सम्बन्धत उभयतो हीमेऽनुशेरते; निरन्तरं च संयुक्ता भवन्ति। "[ तत्र ] अणव इति सूक्ष्म-प्रचारत्वात् दुर्विज्ञानतया। [ अनुसज्जन्त इति प्राप्त्यनुषंगात् ]। उभयतोऽनुशेरत इत्यालम्बनतः सम्प्रयोगतश्च अनुबध्नन्तीत्यप्रयोगेण प्रतिनिवारयतोऽपि पुनः पुनः सम्मुखीभावात्।"

अणवः = सूक्ष्माः।

**आसयन्त्यास्रवन्त्ये [ते] हरन्ति श्लेषयन्ति [च]।**
**उपगृह्णन्ती [ ति ततो निरुक्ता आस्रवादयः ] ॥४०॥**

संसार आसयन्ति; आस्रवन्ति गच्छन्ति भवाग्र- ( ३ : ३,८१ ) तोऽवीचिं ( ३ : ५८ ) यावत्; हरन्ति षड्भिरिन्द्रियैः; एवमिमेऽनुशया आस्रवा उच्यन्ते। अनुशया हरन्ति, तेन ओघः ( जलौघो यथा )।

श्लेषयन्ति इमान् सत्वा इति योग संज्ञा।

उपाददते ( = उपगृह्णन्ति ) इति उपादानम्। विषयेष्वास्रवन्तीत्यास्रवाः।

**संयोजनादिभेदेन ते पुनः पंचधोदिताः।**

आस्रवौ-घ-योगो-पादानमिति चतुर्विधा अनुशयाः पंचविधा अपि— संयोजनं, ( ५ : ४१–४५ ), बन्धनं ( ५ : ४५ ) क्लेशः, उपक्लेशः ( ५ : ४६ ) पर्यवस्थानं ( ५ : ४७–४९ ) च ।

तत्र संयोजनानि नव— अनुनयः, प्रतिघः, मानः, अविद्या, दृष्टिः, परामर्शः, विचिकित्सा, ईर्ष्या, मात्सर्यं च । अनुनय संयोजनं हि त्रैधातुको रागः । तथैवान्येषां संयोजनानां विषयेऽपि । प्रतिघः, ईर्ष्या, मात्सर्यं तु केवलं कामधातावेव ।

दृष्टि-संयोजने सत्काया-न्तग्राह-मिथ्यादृष्टयः । परामर्श-संयोजने दृष्टि-शीलव्रत-परामर्शौ च ।

**द्रव्य-परामर्श-साम्याद् दृष्टी संयोजनान्तरम् ॥४१॥**

द्रव्य-संख्या-सम्बन्धेन, परामर्श स्वभाव साम्येन च दृष्टि-द्वयं एकं पृथक् संयोजनमुच्यते ।

**यत एकान्ताकुशलस्वतंत्रमुभयं [ ततः ] ।**
**ईर्ष्या-मात्सर्यमेवोक्तं [ पृथक् संयोजन-द्वयम् ] ॥४२॥**

पर्यवस्थानेषु ईर्ष्या, मात्सर्यं च एकान्ततोऽकुशले, अन्य-संयोजनतः स्वतंत्रे च, तेनैव एतद्द्वयं पृथक् संयोजनमुक्तम् । स्वातंत्र्यं, केवलमविद्यया संयुक्तत्वात् ( ५ : १४ ), नेदं लक्षणं अन्येषु पर्यवस्थानेषु । अत्र परिहारान्तरमपि—

"[ अल्पेशाख्यालपभोगत्वकारणात् सर्व-सूचनात् ।
द्विपक्ष-क्लेशनत्वाच्च मात्सर्येर्ष्ये पृथक् कृते ॥"

**पंचधाऽवरभागीयं;**

अवरभागीयं ( = कामधातु-सम्बन्धतः ) संयोजनं पंचधा— सत्काय-दृष्टिः, शीलव्रत-परामर्शः, विचिकित्सा, कामच्छन्दः, व्यापादश्चेति ।

**द्वाभ्यां कामानतिक्रमः ।**

**[ त्रिभिर्निवर्त्तनं ];**

द्वाभ्यां कामच्छन्द-व्यापादाभ्यां कामधातुतो निर्गतिः निरुध्यते। सत्काय-दृष्ट्या संयोजनद्वयेन चैतेन निर्गतस्य पुनरपि कामधातौ निवर्तनं भवति। काराध्यक्षैः तत्सहायकैरिव इमानि। सूत्रे ( संयुक्त, ३६ : १२; ४७ : ६। एकोत्तर १६ : १६ ) "कियता भदन्त, स्रोत आपन्नो भवति ? यतश्च महानामन् इदं ! दुःखं आर्यसत्यं ......... इयं दुःनिरोधगामिनी प्रतिपद् आर्यसत्यमिति यथाभूतं प्रजानाति, त्रीणि चास्य संयोजनानि प्रहीणानि भवन्ति परिज्ञातानि, तद्यथा— सत्कायदृष्टिः, शीलव्रतपरामर्शो विचिकित्सा च। स एषां त्रयाणां संयोजनानां प्रहाणात् स्रोत आपन्नो भवति, अविनिपातधर्मा संबोधि-परायणः सप्तकृद्भवपरमः सप्तकृत्वो देवांश्च मनुष्यांश्च संसृत्य संधाव्य दुःखस्यान्तं करिष्यति।"

**मूल-मुखयोः संग्रहात् त्रयम् ॥४३॥**

मूलस्य मुखस्य च संग्रहात् त्रयं संयोजनं भवति।

१. एकतः दुःखदृष्टिप्रहेये सत्काया-न्तग्राह दृष्टी।

२. द्वाभ्यां दुःख-मार्ग-दृष्टिभ्यां प्रहेयः शीलव्रत-परामर्शः।

३. चतुष्केन, चतुः सत्य ( = दुःख-समुदय-निरोध-मार्ग ) दृष्टि प्रहेयाः-विचिकित्सा-मिथ्यादृष्टि-शीलव्रतपरामर्शाः। प्रथमानित्रीणि संयोजनानि भगवता क्लेशायद्वार-कल्पानि समुक्तानि। मूलमपिक-थितं—सत्कायदृष्टि-प्रवर्तिता अन्तग्राहदृष्टिः शीलव्रतपरामर्श-प्रव-र्तितो दृष्टिपरामर्शः, विचिकित्सा-प्रवर्तिता मिथ्या-दृष्टिः :

**[गमनाप्रार्थना] मार्ग-विभ्रमो [ मार्ग-संशयः।**
**मोक्षगतिविघ्नकराः तावन्तः ] (कथितास्त्रयः) ॥४४॥**

( क ) गमनस्यानिच्छा ( तद्वत् सत्काय-दृष्टिः ), (ख) मार्गे भ्रमः तद्वत् शीलव्रतपरामर्शः, ( ग ) मार्गविषये संशय ( तद्वत् विचिकित्सा ) इति लोकवत् निर्वाण-गतावपि त्रयः सत्काय-दृष्ट्या-दयो विघ्नकराः सन्ति; अतः तावन्तस्त्रयः संख्यातो ऽप्युक्ताः।

**पंचधैवोर्ध्व-भागीयं [ रूपा-ऽऽरूप्यज-रंजने।**
**औद्धत्य-मान-मोहाश्च];**

रूपरागः ( रंजनं = रागः ), आरूप्यरागः, औद्धत्यं, मानः,

मोहश्चेति पंच-विधानि ऊर्ध्वभागीयानि संयोजनानि। ऊर्ध्वभागीयं, यतो न निम्नधातौ तदुपभजनम् ।

वित्तिवशात् त्रिबन्धनम् ॥४५॥

वेदना त्रयवशात् त्रीणि बन्धनानि । रागोऽनुशेते सुखवेदनायां, द्वेषो दुःखवेदनायां, उपेक्षावेदनायां ( २ : ८ ) मोहश्च ।

येऽप्यन्ये चैतसाः [ क्लिष्टाः संस्कारस्कन्धसाह्वयाः ।
क्लेशेभ्यस्त उपक्लेशा न ते क्लेशा इतीरिताः ] ॥४६॥

अन्ये संस्कार-स्कन्ध गताः ( १ : १५ ) क्लिष्टाः ( क्लेश-युक्ताः ) चैतसा धर्मा येऽपि ते क्लेशेभ्यो भिन्नाः उपक्लेशशब्दवाच्याः। सर्वे क्लेशा उपक्लेशाः, परं न सर्वे उपक्लेशाः क्लेशाः। क्लेशा हि अकुशलमूल उपक्लेशा न, इतीमे न क्लेशा उक्ताः ।

[आह्रीक्यं अनपत्राप्यं ईर्ष्या-मात्सर्यमुद्धतिः ।
कौकृत्य-स्त्यान-मिद्धानि पर्यवस्थानमष्टधा ॥४७॥
क्रोधो म्रक्षश्च ];

क्लेशाः पर्यवस्थान ( परियुट्ठान ) मप्युच्यन्ते । "क्लेशोपि हि पर्यवस्थानं कामरागपर्यवस्थानप्रत्ययं दुःखं प्रतिसंवेदयत इति सूत्रवचनात् ।" अष्ट विधं पर्यवस्थानं क्रोध-म्रक्ष-ग्रहणेन दशविधं वैभाषिकैर्गृह्यते ।

तत्र—

१–२. आह्रीक्यं अपत्राप्यम् ( २ : ३२ )।

३. ईर्ष्या = परसम्पदसहिष्णुता ।

४. मात्सर्य = "मा मत्तः सरतु" = आग्रहः = धर्माऽऽमिषदान-विरोधि-चित्तम् ( ४ : ११३ ) ।

५. औद्धत्यम् ( २ : २६ ) ।

६. कौकृत्यं = पश्चात्तापः ( २ : २८ ) । कुशलं अकुशलं द्विविधं कौकृत्यं, तत्र अकुशलमेव पर्यवस्थाने परिसंख्यातम् ।

७. स्त्यानं ( २ : २६ ) ( काय-चित्ताकर्मण्यता ) ।

८. मिद्धं ( २ : २७, ७ : ११ )। कुशलाऽकुशलाव्याकृतेषु अकुशलमेव पर्यवस्थाने ( २ : ३० )।

९. क्रोधः ( २ : २७ ), सत्व-वस्तुप्रतिचित्ताघातः, व्यापाद-विहिंसाभ्यां भिन्नः।

१० म्रक्षः, ( २ : २७ )।

**[ रागोत्था आह्रीक्यौ-द्धत्य-मत्सराः।**
**विवादो म्रक्षे, ऽविद्यातःस्त्यानं (तु) मिद्धमत्रपा ॥४८॥**
**कौकृत्यं विचिकित्सातः [ क्रोधेर्ष्ये प्रतिघोद्भवे ]।**

रागात् आह्रीक्यादयस्त्रय उत्पद्यन्ते। म्रक्ष-विषये नास्त्यैकमत्यं सर्वेषां, अस्माकं मते तु तृष्णातः, अन्येषां मतेऽविद्यातः। अविद्यातः स्त्यानं, मिद्धं अत्रपा च। विचिकित्सातः कौकृत्यम्। प्रतिघात् ईर्ष्या क्रोधश्च।

**[ अन्येऽपि, षट् क्लेश-मला माया शाठ्यं मदस्तथा ॥४९॥**
**प्रदाश उपनाहश्च विहिंसनं च ];**

अन्येऽपि उपक्लेशाः सन्ति षट् क्लेशमलाः—माया, शाठ्यं, मदः, प्रदाशः, उपनाहः, विहिंसेति।

१. माया = परवंचना।

२. शाठ्यं = यथावस्तु-समालपनविरोधि-चित्तकौटिल्यम्।

३. मदः ( २ : ३४ )।

४. प्रदाशः = सावद्यवस्तु-परामर्शः।

५. उपनाहः = शात्रवम्।

६. विहिंसा।

**रागजौ।**
**माया-मदौ; प्रतिघजे उपनाह-विहिंसने ॥५०॥**
**प्रदाशो दृक्परामर्शात्, शाठ्यं दृष्टिसमुत्थितम्।**

स्पष्टम्।

**[ तत्राह्रीक्या-नपत्राप्य-स्त्यान-मिद्धो-द्धति द्विधा ] ॥५१॥**
**तेभ्योऽन्ये भावनाहेयाः [ स्वातंत्रिकास्तथा मलाः ] ।**

तत्र क्लेश-सम्प्रयुक्तानि आह्रीक्यादीनि पंच पर्यवस्थानानि द्विविधानि। दृष्टि-हेयानि भावना-हेयानि च। ईर्ष्यादीनि अन्यानि पर्यवस्थानानि केवलं भावना-हेयानि, तानि हि स्वातंत्रिकानि न रागादि-परतंत्राणि। क्लेशमला ( ५ : ४६ ) अपि तथैव।

**[ कामेऽशुभा द्विधा त्रीणि, ] परेणाव्याकृतास्ततः ॥५२॥**

कामधातौ स्त्यानौ-द्धत्य-मिद्धानीति त्रय उपक्लेशा अशुभाः (=अकुशलाः) अव्याकृताश्च सन्ति। कामधातुत उपरि यत्र कुत्र विद्यमानास्तत्राव्याकृताः।

**शाठ्यं माया च कामाद्यध्यानयो ब्रह्मवंचनात् ।**

शाठ्यं माया चेति द्वौ उपक्लेशौ कामधातौ प्रथमध्याने ( रूप-धातोः ) च स्तः। ब्रह्मणोऽपि वंचनाकरणं दृश्यते। तथाहि "वितथा-त्मसंदर्शनतया महाब्रह्मा आयुष्मंतं अश्वजितं वंचयितुं प्रवृत्तः। कुत्रेमानि ब्रह्मन्, महाभूतानि अपरिशेषं निरुध्यन्त इति पृष्टोऽप्रजानन् क्षेपं अकार्षीत्--"अहमस्मि ब्रह्मा महाब्रह्मा ईश्वरः कर्त्ता निर्माता स्रष्टा [ ऽध्यक्षः ] पितृभूतो भूत-भव्यानां इति मायया वंचयितुमा-रब्धः। अथ स महाब्रह्मा अश्वजितं करे गृहीत्वा एकान्तेऽस्थाद्, एकांते स्थितश्चेदमुक्तवान्—विद्यमाने तथागते मां प्रष्टव्यं मन्यसे' इतीदं अस्य शाठ्यं दृश्यते। स्वपरिषल्लज्जया ह्यात्मीयां अकुशलतां निगूहमानः स तथा उक्तवान्।"

**स्त्यानौ-द्धत्य-मदा धातुत्रये [ऽन्ये काम-धातुजाः] ॥५३॥**

स्त्यानादयस्त्रयस्त्रिष्वपि धातुषु भवन्ति, अन्येतु केवलं काम-धातावेव। षोडशानां उपक्लेशानां ( १० पर्यवस्थान + ६ मल ) एका-दश केवलं कामधातौ एव भवन्ति, ( माया-शाठ्य-स्त्यानौ-द्धत्य-मद-वर्जिताः )।

**सं-मान-मिद्धा दृग्हेया मनो-विज्ञान-भूमिकाः ।**
**उपक्लेशाः स्वतंत्राश्च [ऽन्ये षड् विज्ञान-साश्रयाः] ॥५४॥**

दृष्टिहेया उपक्लेशाः क्लेशाश्च, [मान-मिद्ध-( भावनाहेय ) सहिता मनोविज्ञान-भूमावेव भवन्ति, यतस्त्रिषु धातुष्वपि इमे मनो विज्ञान एव भवन्ति। ईर्ष्या-मात्सर्यादयः षड् स्वतंत्रा उपक्लेशा दृग्हेया भावनाहेया अपि तथैव।

अन्ये षट्सु चक्षुरादि-विज्ञानेषु समाश्रिताः सन्ति--रागः ( भावनाहेयः ); प्रतिघः, अविद्या, क्लेशमहाभूमिकेषु ( आश्राद्धय-कौसीद्य""" २ : २६ ) परिपठिताः आह्रीक्या-ऽनपत्राप्य-स्त्यानौ-द्धत्यानि च।

१—कामधातु-गताः क्लेशाः।

**सुखाभ्यां [संयुतो रागः प्रतिघस्तद्विपर्ययात् ]।**

रागःसुख-सौमनस्येन्द्रियाभ्यां संयुक्तः। प्रतिघः( = द्वेषः ) दुःखदौर्मनस्येन्द्रियाभ्याम्।

**सर्वैरविद्या;**

सर्वक्लेश-संप्रयुक्तत्वात्, अविद्या पंचवेदनेन्द्रियैः ( सुख-सौमनस्य-दुःख-दौर्मनस्यो-पेक्षाभिः ) संयुक्ता भवति।

**मनसः सुखदुःखेन नास्ति-दृक् ॥५५॥**

कुशलकारिणि मनुष्ये मिथ्यादृष्टिः दुःखेन संयुक्ता भवति, कर्मणः फलराहित्य-दर्शनात्; अकुशलकर्म-कारिणि च सुखेन संयुक्ता।

**[ मनो दुःखेन विमतिः ];**

विमतिः = विचिकित्सा दुःखेन्द्रियेण संयुता।

**[ अन्ये सुखेन ];**

अन्ये ( = मिथ्यादृष्टि-मान-विवर्जिताः ) सर्वेऽनुशया सुखेन संयुताः, हर्षाकार-वर्त्तित्वात्।

**[ कामजाः ]।**

एतावता कामधातुगता अनुशया उक्ताः।

**[ सर्व उपेक्षया ];**

सर्वेऽनुशया उपेक्षेन्द्रियेण संयुताः सन्ति।

२ ऊर्ध्व-धातुगताः क्लेशाः ॥—

स्वैः स्वैर्यथाभूम्यूर्ध्व-भूमिकाः ॥५६॥ ]

रूपादि-भूमिषु क्लेशाः स्वकीयैः इन्द्रियैः संयुता भवन्ति भूम्यनुसारम् ( २ : १२, ८ : १२ )।

प्रथमध्यानभूमौ— यत्र चक्षुः-श्रोत्र-काय-मनो-विज्ञानानि सन्ति-तत्तद्विज्ञानोत्पन्ना अनुशयाः तद्विज्ञानेन्द्रियैः संयुता भवन्ति। तत्र हि ( १ ) सुखेन्द्रियं चक्षुः-श्रोत्र-काय-विज्ञानैः संयुतम्; ( २ ) सौमनस्येन्द्रियं मनोविज्ञानेन ( ३ ) उपेक्षेन्द्रियं चक्षुर्विज्ञानेन संप्रयुक्तम्।

द्वितीयादिध्यान-भूमौ—यत्र केवलं मनोविज्ञानमेव, तेन विज्ञानेनोत्पन्ना अनुशयाः तद्विज्ञानेन्द्रिय-संप्रयुक्ता भवन्ति; यथा द्वितीयध्याने सौमनस्यो-पेक्षे; तृतीये सुखोपेक्षे, चतुर्थे ध्यान आरूप्ये च उपेक्षा।

३. उपक्लेशाः।—

[ दौर्मनस्येन कौकृत्यं ईर्ष्या क्रोधो विहिंसनम्।
उपनाहः प्रदाशश्च]

इमे उपक्लेशा दौर्मनस्येन्द्रियेण संप्रयुक्ताः।

[ मात्सर्यं तद्विपर्ययात् ] ॥५७॥

इदं सौमनस्येन्द्रियेण संप्रयुक्तम्।

[ शाठ्य-माया-मिद्ध-म्रक्षा उभय-संयुताः ];

इमे सौमनस्य-दौर्मस्येन्द्रियाभ्यां सम्प्रयुक्ताः।

[ मदः।
सुखाभ्यां ];

तृतीयध्याने मदः सुखेन्द्रियेण संप्रयुक्तः, तदुपरि सौमनस्येन्द्रियेण, तदुपरि उपेक्षेन्द्रियेण।

[ सर्वगोपेक्षा ];

सर्व एव उपेक्षया संप्रयुक्ताः।

[ चत्वारोऽन्ये तु पंचभिः ] ॥५८॥

अन्यानि चत्वारि पर्यवस्थानानि—आह्रीक्याऽनपत्राप्य-स्त्यानौ-

द्धत्यानि-पंचभिरपीन्द्रियैः ( = सुखादिभिः ) संप्रयुक्तानि, यतः प्रथमे द्वे अकुशलमहाभूमिके, अवशिष्टे द्वे ( = स्त्यानौद्धत्ये ) क्लेशमहाभूमिके ( २ : २६ ) ।

क्लेशोपक्लेशयोः पंच नीवरणानि—१. कामच्छन्दः, २. व्यापादः, ३. स्त्यानमिद्धं, ४. औद्धत्य कौकृत्यं, ५. विचिकित्सा ।

**कामे नीवरणानि;**

कामधातावेव नीवरणानि नान्यत्र, यतोहि सूत्रे—"केवलोऽयं परिपूर्णो ऽकुशलराशि, यदुत पंच नीवरणानि" ( संयुत्त. V. 145 )

**एक विपक्षा-ऽऽहार-कृत्यतः ।**

**[ द्वे एकं; ]**

विपक्षः = प्रतिपक्षः । विपक्षाहारः = अनाहारः । सूत्रेहि स्त्यानमिद्धयोः समान आहारः समानो ऽनाहारश्च । तथाहि—क आहारःस्त्यानमिद्धस्य ? पंच धर्माः—तद्यथा तन्द्रा, अरतिः, विजृम्भिका, भक्तेऽसमता, चेतसो लीनत्वम् । किं अनाहारः ? आलोक-संज्ञा । ( संयुक्त. २७; संयुत्त, V 61 अंगुत्तर, I 3., V. 113, दीघ III, 41. 223 ),

एवं द्वयस्याऽपि स्त्यानमिद्धस्य आहारोऽनाहारः समानः । लीनता, लयन कृत्यमपि समानम् ।

औद्धत्य-कौकृत्य-विषयेऽपि आहारा-ऽनाहार-कृत्य-साम्यम् । ज्ञातिवितर्क - जनपदवितर्का - ऽमरवितर्क - पूर्व - संसर्ग - चर्यानुस्मृतयः चत्वारो धर्मा आहारः, शमथोऽनाहारः, चेतसो व्युपशमनं च क्रिया । इत्थं आहारा-नाहार-क्रिया-साम्यात् अत्रापि एक-ग्रहणम् ।

**[ स्कन्धोपघाताद् विमतितश्च पंचतु ] ॥५९॥**

कामच्छन्द-व्यापादौ शीलस्कन्धं विनाशयतः; स्त्यानमिद्धं प्रज्ञास्कन्धं; औद्धत्य-कौकृत्ये समाधिस्कन्धम् । प्रज्ञासमाध्यभावे सत्ये विचिकित्सा । इत्थं स्कन्धोपघातेन विमत्या ( = विचिकित्सया ) च पंचत्वमेव नीवरणानां सिद्ध्यति ।

**आलम्बन-परिज्ञानात्, तदालम्बन-संक्षयात् ।**

**आलम्बन-प्रहाणाच्च;**

१ आलम्बन-परिज्ञानाद्धेयाः क्लेशा-सन्ति, (२) स्वभूम्यालम्बना दुःख-हेतु-दृष्टिभ्यां प्रहेयाः; (२) शुद्धालम्बना निरोध-मार्ग-दृष्टिभ्यां प्रहेयाः ( ५ : १४ )।

२. क्लेशालम्बनं-विनाशादपि ।

३. आलम्बनस्य विषयस्य प्रहाणादपि ।

**प्रतिपक्षोदयात्त्वयः ॥६०॥**

यो मार्गो यस्य क्लेशस्य प्रतिपक्षी, तेन स क्लेशः प्रहीयते । प्रतिपक्षक्लेश-मार्ग विषयो-वक्ष्यते ( ६ : ३३ )। मृदुमध्यादीत्यत्र ।

**[ चतुर्धा प्रहाणा-ऽऽधार-दूरीभाव विदूषणाः । प्रतिपक्षः ];**

प्रहाणादयः चतुर्विधाः प्रतिपक्षाः ।

१ आनन्तर्य-मार्गः ( ६ : २८, ६५ ) प्रहाणप्रतिपक्षः ।

२. विमुक्तिमार्ग पूर्वंगो मार्ग एव आधार-प्रतिपक्षः ।

३ विमुक्तिमार्गोत्तरो मार्गो दूरीभाव-प्रतिपक्षः ।

४ धातौ दोषदर्शनमार्गः ( = अनित्यतादि ) विदूषण-प्रतिपक्षः ( ६ : ५० )।

क्रमस्तु—१. विदूषण-प्रतिपक्षः = प्रयोगमार्गः ( ६ : १७ ) ।

२ प्रहाण-प्रतिपक्षः = आनन्तर्य-मार्ग-सहगतः ।

३ आधार-प्रतिपक्षः = विशेष मार्गः ।

४ दूरीभाव-प्रतिपक्षः = विशेष-मार्गः ( ५ : ६२ ) । इमे चत्वारो मार्गाः वक्ष्यन्ते ( ६ : ६५ ) ।

**प्रहातव्यः क्लेश आलम्बनात् मतः ॥६१॥**

क्लेशो न तावत् सम्प्रयोगाद् ( चित्तसंप्रयुक्ता धर्माः वेदनादयः २ : २४ )-भिन्नः, तथापि स्वालम्बनोऽस्य पृथग्भावः, यतोऽयं न सर्वदा तेनैवालम्बनेन सम्प्रयुक्त उत्पद्यते । आलम्बनादेव क्लेशस्य प्रहाणं अस्ति विधेयम् ।

**वैलक्षण्य-विपक्षत्त्व-देश-विच्छेद-कालतः ।**
**भूत-शील-प्रदेशा-ध्व-द्वयानामिव दूरता ॥६२॥**

दूरता चतुर्धा-(१) वैलक्षण्यात्, यथा महाभूतेषु सहजेषु (२ : ६५ अपि विविधलक्षण (= स्वभाव)-तया दूरता।

(२) विपक्षत्वात्, यथा शील-दुःशीलयोः।

(३) देशविच्छेदात् यथा पूर्व-पश्चिमयोर्दिशोः।

(४) कालतः, यथाऽतीता-ऽनागतयोः।

[सकृत् क्षयः];

सर्वेषां क्लेशानां प्रतिपक्षोत्पत्त्या सकृदेव विनाशः।

[विसंयोगलाभः तेभ्यः पुनः पुनः]।

स्वप्रहाण मार्गेण क्लेशानां क्षयः सकृत्, परन्तु वियोग-प्राप्तिः क्लेशेभ्यः पुनः पुनर्भवति।

प्रतिपक्षोदय-फल-प्राप्तीन्द्रियविवृद्धिषु ॥६३॥

क्लेशेभ्यो विसंयोगलाभः षट्सु कालेषु भवति। (१) प्रतिपक्षस्योदयो यदा; (२–५) स्रोत आपत्ति-सकृदागाम्य-नागाम्य-नागाम्य-र्हत्त्व (६ : ५१)-प्राप्ति-कालेषु, (६ इन्द्रिय-विवृद्धि-काले, इन्द्रिय-श्रद्धादि संचारे (६ : ६०)।

[परिज्ञा नव];

परिज्ञा = विसंयोग-विशेषः। ज्ञान-परिज्ञा, प्रहाण-परिज्ञेति द्वे परिज्ञे। तत्र प्रथमा अनास्रवं ज्ञानम्। नवविधा प्रहाण-परिज्ञा।

कामाद्यप्रकार-द्वय-संक्षयाः।

एका;

(१) कामधातुगतयोरादिमयोः क्लेशयोः (दुःख-समुदय-दृष्टिभ्यां प्रहेययोः) प्रहाणं एका परिज्ञा।

[द्वयक्षयो द्वे ते];

(२) कामधातुगतानां निरोध-दृष्टि-प्रहेयानां क्लेशानां प्रहाणं (३) मार्ग-दृष्टि-प्रहेयानां कामधातुगतानां क्लेशानां प्रहाणं चेति द्वे।

तथोर्ध्वं तिस्र एव ताः ॥६४॥

ऊर्ध्वं कामधातुतोऽपि तथैव तिस्रो भवन्ति परिज्ञाः, तद्यथा,

(४) दुःख-हेतु-दृष्टिभ्यां प्रहेयानां क्लेशानां प्रहाणं; (५) निरोध-दृष्टि-प्रहेयानां प्रहाणं; (६) मार्गदृष्टि-प्रहेयानां प्रहाणम्। षट् परिज्ञाः क्लेश-प्रहाणाय तिसृषु भूमिषु (काम-रूप्या-ऽऽरूप्येषु), ताश्च सत्य-दर्शन-हेयाः ।

**[ तिस्रोऽन्याऽधोभागीय-रूप-सर्वास्रव क्षयः ।**

**परिज्ञाः ];**

(७) अवर-भागीयानां (५ : ४२) = कामधातुगतानां आस्रवाणां प्रहाणं एका परिज्ञा ।

(८) रूपधात्वास्रवाणां प्रहाणं, रूप-राग-क्षय-परिज्ञा ऽभिधेया द्वितीया परिज्ञा ।

(९) सर्वास्रव-प्रहाणं, सर्व-संयोजन-पर्यादान-परिज्ञा (५ : ४१) तृतीया परिज्ञा ।

इमास्तिस्रः परिज्ञा भावनाहेय-क्लेशानां प्रहाणम् ।

**[ षट् क्षान्ति-फलं ];**

सत्यदृष्टि-प्रहेयक्लेशानां प्रहाण-भूताः षट् प्रथमाः परिज्ञा क्षान्ति-पारमितायाः फलम् (६ : २५)।

**[ ज्ञानस्या ] ( ऽन्यस्तथा ) फलम् ॥६५॥**

अवरभागीय-प्रहाण-परिज्ञादयस्तिस्रोऽन्या परिज्ञा भावना-मार्गेण समादेयाः, ज्ञानस्य ( = प्रज्ञायाः ) फलभूताः ।

**अनागम्य-फलं सर्वा ध्यानानां अष्ट पंचकाः ।**

सर्वा एव परिज्ञा अनागम्य-फलं; पंच अष्टौवा परिज्ञा ध्यानानां फलम् ।

वैभाषिकमते, मौलध्यान-फलं (मौलध्यानतो भिन्नाः सामन्तक-ध्यानानां प्रयोग-भूता (८ : ६, २२) रूपाऽऽरूप्य-धातुगत-क्लेशानां प्रहाण-स्वरूपाः पंच परिज्ञाः (४, ५, ६. ८, ९,)। कामधातु-गत-क्लेशप्रहाणं (१, २, ३, ७ परिज्ञाः) अनागाम्य-फलम् (प्रथमध्यानस्य प्रयोगभूतं ध्यानम्)।

**[ फलं सामन्तकस्यैका ];**

**रूपरागक्षय-परिज्ञा ( ८ परिज्ञा )** आकाशानन्त्यायतन ध्यान सामन्तकस्य ( **प्रयोग**ध्यानं, राज्ञः सामन्त इव तद्भवति, ८ : २२ ) फलभूता। ( प्रथमारूप्यधातुभूमिकायां प्रवेशतः प्राक् रूपधातुक-क्लेशाः प्रहेया भवन्ति, तत्प्रहाणं ए. अत्र सामन्तके क्रियते )।

**[ मौलाऽऽरूप्य-त्रयस्य च ]।**

**सर्व-संयोजन-पर्यादान-परिज्ञा** ( ६ ) मौलाऽऽरूप्यत्रयध्यानानां फलम्।

**[ आर्यमार्गस्य सर्वा, द्वे लौकिकस्य ];**

सर्वा अपि नव परिज्ञा आर्यमार्ग-लभ्याः। सप्तमाष्टमे तु लौकिक-मार्गेणाऽपि लभ्ये।

**[ अन्वयस्य च।**

**धर्मज्ञानस्य तिस्रः ], षट्, तत् [ स ] पक्षस्य पंच च ॥६७॥**

अन्वयज्ञानस्य ( ७ : ३ ) भावना-मार्ग-समन्वितस्य द्वे परिज्ञे ( उपरि भूमिद्वय-गते ) फलम्। कामधातुगताः तिस्रो ( १–३ ) धर्म-ज्ञानस्य फलं; तद्ज्ञानं हि त्रैधातुक-भावनाहेयक्लेशानां प्रतिपक्षः।

षट् ( १–६ ) सन्ति धर्मज्ञान-पक्ष ( = धर्मक्षान्ति-धर्मज्ञान ) स्य फलम्। पंच अन्वयज्ञान-पक्ष ( = अन्वयक्षान्त्य-न्वयज्ञान )-फलम्।

पक्ष शब्दः कारिकायां क्षान्ति-ज्ञानयोः।

**अनास्रववियोगाप्तेः भवाग्रविकलीकृतेः।**

**हेतु-द्वय-समुद्घातात् परिज्ञा;**

त्रिलक्षणलक्षितं प्रहाणं परिज्ञेत्युच्यते। तानि च लक्षणानि ( १ ) अनास्रव-प्रहाणस्य लाभभावः; ( २ ) भवाग्रस्य प्रदेश-प्रहाणत्वं ( ३ ) हेतुद्वय-( २ : ५४, ५ : १२ ) प्रहाणत्वं च।

**धात्वतिक्रमात् ॥६८॥**

एक-धातुतः सम्पूर्णतो वैराग्यं लभत इति परिज्ञा नाम। अति-क्रमते हि तं धातुम्।

**नैकया पंचभिर्यावद् दर्शनस्थः [ समन्वितः ] ।**

सत्यदृष्टि-मार्गस्थः न परिज्ञा-समन्वितो भवति, अथवा एकया पंचभिर्वा परिज्ञाभिर्न समन्वितो भवति ।

दृष्टिमार्गे स्थित आर्यः समुदाय-धर्मक्षान्ति ( ६ : २५…… ) पर्यन्तया परिज्ञया न समन्वितो भवति । स एकया परिज्ञया (समुदयधर्मज्ञानेन, समुदयेऽन्वयज्ञानक्षान्त्या ) समन्वितः । द्वाभ्यां समुदये ऽन्वयज्ञानात् निरोधे धर्मज्ञानक्षान्तिः । त्रिभिः निरोधे धर्मज्ञानात् निरोधेऽन्वयज्ञानक्षान्तिः । चतुर्भिः निरोधेऽन्वयज्ञानात् मार्गे धर्मज्ञानक्षान्तिः । पंचभिः मार्गेधर्मज्ञानात् मार्गेऽन्वयज्ञानक्षान्तिः ।

**( भावनायां स्थितः तद्वत् षड्भिरेकद्वयेन वा ) ॥६९॥**

आर्यो भावनामार्गेस्थितः मार्गेऽन्वयज्ञानात् कामधातु-वैराग्य-लाभ-पर्यन्तं षड्भिः परिज्ञाभिर्युक्तो भवति । वैराग्यलाभानन्तरं यावद् अभिसमय-प्राप्ति दृष्टि-मार्गः = **अभिसमयः** ६ : २५ ) **अवरभागीय प्रहाणपरिज्ञया** एकया समन्वितो भवति । अर्हत्वप्राप्त्य-नन्तरं तु **सर्वसंयोजन**-पर्यादान-परिज्ञया समन्वितः ।

पर्यवस्थान ५ : ४७ )-वशात् अर्हत्पदात् रूपधातौ च्युतः, कामधातु-विरक्तार्यवद् भवति, अवरभागीय-प्रहाण-परिज्ञया एकया समन्वितः । क्लेशवशात कामधातौ पतितः, भावनामार्गस्थितार्यवत् षड्भिः समन्वितः । क्लेशवशात आरूप्यधातौ पतितः, रूपधातुवि-रक्तार्यवत् द्वाभ्यां अवरभागीय-प्रहाण-रूप-राग-क्षय-परिज्ञाभ्यां समन्वितो भवति ।

**[तासां[ संकलनं ]धातु-वैराग्य-फल-लाभतः ] ।**

धातुतो वैराग्यात फललाभाच्च परिज्ञानां प्रसंख्यानम् । अनागा-मिनः, अर्हतश्च एकैव परिज्ञा संकलिता ।

एकधातु-वैराग्ये हि फलद्वय ( = अनागाम्यर्हत्व )-लाभः ।

**एकां द्वे पंच षट् कश्चिज्जहात्याप्नोति पंच न ॥७०॥**

अर्हत्वाच्च्युत कामधातु वैराग्याच्च्युतो वा आर्य एकां परिज्ञां जहाति ।

रूपधातुविरक्तो ऽनागामी कामधातु-वैराग्याच्च्युतो द्वे परिज्ञे जहाति ।

आर्यो मार्गेऽन्वय-ज्ञानावातिक्षणे कामधातु-विरक्तः, दृष्टिमार्ग-प्रविष्टः पंच परिज्ञां जहाति, यतः स तदैव अवरभागीयप्रहाण-परिज्ञां लभते ।

कामधात्वविरक्तो दृष्टिमार्गे प्रविष्टः ( आनुपूर्वकः २ : १६ ) षष्ठीं परिज्ञां लभते, यां पंचभिरन्याभिस्सह कामधातु वैराग्य-लाभ-काले हास्यति ।

मार्गद्वये स्थितोऽलब्ध-पूर्वैकपरिज्ञा-लब्ध्या एकां परिज्ञां लभते ।

केवलं आरूप्यधातु-वैराग्याच्च्युतः परिज्ञाद्वयं ( ६, ७ ) लभते । अनागामि-फलाच्च्युतः षट् परिज्ञा लभते । पंच तु न लभते ।

( इत्यनुशय-निर्देशः ) ।

( समाप्तं पंचमं कोशस्थानम् ) ।

---

# षष्ठं कोशस्थानम् ।

## आर्याः, मार्गश्च ।

**क्लेशप्रहाणमाख्यातं  सत्यदर्शनभावनात् ।**

सत्यदर्शनतो भावनातश्च क्लेशानां प्रहाणं उक्तं अस्माभिः ( ५ : ६४ ) । दृष्टि-हेया भावना-हेयाश्च क्लेशाः कथिताः ( ५ : ३-५ ) ।

**द्विविधो भावनामार्गो, दर्शनाख्यस्त्वनास्रवः ॥ १ ॥**

भावनामार्गो द्विविधः लौकिकः (= सास्रवः) लोकोत्तरः (= अनास्रवः ) च । दृष्टिमार्गो धातुत्रय-क्लेशप्रतिपक्षी । अयं नवविधं ( मृदुमृदु, .. ) अपि दृष्टिहेयं क्लेशं युगपद्ध निहन्ति, अतएव अनास्रवः ।

**[ सत्यान्युक्तानि चत्वारि ]**

तानि हि —

**[ दुःखं समुदयस्तथा ।**

**निरोधो मार्गः ]**

दुःख-सत्यं, समुदय-सत्यं, निरोध-सत्यं, मार्ग-सत्यं चेति ।

**एतेषां यथाभिसमयं क्रमः ॥ २ ॥**

सर्वप्रथमं दुःखसत्यस्यैव साक्षात्कारो भवति, ततः समुदय सत्यस्य, ततो निरोधसत्यस्य, ततो मार्गसत्यस्य, अत एतेषां परि-संख्याने प्रथमादि क्रमः । दुःखं हि प्रथमार्य-सत्यं, समुदयं द्वितीयम् ।

अभिसमयः ( अभि + सम् + इण् ) = अभिसम्बोधः अयः = ज्ञानं, सम् = सम्यक्, अभि = अभिमुखं, निर्वाणभिमुखं हि सम्यग ज्ञानं अभिसमयः

( १ ) पंच उपादान-स्कन्धाः दुःख-सत्यम् ।

( २ ) सास्रव-धर्माणां हेतुः समुदय-सत्यम् ।

( ३ ) प्रतिसंख्या निरोधः ( २ : ५५ ) निरोध-सत्यम्।

( ४ ) शैक्षा अशैक्षा धर्मा मार्ग-सत्यम्।

यद्वा—

( १ ) नामरूपं दुःखसत्यं; ( २ ) कर्म क्लेशाश्च समुदयः; ( ३ ) कर्म क्लेश-क्षयः निरोधसत्यं; ( ४ ) शमथ-विपश्यनाः मार्गसत्यम्।

विभज्यवादिनस्तु--

( १ ) अष्टौ दुःखस्वभावाः—दुःखं दुःखसत्यं च; अन्ये सास्रवा दुखं, परं न दुःखसत्यम्। ( यमक—I : 174 )

( २ ) बाह्य-संस्थिति-कारिका तृष्णा समुदयः समुदय-सत्यं च, अन्याः सर्वाः तृष्णाः सास्रवधर्म-हेतवश्च समुदयो न समुदय-सत्यम्।

( ३ ) तस्याः तृष्णाया निरोधः, निरोधो नरोधसत्यं च; सर्वान्य तृष्णानां निरोधः, सास्रवधर्माणां सर्वे ऽन्येहेतवश्च निरोधः, परं न निरोध-सत्यम्।

( ४ ) शैक्षस्य अष्टांगमार्गो मार्गः मार्ग-सत्यं च, शैक्षस्यान्ये धर्माः, सर्वेऽशैक्ष-धर्माश्च मार्गः, न परं मार्ग-सत्यम्।

एतस्मिन् मते अर्हन्तो दुःख-निरोध-सत्यद्वय-समन्विता भवंति, न तु समुदय-मार्ग-समन्विताः। "यस्मा पन एतानि सच्चानि ) बुद्धादयो अरिया पटिविज्झन्ति, तस्मा अरियसच्चानीति वुच्चंति··· अरियानीति = तथानि = अवितथानि = अविसंवादकानोति अत्थो।" ( विसुद्धिमग्ग. 495 ).

[दुःखं त्रिदुःखतावत्वाद्] यथायोगमशेषतः।
[मनापा अमनापाश्च तेभ्योऽन्ये चैव सास्रवाः] ॥ ३ ॥

सास्रवा धर्मा मनोऽनुकूला ( मन आप्नुवन्तीति मनापाः ) मनः प्रतिकूलाः मनापामनाप-भिन्नावा, निःशेषतः ( = सर्वे ) त्रिविध-दुःख-भाव-युक्तत्वात् दुःखमेव। प्रत्येकमेषां स्वानुरूप-जातिकम्।

दुःख-दुःखता, संस्कार-दुखता, परिणाम-दुःखता, इति त्रिविधो दुःखभावः। एतस्मात् त्रिविध-दुःखभावात् सर्व एव सास्रवा धर्मा अविनिर्मुक्ताः।

**[ भेदे यदि न तद्बुद्धिरन्यापोहे धियापि च ]।**
**घटाम्बुवत् संवृतिसत् [तद ]न्यत् परमार्थ-सत् ॥ ४ ॥**

"परमस्य ज्ञानस्य अर्थः परमार्थः। परमार्थश्च सत्यं च तत्परमार्थ-सत्यम्। त्रिविधं हि योगाचाराणां सत्, परमार्थ-सत्, संवृति-सत, द्रव्य-सत्। द्रव्यतः स्वलक्षणतः सद् द्रव्य-सत्।" संवृतिः = सम्बन्धः, तद्वशेन सत्यं संवृति-सत्यम्। 'पटोऽयं' इति व्यवहारः तन्तूनां परस्पर-सम्बधेन, भिन्नभिन्नाकृति-स्थानवशेन सन्निवेशिताः तन्तवः पट-पदाभिधेयाः। तत्सम्बन्धाग्रहणे न पट-व्यवहारः। एवं 'घटोऽयं' इति कथनं संवृति-सत्। 'घटोऽस्ति', 'जलमस्ति' अत्रापि तथैव। रूप-रसा-दीनां विश्लेषणे क्व 'घटः' क्व 'जलम्'? अन्योन्य सम्बन्धेनव व्यवहारः।

वस्तुविनाशे (= अपोहे) ऽपि यस्य विचारो निरन्तरं प्रवर्तते, तत्परमार्थसत्। यथा रूपे, परमाणुत्वं प्राप्तेऽपि, रूप-विचारः प्रवर्तत एव।

घटे भिन्ने घटबुद्धिर्निरुध्यते। जलबुद्धिरपि निरुध्यते, बुद्ध्या यदि जले रूपादिकं अपनोद्यते। इत्थं घटादि-विनाशेऽपि सम्बन्धतो यो व्यवहारः स संवृतिसत्, अतोऽन्यत् परमार्थ-सत्।

**वृत्तस्थः श्रुतचिन्तावान् भावनायां प्रयुज्यते ।**

शीले स्थितः (वृत्तं = शीलम्)। श्रुतमयी चिन्तामयी च स्वोत्पत्ति-कारणतो द्विविधा प्रज्ञा। यः पुरुषः शील-सम्पन्नः श्रुत-चिन्तामय-प्रज्ञा-सम्पन्नः स एव ध्याने (= भावनायां) अधिकारी।

**धियः श्रुतादि-प्रभवा नामोभयार्थ-गोचराः ॥ ५ ॥**

श्रुतादिभ्यः प्रज्ञा प्रभवति (= जायते)। तत्र श्रुतमयी प्रज्ञा नामार्थम्; चिन्तामयी उभयस्य नाम्नोऽर्थस्य च कृते; भावनामयी प्रज्ञा केवलमर्थस्य कृत इति वैभाषिकाः। सौत्रान्तिकाः (= वसुवन्धुः)— श्रुतमयी प्रज्ञा हि आप्तप्रमाणजो निश्चयः; चिन्तामयी प्रज्ञा युक्ति-निध्यान (= युक्त्या नितीरण)-जो निश्चयः; समाधिजो निश्चयः भावनामयी प्रज्ञा।

**[ व्यपकर्षद्वयवतः ];**

व्यपकर्षः = दूरीकरणम्। संसर्गात् शरीरस्य दूरीकरणं, अकुशल-वितर्कात् ( ५ : ४६, ५६ ) चित्तस्य दूरी करणं, इदं व्यपकर्ष-द्वयम्। व्यपकर्ष-द्वय-समन्वितस्यैव भावना ( = समाधिः )। संसर्ग-दूरी-भावार्थं अरण्यादिवासः, अकुशल-वितर्क-दूरीकरणार्थं आनापानस्मृतिः ( ६ : ९, ५८ )।

**[ नाऽसन्तुष्ट-महेच्छयोः ]।**

अल्पेच्छता-सन्तुष्टि-विरहितस्य न भावना।

**[ प्राप्ते पुनः तृष्णाऽतुष्टिरप्राप्तेच्छा महेच्छता ] ॥ ६ ॥**

प्राप्ते वस्तुनि पुनः तृष्णा असन्तुष्टिः। अप्राप्त-वस्तुनि इच्छा महेच्छता।

**( विरुद्धे प्रतिपक्षे ते )**

असन्तुष्टि-महेच्छतयोः विरुद्धे। सन्तुष्टिः अल्पेच्छता च तयोः प्रतिपक्षभूते।

**( त्रैधातुक-निरास्रवे )।**

धातुत्रये सन्तुष्टिः अल्पेच्छता च सम्भवतः। इमे द्वेऽपि आस्रवरहिते।

**[ अलोभः ];**

अलोभ एव द्वयोः स्वभावः। तेनेमे कुशलमूलम्।

**[ आर्यवंशाश्च ];**

आर्याणामत्रोत्पाद इत्यार्यवंशः। आर्यवंशा अपि अलोभस्वभावाः।

**तेषां तुष्ट्यात्मक-त्रयम् ॥ ७ ॥**

आर्यवंशानां मध्ये चीवर-पिंडपात-शयनासनेषु सन्तुष्टिः तुष्टिलक्षणम्। चतुर्थ आर्यवंशः प्रहाणभावनारामता ( = निरोध-मार्गारामता )।

**उक्ता वृत्तिः त्रिभिः कर्मान्त्येन ];**

परित्यक्त-स्ववृत्तिभ्यो भगवता त्रिभिः चीवरादिभिः आर्य-वंशैः वृत्तिः ( = जीविका ) उक्ताः, चतुर्थेन ( अन्त्येन ) कर्म च ।

[ तृष्णोदयं प्रति ] ।

तृष्णोत्पत्ति-प्रतिपत्तितया, चतुर्णां आर्यवंशानां स्थापना ।

**[ ममात्मग्राहवस्त्विच्छा ] तत्कालात्यन्त शान्तये ॥ ८ ॥**

प्रथमाः त्रय आर्यवंशाः वस्तूनि प्रति ममत्व-बुद्धिं तत्कालमेव विनाशयन्ति । चतुर्थ आर्यवंशो ममत्त्वबुद्धिं आत्मबुद्धिं च अत्यन्तं विनाशयति ।

**[ तत्राऽवतरन्त्यशुभयाऽऽनापान-स्मृतेन च ] ।**

अशुभभावनया आनापान-स्मृत्या च भावना-भूमिकायां अव-तरन्ति योगिनः ।

**[ राग-वितर्क-बहुलाः ];**

तत्र राग-बहुलोऽशुभभावनयाऽवतरति, वितर्क-बहुलश्च आना-पान ( = प्राणायाम )-स्मृत्या । अशुभभावना शरीरे ऽशुचिभाव-दर्शनेन, तदर्थं विनीलक-विपूयक-विखादितक-विक्षिप्तिकादयः श्म-शानस्थिताः शवा भावयितव्याः ।

**[ शृंखला सर्व-रागिषु ] ॥ ९ ॥**

चत्वारो रागिणः, वर्ण-रूप-स्पर्श-कीर्ति-रागिभेदात् । सर्व-रागि-ष्वेव अस्थिभावना ( -रूपा अशुभभावना ) बन्धन शृंखला ।

**आसमुद्रास्थि-विस्तार-संक्षेपादादि-कर्मिकः ।**

योगे नवदीक्षित आदिकर्मिक उच्यते । क्रमशः स योगी एक शरीरतः अस्थिसंज्ञां ( = सर्वं अस्थि एवास्ति सर्वस्मिन् काये) अस्थि-भावनां वर्द्धयित्वा समुद्रपर्यन्तं नयेत् , ततः पुनः संक्षिप्य आनयेत् ।

**पादास्थेराकपालार्द्धं कृतपरिजयाह्वयः ॥१०॥**

पादास्थित आरभ्य कपालमध्यं यावत् भावना स्थितिं सम्पा-दयन् योगी कृतपरिजय उच्यते ।

**अतिक्रान्त-मनस्कारो भ्रूमध्ये चित्तधारणात् ।**

भ्रूमध्ये चित्तधारणात् जितमनस्कारो भवति। जितो (ऽयोनिशो) मनस्कारो येन स।

**अलोभो, दशभूः, कामदृश्यालम्बा नृजाऽशुभा ॥११॥**

अशुभा भावना अलोभस्वभावा। चतुर्षु ध्यानेषु, चतुर्षु सामन्तकध्यानेषु (८ : २२), ध्यानान्तरे कामधातौ चेति दशसु भूमिषु जायत इयम्। कामगतरूपेषु आलम्बनं गृह्णाति। मनुष्याणां प्रयत्नेनैव जायते नान्येषाम्।

**आनापानस्मृतिः प्रज्ञा [ पंचभूर्वायुगोचरा।**

**कामाश्रया ];**

आनापान (= प्राणायाम)-स्मृतिः प्रज्ञा। सा च त्रिषु प्रथमसामन्तकेषु, ध्यानान्तरे, कामधातौ चेति पंचसु जायते। वायुश्चास्या आलम्बनम्। कामधातु-गत-सत्त्वैरेव भावयितुं शक्या।

**[ न बाह्यानां ];**

शासन-बाह्यानां नास्या अवबोधो भवति, तेहि त्यक्तकांशा न द्वितीयेंशे प्रभवन्ति।

**[ षड्विधा गणनाद्यः ] ॥१२॥**

गणना-ऽनुगम-स्थानो-पलक्षण-विवर्त्तना-परिशुद्धयः, षड् अस्या भेदाः।

एकतो दश-संख्यापर्यन्तं गणना उपक्रम्यते प्रथमायां, यावत् समाधिम्। द्वितीयस्यां उच्छ्वास-प्रच्छ्वासयोरनुगमनम्। नासिकाग्रे भ्रूमध्ये वा कस्मिंश्चित् स्थाने चित्तमुपरुध्य प्रवर्तते तृतीयस्याम्। चतुर्थी चतुर्षु महाभूतेषु चित्त-चैतसाद्युपलक्षण-पुरस्सरं क्रियते। शुभधर्मेषु चित्तं उपरुध्य पंचमी। दर्शनमार्गं ( ६ : २६ ) भावनामार्गं ( ६ : १९ ) प्रवेशः षष्ठी। संक्षेपश्चात्र—

"गणनाऽनुगम-स्थानो-पलक्षण-विवर्त्तनाः।
परिशुद्धिः षडाकारा आनापानस्मृतिः स्मृताः॥"

**आनापानौ यतः कायः;**

यस्मिन् भूमौ कायः तत्रैव उच्छ्वासप्रश्वासावपि। आरूप्यधातौ न भवति, गर्भे, अचित्तके, चतुर्थध्यानसत्त्वेऽपि न।

[ सत्त्वाख्यौ ];

इमौ आनापानौ सत्वाख्यौ, न असत्त्वाख्यौ ( १ : १० )।

[ अनुपात्तिकौ ] ।

अगृहीतौ, इन्द्रिय-पृथग्-वृत्तित्वात्, ( इन्द्रिय-विनिर्भागित्वात् ) ( १ : ३४ ) ।

( एतौ प्रवाहौ );

प्रवहत इमौ । नौपचयिकौ ( १ : ३७ ), न च विपाकजौ ।

[ अधर मनसा नोपलक्षितौ ] ॥१३॥

आनापानौ स्वभूमिक-चित्तेन स्वोपरितनभूमिकचित्तेन वाऽधिगन्तव्यौ; न तु निम्नभूमिकेन चित्तेन ऐर्यापथिकेन नैर्माणिकेन वा ।

[ निष्पन्नशमथस्यैव स्मृत्युपस्थान-भावना ] ।

यस्य शमथः ( = चित्तस्योपशमः ) सम्पन्नः, तेन एव स्मृत्युपस्थानं भावयितुं शक्यते ।

चतुर्विधं स्मृत्युपस्थानं—धर्म-स्वभाव-संसर्गा-ऽऽलम्बन-भेदात ।

कायवि[ चित्तधर्माणां द्विलक्षण-परीक्षणात् ] ॥१४॥

द्विलक्षणं = स्वलक्षणं, सामान्यलक्षणम् । काय-वेदना-चित्तधर्माणां स्वभाव-सामान्य-भावयोः परीक्षातः स्मृत्युपस्थानलाभः ।

[ प्रज्ञा ];

स्वभाव-स्मृत्युपस्थानं = प्रज्ञा ।

[ श्रुतादिमयी ];

सा च प्रज्ञा श्रुतमयी, चिन्तामयी, भावनामयी च ।

अन्ये संसर्ग-लम्बनात् ;

प्रज्ञा-भिन्ना धर्माः, प्रज्ञा-समस्थितिकाः, संसर्ग-स्मृत्युपस्थानम् । प्रज्ञा तत्समस्थितिकधर्माणां आलम्बनभूताः च ते धर्मा आलम्बन-स्मृत्युपस्थानम् । "काये कायानुपश्यी स्मृत उपस्थित स्मृतिः" ( मज्झिम 20; संयुत्त V. 331 ) ।

अनुपश्यं = दर्शनम्। अतोऽनुपश्यी पुद्गलो दरिडवत्।

स्मृतेरूपस्थानं, स्मृत्युपस्थानम्।

[ क्रमः।

यथोपपत्ति ];

चतुर्णां स्मृत्युपस्थानानां क्रमः, तेषां उत्पत्तिक्रमेण। (१) प्रथमं हि सर्वस्थूलस्य शरीरस्यैव ग्रहणं ततोऽन्येषां, अतः प्राग् (१) काय-य ग्रहणम्। तदनन्तरं ( वेदना (३) चित्त-(४) क्लेशानाम्।

[ चत्वारि विपर्यास-विपक्षतः ] ॥१५॥

चत्वारि स्मृत्युपस्थानानि चतुर्विध-विपर्यासस्य (५ : ६) प्रतिपक्षत आगच्छन्ति, अतश्चतुर्णां संमुखे चत्वार्यैव स्मृत्युपस्थानानि।

[ स धर्म-स्मृत्युपस्थाने ] समस्तालम्बने स्थितः।
[ तानेव पश्यत्यनित्य-दुःखः-शून्य-निरात्मतः ] ॥१६॥

समस्तं आलम्बनं यस्य तस्मिन् धर्मस्मृत्युपस्थाने स्थितः पुरुषः सर्वान् धर्मान् अनित्यतः, दुःखतः, शून्यतः, अनात्मतश्च पश्यति।

तत उष्मगतोत्पत्तिः;

धर्मस्मृत्युपस्थानाभ्यासेन क्रमशः कुशल-मूलं उत्पद्यते, तदेव उष्मगतमित्युच्यते। आर्य सत्यानलस्य पूर्वनिमित्तं इव हि एतत्।

तच्चतुः सत्यगोचरम्।

उष्मगतं च समये चतुरार्यसत्यं आलम्बनीकरोति।

[ षोडशाकारं ];

तस्य षोडश प्रकाराः—

दुःख-दृष्टिः—दुःखं, अनित्यं, शून्यं, अनात्मकम्।

समुदय-दृष्टिः—समुदयः, प्रभवः, हेतुः, प्रत्ययः।

निरोध-दृष्टिः—निरोधः, शान्तं, प्रणीतं, निःसरणम्।

मार्ग-दृष्टिः—मार्गः, न्यायः, प्रतिपत्तिः, नैर्याणिकम्। वक्ष्यन्त इमानि (७ : १३)

[ उष्मात्तु मूर्धानः ];

उष्मगतां मृदु-मध्य-तीव्र-क्रमेण वर्धते, ततः मूर्धान उत्पद्यन्ते ।

**[ तेऽपि तत्समाः ] ॥१७॥**

उष्मगतवत् **मूर्धानो** ऽपि चतुःसत्यगोचराः षोडशप्रकाराश्च । गुणोत्कर्षतया हि नामान्तरम् ।"मूर्धशब्दोऽयं प्रकर्ष-पर्यन्त-वाची ।"

**[ द्वयोर्धर्मेणाकारणं ];**

धर्मस्मृत्युपस्थानेनैव उष्मगतस्य मूर्ध्नां च आकारणम् (= उपनिपातनं = विन्यसनम् ) ।

**[ अन्यैरपि वर्द्धनम् ] ।**

चतुर्विधैरपि स्मृत्युपस्थानैः उष्मगत-मूर्ध्नोः वृद्धिर्भवति ।

**[ ततः क्षान्तिः ];**

मूर्धानः क्रमशः मृदु-मध्या-धिमात्रतां व्रजन्ति । ततः क्षान्ति रुत्पद्यते । क्षमते = रोचत इति क्षान्तिः । तत्र हि निरतिकशयं रोच-मानत्वा ।

**[ द्वयं तद्वत् ];**

क्षान्तिः त्रिधा, मृदु-मध्या-ऽधिमात्र-भेदात् । तत्र मृदुक्षान्तिः, मध्यक्षान्तिश्च मूर्ध्नामिवैव ।

**सर्वस्या धर्मवर्द्धनम् ॥१८॥**

धर्मस्मृत्युपस्थानेन सर्वस्या अस्या वर्द्धनं अधिमात्र-रूपेण; नत्वन्यैः स्मृत्युपस्थानैः ।

**[ कामाप्त-दुःख-विषयाऽधिमात्रा ];**

कामधातुगतं दुःखं यस्या विषयः, सा अधिमात्र-क्षान्तिः ।

**[ एकक्षणा तु सा ] ।**

सा च क्षणिका, न सन्तान-रूपा ।

**[ तथाग्राः ];**

क्षान्तिवत् अन्येऽपि **लौकिका अग्रधर्माः** कामधातु-दुःख-समन्वताः क्षणिकाश्च भवन्ति दर्शनमार्गोन्मुखीभावादग्रधर्माः ।

[ स्कन्ध-सान्विताः ];

चतुः कुशलमूलोष्मगता- ( = धर्म-क्षान्त्यग्र-धर्म- )दयः स्वभावतः सन्ति स्मृत्युपस्थानं, प्रज्ञा च; तथापि स्कन्ध - पंचक-समन्विता एव भवन्ति।

( न च प्राप्ति-समन्विताः ) ॥१९॥

उष्मगतादीनां प्राप्तयो न उष्मगतादिषु सम्प्रयुक्ता भवन्ति।

[ एवं निर्वेधभागीयं चतुर्धा ];

उष्मगत-मूर्ध-क्षान्त्य-अग्रधर्माश्चेति चत्वारः कुशलमूलं, निर्वेध भागीय-शब्दवाच्याः। आदिमौ द्वौ चलौ, अत एव मृदू, क्षान्तिः मध्या, अग्रधर्मा अधिमात्र-निर्वेध-भागीयाः। निश्चितो वेधो ( = दर्शनं ) निर्वेध = आर्यमार्ग इति यावत्। विचिकित्साऽपगमात् निश्चितः। वेधः = विभागः। सत्यानां विभागः, "इदं दुःखं, अयं दुःख समुदयः, अयं निरोधः; इयं निरोध गामिनी प्रतिपद्" इति। दर्शन-मार्ग एकं मार्गांगं, तेन निर्वेध-भागः।

[ भावनामयम् ]।

चत्वारोऽपि निर्वेध-भागीया समाधितो जायंते, नतु श्रुतात् चिन्तातो वा।

अनागम्यान्तरध्यानभूमिकं;

अनागम्यं ( ८ : २२ ) अस्ति तेषां भूमिः, सा च ध्यानान्तर ( ८ : २२ )-ध्यान चतुष्टययोर्मध्ये भवति।

[ द्वेऽधोऽपि वा ] ॥२०॥

भदन्त-घोषकस्यमतेन द्वे प्रथम-द्वितीय-निर्वेध-भागीये काम-धातूपगत-सप्तभूमिष्वपि स्तः।

[ कामाप्तं ];

निर्वेधभागीय-चतुष्टयमपि कामधातौ भवन्ति। तत्र त्रीणि केवलं कुरुवर्जितेषु त्रिषु द्वीपेष्वेव मनुष्यैः लभ्यानि; चतुर्थं देवैः। त्रीण्युभयाश्रयाणि ( स्त्रियः पुरुषाश्च लभन्ते )।

**अग्रधर्मान् द्वयाश्रयान् लभतेऽगना ।**

स्त्री अपि तान् अग्रधर्मान् लभते, ये स्त्रीपुरुषेतिद्वये शरीरे (= आश्रये) लभ्याः ।

**भूमित्यागात्त्यजत्यार्यस्तानि;**

आर्यो यदा तां भूमिं परित्यजति, यस्यां तेन निर्वेधभागीयं लब्धं तदा तन्निर्वेधभागीयमपि त्यजति । अन्य-भूमि-संचाराद्धि पूर्व-भूमिः परित्यज्यते, न तु मृत्युना परिहाण्या वा ।

**अनार्यस्तु मृत्युना ॥२१॥**

पृथग्जनस्तु तन्निकायसभागपरित्यागकाल एव परित्यजति ।

**[ आद्ये द्वे परिहाण्या च ];**

आद्ये द्वे निर्वेधभागीये पृथग्जनः परिहाण्या (= ध्यानशक्त्य-भावेन) मृत्युना च त्यजति । आर्यः प्रथमद्वयात् न पतति, पृथग्जनो-ऽपि उत्तर-द्वयात् ।

**[ मौलेभ्य इह सत्यदृक् ] ।**

मूलध्यानाभ्यासेन लब्धनिर्वेधभागीयः, इह एव जन्मनि सत्य-दर्शनं लभते, निकायोद्वेगाऽतिरेकात् ।

**[ विहीनं लभ्यतेऽपूर्वं ];**

विहीनं निर्वेध-भागीयं, पुनः अभ्यासाल्लब्धं नूतनं एव भवति न पूर्वत्यक्तम् ।

**[ द्वे हानी असमन्वयः ] ॥२२॥**

परिहाणिर्विहानिरिति द्वे हानी । विहानिष्वेव परिहाणिः । इमे द्वेऽनधिकृते ।

**मूर्ध-लाभी न मूलच्छित्;**

मूर्ध-प्राप्तो न कुशलमूलं ( ४ : ७६ ) छिनत्ति ।

**क्षान्तिलाभ्यनपायगः ।**

क्षान्तिलाभी न अपायं गच्छति ।

**शैक्षगोत्राद् विवर्त्य द्वे बुद्धः स्यात्;**

निर्वेधभागीय (ऊष्मगत-मूर्ध)-द्वयं श्रावक-वंशिकात निवृत्य बुद्धो भवितुमर्हति।

त्रीण्यपीतरः ॥२३॥

इतरः प्रत्येकबुद्धः। ऊष्मगत-मूर्ध-क्षान्तीति त्रीणि निर्वेध-भागीयानि विहाय प्रत्येक-बुद्धो भवितुमर्हति।

[ आबोधिमेकासनतो ध्यानान्त्ये शास्तृ-खड्गिनौ ]।

सम्यक्-सम्बुद्धः, खड्गि-( प्रत्येक ) बुद्धश्च चतुर्थध्यान एकासनतो बोधिपर्यन्तं भवतः। "अष्टा-ऽपक्षालमुक्तत्वाद् आनिज्यः समाधिरत एव पटुरुत्ततीक्ष्णेन्द्रियत्वाद्वा" । (४ : ४६; ८ : ११ )। खड्गि-प्रत्येकबुद्धयोरस्ति भेदः। तत्र "उत्पादितनिर्वेध भागीयमात्रोऽपि वर्गचारी प्रत्येकबुद्धः"।

[ तत्पूर्वं मोक्षभागीयं ];

निर्वेधभागीयस्य पूर्वमेव मोक्षभागीयं लभ्यते।

क्षिप्रं मोक्षस्त्रिभिर्भवैः ॥२४॥

प्रथमभवे कुशलमूलं (=मोक्ष भागीयं, द्वितीयभवेनिर्वेध-भागीयं, तृतीये च मार्गं उत्पादयति, तेन च मोक्षः।

[ श्रुत-चिन्तामयं ];

मोक्षभागीयं हि श्रुतमयं चिन्तामयं च भवति।

[ कर्मत्रयं ];

कायिकं, वाचिकं मानसं त्रिविधि कर्माऽपि मोक्षभागीयम्। प्राधान्येन तु मानसमेव।

[ आक्षिप्यते नृषु ]।

उत्तरकुरुवर्जितानां त्रयाणां द्वीपानां मनुष्येष्वेव मोक्षभागीयं कर्माक्षिप्यते। देवा-ऽपायो-त्तरकुरुषु हि अपेक्षितानां निर्वेद-प्रज्ञादीनामभावः।

[ लौकिकेभ्योऽग्रधर्मेभ्यो ] धर्मक्षान्तिरनास्रवा ॥२५॥

जायत इति शेषः।

काम-दुःखे;

कामधातुगत (= कामावचर)-दुःखमेव धर्मक्षान्तेरालम्बनम्। धर्मज्ञानेन जायमाना क्षान्तिः, धर्मज्ञानक्षान्तिः ।

**ततोऽत्रैव धर्मज्ञानं;**

दुःखे धर्मज्ञानक्षान्तेरुत्पत्तेरनन्तरं धर्मज्ञानं कामावचर-दुःखालम्बनं जायते ।

**तथा पुनः ।**

**शेषदुःखेऽन्वयक्षान्तिज्ञाने;**

दुःखे धर्मज्ञानस्यानुपदं एव दुःखेऽन्वयक्षान्तिः अन्वय-ज्ञानक्षान्तिश्च जायेते समस्ताऽऽलम्बने; रूपाऽऽरूप्यधातुगत-दुःखे। दुःखेन्वय ज्ञानत उत्पत्तिमत्त्वादियं क्षान्तिः दुःखेऽन्वयज्ञान-क्षान्ति रुच्यते । अन्वयः = हेतुः = समुदयः ।

**सत्यत्रये तथा ॥२६॥**

दुःखसत्याद्यथा क्षान्ति-द्वयं ज्ञान-द्वयं च उत्पद्येते, तथैव शेषे सत्य-त्रयेऽपि । दुःखेन्वयज्ञानानन्तरं कामावचर-समुदये धर्मज्ञान-क्षान्तिरुत्पद्यते, तस्याश्च समुदये धर्म-ज्ञानं; ततः अन्वयज्ञानक्षान्तिः समुदयेऽन्वय ज्ञानं च ततः । इत्थं निरोधसत्ये, मार्गसत्येऽपि योज्यम् ।

**एवं षोडशचित्तोऽयं सत्याभिसमयः;**

सत्याऽभिसमयः = सत्यदर्शनम् । चतुर्णां सत्यानां एकैकस्य चातुर्विध्यं ( धर्मज्ञाने-धर्मक्षान्त्यन्वयज्ञानान्वयक्षान्ति-भेदेन ) उक्त-क्रमेण ।

**[ त्रिधा ।**

**दृगाऽऽलम्बन-कार्याख्यः ];**

अभिसमयः त्रिविधः,—दर्शनाभिसमयः, आलम्बाऽभिसमयः, कार्याऽभिसययश्च । तत्र प्रथमः, अनास्रवप्रज्ञया सत्यस्य साक्षात्कारः द्वितीयः, अनास्रव-प्रज्ञया तत्सम्प्रयुक्तधर्मैश्च सत्य-साक्षात्कारः । तृतीयः, प्रज्ञया तत्सप्रयुक्तधर्मैः, तत्सहचर-तद्विप्रयुक्तधर्मैश्च सत्य-साक्षात्कारः ।

**सोऽग्रधर्मैकभूमिकः ॥२७॥**

यस्या भूमेः अग्रधर्माः, तस्या एव षोडशविधोऽभिसमयोऽपि।

**क्षान्ति-ज्ञानान्याऽऽनन्तर्य-मुक्ति-मार्गा यथाक्रमम्।**

क्षान्तिस्तत्राऽऽनन्तर्यमार्गाः, ज्ञानं च विमुक्तिमार्गाः। क्लेश-विच्छेदेऽन्तरयितुमशक्यत्वात्, आनन्तर्यमार्गाः। विमुक्तौ मार्गाः, क्लेशविमुक्त्यवस्थामार्गा इति। "यथा द्वाभ्यां, एकेन चौरो निष्कास्यते, द्वितीयेन तदप्रवेशाय कपाटः पिधीयते। एवं आनन्तर्य-मार्गेण क्लेश-चौरो निष्कास्यते, तत्प्राप्तिच्छेदतः। विमुक्ति-मार्गेण च विसंयोग-प्राप्तिकपाटं पिधीयते वर्त्तमानीकरणतः।"

**अदृष्टदृष्टेर्दृङ्मार्गः तत्र पंचदश क्षणाः ॥२८॥**

दुःख-धर्मज्ञान-क्षान्तित आरभ्य मार्गेऽन्वयज्ञान-क्षान्तिपर्यन्तं पचदश क्षणा दर्शनमार्गः। यतोऽदृष्टस्य दर्शनम्।

**मृदु-तीक्ष्णेन्द्रियौ तेषु श्रद्धा-धर्मानुसारिणौ।**

तेषु पंचदशसु क्षणेषु मृद्विन्द्रियः पुद्गलः श्रद्धानुसारी उच्यते; तीक्ष्णेन्द्रियश्च धर्मानुसारी।

**[ अहीन-भावना-हेयौ फलाद्यप्रतिपन्नकौ ] ॥२९॥**

तौ द्वौ यदि भावनाहेयं न त्यक्तवन्तौ, तर्हि प्रथम-फलस्य अधिकारिणौ। प्रथमफलं = स्रोत आपन्नफलम्।

**यावत्पंच-प्रकारघ्नौ;**

यदि तौ लौकिकमार्गेण ( प्रथमं, द्वितीयं, तृतीयं, चतुर्थं, पंचमं वा ) भावनाहेयं त्यक्तवन्तौ, तथापि तौ प्रथमफलाधिकारिणावेव।

**द्वितीयेऽर्वाग् नवत्यागात्।**

षष्ठं सप्तमं अष्टमं त्यक्तवन्तौ चेत् द्वितीयफलेऽधिकारिणौ। द्वितीयफलं = सकृदागामित्वम्।

**कामाद्विरक्तावूर्ध्वं वा तृतीये प्रतिपन्नकौ ॥३०॥**

यदि तौ कामधातुतः तदुपरितनधातुतो वा विरक्तौ तर्हि तृतीयेऽनागामिफले ऽधिकारिणौ (२ : १६)।

**[ प्रतिपन्नको यो यत्र फलस्थस्तत्र षोडशे ]।**

षोडशे क्षणे तौ न श्रद्धा-धर्मानुसारिणौ; तदा हि तयोः तस्मिन् फले प्रतिष्ठा जायते, यत्र पूर्वं प्रतिपन्नकौ ।

**श्रद्धाधिमुक्त-दृष्ट्याप्तौ मृदु-तीक्ष्णेन्द्रियौ कदा ॥३१॥**

तदा मृद्विन्द्रियः श्रद्धाधिमुक्त उच्यते, तीक्ष्णेन्द्रियश्च दृष्टि-प्राप्तः । श्रद्धानुसारी इदानीं श्रद्धाधिमुक्तो जायते, धर्मानुसारी च दृष्टिप्राप्तः ( ६ : २९ ) ।

**[ फलाप्तः फल-विशिष्टं मार्गं न लभते यतः ] ।**
**अप्रयुक्तो विशेषाय फलस्थोऽप्रतिपन्नकः ॥३२॥**

स्रोतआपन्न-फल-प्राप्तः तदूर्ध्व-सकृदागामि-फलं न लभते, स्वफल-लाभमात्रेण । इत्थं एकस्मिन् फले स्थितः, यावत्तदूर्ध्वफलाय न प्रयतते तावत्तत्राधिकारी न भवति ।

**नव प्रकारा दोषाहि भूमौ भूमौ,**

भवाग्रपर्यन्तं प्रतिभूमि नवविधा दोषा कामधातुवत् भवन्ति ।

**तथा गुणाः ।**

प्रतिभूमि नवेति ।

**मृदु-मध्या-ऽधिमात्राणां [ मृदु-मृद्वादि-भेदतः ] ॥३३॥**

[ ( मृदु+ मध्या + ऽधिमात्र ) ( मृदु + मध्या + ऽधिमात्र ) ] भेदतः नव प्रकाराः । तत्र मृदु-मध्या-ऽधिमात्रेति त्रयः प्रधानाः । मृदु-मृदु ....। "शुक्लाश्च धर्मा बलवन्तो दुर्बलास्तु कृष्णाः । क्षणिक-मृदुकेनाप्यार्यमार्गेण अनादि-संसार-परम्पराप्यायितानां अधिमात्रक्लेशानां उन्मूलनात् ।"

**[ अक्षीणभावनाहेयः फलस्थः सप्तकृत्परः ।**

भावनाहेयाः क्लेशा यस्य न क्षीणाः, फले स्थितः स पुद्गलः सर्वतोऽधिकं सप्तवारमेव भवबन्धन आगन्तुं शक्नोति, न ततोऽधिकम् । स्रोतो निर्वाणनद्याः, तत्रापन्नः, स्रोत आपन्न इति । सप्तकृत्परम इति संज्ञा ।

**[ प्रकार-त्रि-चतुर्मुक्तो ] द्वित्रिजन्मा कुलंकुलः ॥३४॥**

त्रिप्रकार-चतुःप्रकार-मुक्त आर्यपुद्गलः, द्विवारं त्रिवारं वा जन्म गृह्णाति कुलंकुलो भूत्वा। कुलंकुलो द्विविधः—देव-कुलंकुलः, मनुष्य-कुलंकुलः। एकस्मात् कुलात् द्वितीयस्मिन् कुले जायत इति कुलंकुलः। देवकुलंकुलः द्वित्रिवारं देवनिकाये जायते, तथा मनुष्य कुलंकुलो मनुष्य-निकाये।

यावत्पंचप्रकारघ्नो द्वितीये प्रतिपन्नकः।

क्लेशानां प्रथमतो यावत्पंचमं प्रकारं विहाय द्वितीय-फले (= सकृदागामिफले) समधिकरोति।

[ क्षीण-षष्ठ-प्रकारस्तु सकृदागाम्यसौ भवेत् ] ॥३५॥

यस्य क्लेशानां षष्ठः प्रकारः क्षीणः, स सकृदागामी भवति।

क्षीण-सप्ताऽष्टदोषांश एकजन्मैकवीचिकः।

[ प्रतिपन्नकस्तृतीये ];

सप्तमं अष्टमं च प्रहाय स एकजन्मा भवति, एकवीचिः; तृतीये फले ऽधिकारी।

[ सोऽनागामी नवक्षयात् ] ॥३६॥

नवानामपि क्लेश-प्रकाराणां क्षयात् अनागामी भवति। पुनः स कामधातौ नागच्छति। नवमः प्रकारः मृदु-मृदु-क्लेशः।

[ सोऽन्तरोत्पन्न संस्काराऽसंस्कार-परिनिर्वृतिः।

ऊर्ध्व-स्रोतश्च ];

पंच-विधा अनागामिनः—अन्तरापरिनिर्वायी, उपपद्यपरिनिर्वायी, साभिसंस्कारपरिनिर्वायी, अनभिसंस्कारपरिनिर्वायी, ऊर्ध्वस्रोता च। अन्तराभवे [ ३ : १०, १२ ) यः परिनिर्वाति सोऽन्तरापरिनिर्वायी, द्वितीय उत्पत्यनन्तरं परिनिर्वाति। तृतीय उत्पद्य प्रयत्य च। चतुर्थः प्रयत्नमन्तरा। पंचमः कामधातुं विहाय न पुनरागच्छति, तत उपरि एवाऽभिमुखीभवति, तत्रैव च परिनिर्वाति।

[ स ध्यानं व्यवकीर्याकनिष्ठगः ] ॥३७॥

ऊर्ध्व स्रोता द्विविधः—अकनिष्ठगः, भवाग्रगश्च। तत्र प्रथमो

ध्यानेमिश्रितो कनिष्ठं यावत्, द्वितीयोऽमिश्रितो यावद्भवाग्रं गत्वा परिनिर्वाति।

**स प्लुतोऽर्धप्लुतः सर्वच्युतश्च;**

अकनिष्ठगोऽनागामी आर्यः त्रिविधः—प्लुतः, अर्धप्लुतः, सर्वच्युतश्च। तत्र प्लुतः प्रथमध्याने मिश्रितो ब्रह्मकायिकेषूत्पद्य, ततः चतुर्थध्याने निमज्जते, ब्रह्मकायिकेष्वेव परिनिर्वाति, अर्धप्लुतः शुद्धावासेषु ( ६ : ४३ ) उत्पद्याकनिष्ठेषु जायत एकमपि स्थानान्तरमविलंघ्य तत्र च परिनिर्वाति। सर्वच्युतस्तु महाब्रह्मलोकं विहाय सर्वेषु देवेषु परिभ्रम्याकनिष्ठेषु परिनिर्वाति।

**अन्यो भवाग्रगः।**

ध्यानामन्न ऊर्ध्वस्रोता नैवसंज्ञानासंज्ञायतनं ( = भवाग्रं ) यावद् गत्वा परि निर्वाति।

**[ आरूप्यगश्चतुर्धान्यः ];**

षष्ठ आरूप्यगोऽनागामी, रूपधातौ विरक्तत्वात्तत्र न जायते। तस्य च उपपद्य-परिनिर्वायी प्रभृतयः ( ६ : ३७ ) चत्वारो भेदाः।

**इह निर्वापकोऽपरः ॥३८॥**

सप्तमोऽनागामी अत्रैव जन्मनि परिनिर्वाति। स हि दृष्टधर्मपरिनिर्वायी ( ६ : ४१ )।

**[ त्रयस्यापि त्रिधा भेदाद्रूपोपगा नवोदिताः ]।**

अन्तरापरिनिर्वायी, उपपद्यपरिनिर्वायी, ऊर्ध्वस्रोता चेति त्रयोऽनागामिनो रूपगाः। तत्र (१) प्रथमस्य आशु-नाशु-चिरेति त्रयो भेदाः। (२) द्वितीयस्य उपपद्य-साभिसंस्कारा-ऽनभिसंस्कार-भेदेन त्रयः। (३) ऊर्ध्वस्रोतसश्च प्लुता-ऽर्द्धप्लुत-सर्वच्युतभेदात् त्रयः।

**तद्विशेषः पुनः कर्म-क्लेशे-न्द्रिय-विशेष[ णा ]त् ॥३६॥**

त्रयाणां अनागामिनां नव विशेषाः ( = भेदाः), कर्मभेदेन, क्लेशभेदेन, इन्द्रियभेदेन च भवन्ति। १. त्रयोऽनागामिनो भिद्यन्ते ( क ) उपचित-कर्म-( ४ : १२० ) दृष्ट्याः ( ख ) क्लेश-समुदाचार-दृष्ट्या मृदु-मध्या-ऽधिमात्राः; ( ग ) श्रद्धेन्द्रियादि-दृष्ट्या, यानि हि मृदु-

मध्या-ऽधिमात्राणि भवन्ति । २. एकैको ऽनागामी त्रिषु कारकः, (क) क्लेशदृष्ट्या । अन्तरापरिनिर्वाय्यादीनां मृदुमृदुः, मृदुमध्यः, मृद्व-धिमात्र इति त्रिभ्यः प्रकारेभ्यः ); ( ख ) इन्द्रिय-दृष्ट्या ( इन्द्रियाणि हि अधिमात्राऽधिमात्रं, अधिमात्रमध्य, अधिमात्रमृदु इति त्रिवि-धानि, (ग) कर्म भेद-दृष्ट्या चापि, तथाहि ऊर्ध्वस्रोतसः प्लुतादयो भेदाः ।

**ऊर्ध्व-स्रोतो [न] भेदेन सप्त सद्गतयो मताः ।**

गति-सूत्रे ( ३ : १२ ) हि प्लुता-ऽर्द्धप्लुत-सर्वच्युत-भेदा ऊर्ध्व-स्रोतसो न (६ : ३९) गृहीतास्तेन सप्तैव सत्पुरुषगतयः परिगणिताः।

**[ सदसति वृत्त्यवृत्त्योर्गता अपुनरागतेः ] ॥४०॥**

सद्वृत्तिः (=कुशलाभ्यासः), असदवृत्तिः ( = अकुशलान-भ्यासः ), अपुनरागमनं गता इति त्रीणि कारणानि अनागामिन्येव भवन्ति, तेन सत्पुरुषगतिषु तस्यैव गतयः परिसंख्याताः ।

**कामे [ परिवृत्तजन्मा ( ऽर्यो ) ] धात्वन्तरं न गच्छति।**

कामधातौ जन्मानन्तरं य आर्योऽनागामि-फलं प्राप्तवान् , स अन्यस्मिन् धातौ जन्मग्रहणार्थं न गच्छति ( ६ : ३८ )। कामधातु-गत-दुःखानां तीव्रसंवेगता एव तत्र कारणम्। रूपधातौ अधिगता-नागामि-फल आरूप्याधतावपि गच्छति ।

**स चोर्ध्वजश्च नैवाक्ष-संचार-परिहाणि-भाक् ॥४१॥**

स कामधातौ परिवृत्त-जन्मा आर्यः, रूपारूप्यगताश्च स्वेन्द्रिय ( = श्रद्धादि )-संचारे न समर्थाः, न च स्वपरिहाणौ; प्रज्ञायाः परिपक्व-तरत्वात् ।

**[ आदौ चतुर्थाकिरणं ];**

प्रथमं चतुर्थ-ध्यानस्य आकिरणभावना जायते ।

**[ सिद्ध्यति क्षण-मिश्रणात् ] ।**

क्षणमिश्रणेन आकिरण-भावना सिद्ध्यति । आकिरणं = व्यव-किरणं, = व्यतिभेदनम् ।

**[ उपपत्ति-विहारार्थं ] क्लेशभीरुतया [ ऽपि च ] ॥४२॥**

आर्यस्य आकिरणभावनायां ध्यानमग्नतायां त्रयो हेतवः—तीक्ष्णेन्द्रियानागामिनः शुद्धावासेषूत्पत्ति-इच्छया, सुखविहारइच्छया वा तथाकरणम् । मृद्विन्द्रियस्य अनागामिनश्च क्लेशभयेन ।

**[ तत्पंचधेति पंचैव शुद्धावासोपपत्तयः ] ।**

आकिरणभावना पंचविधा, मृदुः, मध्या, अधिमात्रा, अधिमात्रतरा, अधिमात्रतमा चेति । तत्क्रमेणैव शुद्धावासेषु पंच उपपत्तयो अवृहा-तप-सुदृश-सुदर्शना-कनिष्ठा भवन्ति ।

**[ अनागामी मतः काय-साक्षी निरोध-लाभतः ] ॥४३॥**

संज्ञावेदितनिरोध-समापत्ति प्राप्तोऽनागामी कायसाक्षी समुच्यते । "योहि कश्चिद् अनागामी [ निरोधं प्राप्नोति स निर्वाण-सदृशस्य धर्मस्य ] कायेन साक्षात्करणात् [ काय-साक्षीत्युच्यते] ।"

**आभवाग्राष्टभागक्षिद् अर्हत्त्वे प्रतिपन्नकः ।**

यावत् स भवाग्रस्याष्टमं भागं विनाशयति, तावत् स अर्हत्वेऽधिकारी ।

**[ आनन्तर्येऽपि नवमे ];**

भवाग्रक्षिद् नवम आनन्तर्यमार्गे ( ६ : २८ ) स्थितोऽपि अर्हत्फलाधिकारी । अधिकारी = तद्योग्यतान्वितः, न तु तत्प्राप्तः ।

**[ स तु वज्रोपमः ];**

स नवमो मार्गः, सर्वानुशयभेदी वज्रोपमसमाधिरुच्यते । भवाग्रस्य नवमः क्लेश-प्रकारो वज्रोपमसमाधिना भिद्यते ।

**[ सह ॥४४॥**

**तत्क्षयाप्त्या क्षयज्ञानं ];**

भवाग्रीय तन्नवम-प्रकारक्षयस्य यदा लाभो जातः, तदा तेन लाभेन सहैव क्षयज्ञानं जायते ।

**[ अशैक्षोऽर्हन्नसौ तदा ] ।**

क्षयज्ञानानन्तरं एव स अशैक्षोऽर्हन् जायते ।

**लोकोत्तरेण वैराग्यं भवाग्रात् ;**

केवलं लोकोत्तरमार्गेण भवाग्रात वैराग्यं लभते ।

**अन्यतो द्विधा ॥४५॥**

भवाग्रवर्जिताभ्योऽष्टाभ्योऽन्याभ्यो भूमिभ्यो द्विधा वैराग्यं लभते; लौकिकमार्गेण लोकोत्तरमार्गेण चेति ।

**लौकिकेनार्य-वैराग्ये विसंयोगाप्तयो द्विधा ।**

लौकिकेन मार्गेण यदि अष्टभूमिषु आर्यस्य वैराग्यं, तर्हि तस्य विसंयोगप्राप्तिः द्विधा भवति । अष्टभूमयः = काम-ध्यानचतुष्टया-ऽरूप्यत्रयमिति । द्विधा प्राप्तिः—तद्भूमिक-क्लेशविसंयोग( प्रतिसंख्या-निरोध )-प्राप्तिः, तत्क्लेश-प्रतिसंख्यानिरोध ( २ : ५५ )-प्राप्तिश्च ।

**केचित् लोकोत्तरेणाऽपि ;**

केचिदाचार्या वदन्ति—लोकोत्तरेण मार्गेणाष्टभूमिषु वैराग्यं प्राप्तस्याऽपि द्विधा विसंयोग-प्राप्तयो भवन्ति ।

**त्यक्ते क्लेशाऽसमन्वयात् ॥४६॥**

यतो हि, अनास्रव-विसंयो ग-प्रहाण आर्यो न क्लेशसमन्वितो ऽस्ति ।

**भवाग्रार्धविमुक्तोर्ध्वजातवत् त्वसमन्वयः ।**

किन्तु, यदि स न क्लेशान्वितः, तर्हि स भवाग्रार्द्धात् मुक्त आर्य इव, ऊर्ध्वभूमिक जात पुरुष इव वा भवति ।

**अनास्रवेण वैराग्यं अनागम्येन सर्वतः ॥४७॥**

आस्रवरहितेनानागामिफलेन सर्वेभ्यो भूमिभ्यो वैराग्यं लभते ।

**[ध्यानात् सामन्तकाद् वान्त्यो मुक्तिमार्गः त्रिभूमिजित् ]।**

उत्पत्तेर्नवभूमयः—कामधातुः, चत्वारि ध्यानानि, चत्वार आरूप्याः ( ८ : १ )। यदि पुरुषः त्रिभूमि( काम-प्रथम-द्वितीय-ध्यान )-जित् = तिसृभ्यो भूमिभ्यो विरक्तः, तदा अन्त्यो विमुक्तिमार्गः सामन्तकात् प्रधानध्यानाद्वा जायते ।

**[ नोर्ध्वसामन्तकात् ];**

परं स्वत ऊर्ध्व-सामन्तकात् न जायते । चत्वारो हि सामन्तकाः चतुर्णां प्रथमादीनां ध्यानानां आरम्भे उपध्यानभूताः ।

**[ आर्यैः अष्टभिः स्वोर्ध्व-भूमिजित् ] ॥४८॥**

अष्टभिः अना स्रवैः ( = आर्यैः ) मार्गैः स स्वभूमिं स्वोर्ध्वस्थां चैकां भूमिं जयति ( = वैराग्यं लभते ); निम्नभूमितस्तु तदा स्वयमेव विरक्तः ।

**[लौकिकास्तु विमुक्त्यानन्तर्य-मार्गा यथाक्रमम्] ।**

**शान्ताद्युदाराद्याकाराः;**

लौकिक्या विमुक्तयः **शान्त-प्रणीत-निःसरणा**-कारा भवन्ति । लौकिका आनन्तर्य-मार्गाश्च औदारिक-दुःखिल-स्थूल-भित्तिका-काराः ।

**उत्तराऽधर-गोचराः ॥४९॥**

विमुक्तिमार्गा ऊर्ध्वभूमिका भवन्ति, आनन्तर्य-मार्गास्तु अधर-भूमिकाः ।

**[ यद्यकोप्यः क्षयज्ञानादनुत्पादमतिः ];**

क्षयज्ञानानन्तरं यद्ययं अर्हन् अकोप्यधर्मा, ( ६ : ५६ ) तर्हि क्षयज्ञानस्य ( ६ : ४५ ) अनन्तरमेवाऽस्य अनुत्पादज्ञानं ( ६ : ६७; ८ : १,४ ) जायते ।

**न चेत् ।**

**क्षयज्ञानं अशैक्षी वा दृष्टिः;**

यदि स अकोप्यधर्मा नास्ति तर्हि, क्षयज्ञाने ऽशैक्षी सम्यग्दृष्टिर्वा जायते ।

**[ सर्वार्हतां तु सा ] ॥५०॥**

सा अशैक्षी दृष्टिस्तु सर्वेषां अर्हतां भवति । अकोप्यधर्मणां अर्हतां कदाचित अनुत्पादज्ञानात् पूर्वं अनुत्पादज्ञानं जायते, कदाचित् पूर्वं अशैक्षी दृष्टिरेव ।

**श्रामण्यं अमलो मार्गः;**

अनास्रव-मार्ग एव श्रामण्यं उच्यते। शमयति क्लेशमिति व्युत्पत्या।

**संस्कृताऽसंस्कृतं फलम्।**

श्रामण्यस्य एतद् द्विविधं फलम्।

**[ एतान्येकोननवतिः ]**

एतानि फलानि एकोननवतिः।

**[ मुक्तिमार्गाः सह क्षयैः ] ॥५१॥**

दर्शनहेयक्लेशानां प्रहाणाय अष्टौ विमुक्तिमार्गाः ( ६ : २७ ); एकाशीतिश्च आनन्तर्यमार्गाः भावनाहेयक्लेशानां प्रहाणाय। त एकाशीतिः नवभूमिकेषु ( काम + ४ ध्यान + ४ आरूप्य ) प्रत्येकं नवविध-क्लेशानां प्रहाणाय नव मार्गाः ( ९ × ९ = ८१ )।

एकोननवतिः आनन्तर्यमार्गाः श्रामण्यम्।

एकोननवतिः विमुक्तिमार्गाः श्रामण्यस्य अभिसंस्कृतफलं, यत्र हि श्रामण्यस्य निष्यन्दफलं ( २ : ५६ ) पुरुषकारं फलं ( २ : ५६ ) चापि।

एकोननवतिविधक्लेशानां प्रतिसंख्यानिरोधः श्रामण्यस्य अनभिसंस्कृतं फलम्, यत्र हि श्रामण्यस्य पुरुषकारफलं (२ : ५५ अपि।

**चतुः फल-व्यवस्था तु पंचकारणसंभवात्।**

पंच कारणानि तेषु संभवन्तीति, भगवता चत्वारि फलानि प्रोक्तानि।

**पूर्वत्यागोऽन्यमार्गाप्तिः क्षयसंकलनं फले ॥५२॥**
**ज्ञानाष्टकस्य लाभोऽथ षोडशाकारभावना।**

( १ ) अधिकारिमार्ग-त्यागः ( २ ) फल ( = अन्य -मार्ग-लाभः ( ३ ) सर्वस्यैक-प्राप्तिलाभः; ( एकफले युगपत सर्व-निरोध-लाभः ) ( ४ ) एकवारमेव अष्टानां ज्ञानानां ( धर्मज्ञान-चतुष्टयं + अन्वयज्ञान-चतुष्टयं ६ : २६, ७ : २२ ) लाभः ; (५) षोडश विधाऽनित्यतादीनां लाभः ( ७ : २२ )।

[लौकिकाप्तं फलं मिश्रानास्रवप्राप्तिधारणात्] ॥५३॥

लौकिकेन मार्गेण लब्धा परिहाणिरप्येकं फलं, यत् इयं मिश्रा, अनास्रवप्राप्त्या चाऽस्या धारणम् । एवं लौकिकेन मार्गेण लब्धं सकृदागामिफलमपि एकं फलम् । सत्काय-शीलव्रत-विचिकित्सेति त्रयाणामनुशयानां दृष्टि-हेयानां परिहाणिः, राग-द्वेष-मोहानां अभावश्च सकृदागामिफलम् । पंचानां अवर-भागीयानां अनुशयानां विसंयोगो ऽनागामिफलम् ( ६ : ३५ ) ।

[ ब्राह्मण्यमेव तत् ] ब्रह्मचक्रं तु ब्रह्मवर्तनात् ।

श्रामण्यमेव ब्राह्मण्यम् । "वाहिता अनेन अनेक-विधाः पापका अकुशला धर्मा इति ब्राह्मणः । तद्भावो ब्राह्मण्यं अनास्रवो मार्गः" । तस्यैव नाम ब्रह्मचक्रमपि, ब्रह्मणा बुद्धेन प्रवर्तित्वात् ।

[ ब्रह्मचक्रं तु दृङ्मार्गः ];

दर्शनमार्गो हि ब्रह्मचक्रम् । क्रमणाच्चक्रम् ।

आशुगत्वाद्यरादिभिः ॥५४॥

यतोऽत्रापि चक्रवत् आशुगभावः, अरादयश्च सन्ति, अतः चक्रमुच्यते । (१) सत्याभिसमयो हि पंचदशक्षणैः जायत, इयमस्याशुगता; (२) चक्रवत् त्यजनक्रमणमस्यापि, आनन्तर्यमार्गं विहाय विमुक्तिमार्गपरिग्रहात्; (३) अजितजय-जिताध्यवसानं, यथा चक्रवर्तिचक्रं, तथाऽत्रापि आनन्तर्य-मार्गेण क्लेशपराजयः, विमुक्ति-मार्गेण तच्छासनम्; (४) चक्रे यथा नेमिरूर्ध्वमधोगच्छति, तथाऽत्रापि आनन्तर्यविमुक्तिमार्गयोर्विभागः ।

एतस्मिन् ब्रह्मचक्रे दर्शन-भावना-शैक्षमार्ग-रूपाः त्रयः परिवर्ताः, त एव दुःख-समुदय-निरोध-मार्ग-सत्यैर्विभक्ता द्वादश-विधा आकारा भवन्ति ।

[ कामे त्रयाप्तिः ];

कामे त्रयाणां फलानां प्राप्तिः ।

[ अन्त्यस्य त्रिषु ];

श्रामण्यस्य अन्त्यं फलं अर्हत्त्वं, तस्य प्राप्तिः त्रिष्वपि धातुषु ( काम-रूपा-ऽऽरूप्येषु ) भवति ।

**नोर्ध्वं हि दृक्पथः ।**

दर्शनमार्गो हि कामधातावेवाऽस्ति, न तत ऊर्ध्वम् । कामधातु-विरक्तो रूपा-ऽऽरूप्यजातः पुरुषो दर्शनमार्गाभावेनैव तत्रानागामिफलं न लब्धुं शक्नोति ।

**असंवेगादिह विधा, तत्र निष्ठेति चागमात् ॥५५॥**

रूपाऽऽरूप्ययोर्दुःखाभावात् ( =असंवेगात् ) तत्र जातस्य पृथग्जनस्य संवेगो न संभवति, संवेगं विना च न आर्यमार्गे प्रवेश । सूत्रेऽपि—इह ( कामधातौ ) विद्धाति, तत्र ( रूपारूप्ययोः ) च लभते इति वाक्यं, तेन मार्गविधानं अत्रैव संभवति न तत्र ।

**[ अर्हन्तः षण मताः ];**

परिहाणधर्मा, चेतनाधर्मा, अनुरक्षण धर्मा, स्थिताकम्प्यः, प्रतिवेधनाधर्मा, अकोप्यधर्मा च ।

**[ तेषां ] पंच श्रद्धाधिमुक्तजाः ।**

अकोप्यधर्माणामन्तरेण श्रद्धाधिमुक्तजाः ( ६ : ३२ ) ।

**सामयिकी [ तद्विमुक्तिः ];**

तेषां पंचानां अर्हतां चेतो-विमुक्तिः सामयिकी भवति । समयापेक्षश्च विमुक्तश्च = समयविमुक्त इति तेषां संज्ञा । समयः = अपवादः ।

**[ अकोप्याऽकोप्यधर्मणः ] ॥५६॥**

अकोप्यधर्मणोऽर्हतः चेतोविमुक्तिः अकोप्या प्रोच्यते । ततः पतनं न भवितुमर्हतीत्यकोप्या ।

**[ असमयविमुक्तो ऽतः ];**

अकोप्यत्वादेव असमयविमुक्तोऽप्येष उच्यते ।

**दृष्टिप्राप्तान्वयश्च सः ।**

अकोप्यो दृष्टिप्राप्तेषु ( ६ : ३२ ) अपि परिगणितः ।

**तद्गोत्रा आदितः केचित् [केचिदुत्तापनात् पुनः] ॥५७॥**

केचनार्हन्तः प्रथमत एव चेतनाधर्माणः; अन्ये तु परिहाणधर्माणो भूत्वा इन्द्रियपरिशोधनेन (=उत्तापनेन) चेतनाधर्माणो जायन्ते ।

**[ चतुर्णां गोत्रात्; पंचानां फलाद् हानिः ];**

चेतनाधर्मादीनां चतुर्णां गोत्रतः ( स्त्र-चेतना-ऽनुरक्षण-स्थिता-कम्प्यप्रतिवेधना-धर्मतः ) च्युतिर्भवति । परिहाणधर्मादीनां प्रतिवेधान्तानां पंचानां अर्हतां फलात् च्युतिर्भवति ।

**न पूर्वकात् ।**

किन्तु कस्यापि प्रथमगोत्रात् ( -परिहाणधर्मपदात् ), प्रथमफलात् ( स्रोत आपन्नफलाच्च ) पतनं न भवति । नह्यार्यः पृथग्जनो भवति ।

**[ षड्गोत्रा अनार्यशैक्षाः ];**

अनार्याणां शैक्षार्याणां ( स्रोत आपन्न-सकृदागाम्यनागामिनां ) षड् गोत्राणि ( वंशानि = प्रभेदाः ) भवन्ति ।

**( दृक्पथे नाक्षसंचरः ) ॥५८॥**

दर्शनमार्गे न इन्द्रियाणां श्रद्धादीनां संचारो (=वृद्धिः) भवितुमर्हति, तदर्थं पंचदशक्षण ( ६ : २८ ) - कालोऽत्यल्पः ।

**[ प्राप्ताऽप्राप्तोपभोगेभ्यः परिहाणिस्त्रिधा मता ] ।**

परिहाणिस्त्रिविधा प्राप्तपरिहाणिः (प्राप्तात् फलात् पतनं), अप्राप्तपरिहाणिः ( अप्राप्तात् फलात् पतनं ), उपभोगपरिहाणिश्चेति ।

**[अन्त्या शास्तुरकोप्यस्य मध्याप्यन्यस्य तु त्रिधा] ॥५९॥**

उपभोग-परिहाणिः शास्तुः ( = बुद्धस्य ) भवति; अकोप्यधर्मणोर्हतः उपभोगपरिहाणिः, अप्राप्तिपरिहाणिश्च; अन्येऽर्हन्तस्तु त्रिधाऽपि पतन्ति ।

**म्रियते न फलभ्रष्टः;**

फलभ्रष्टोर्हन् परिहाणिक्षणे तस्माच्छरीरादपि न च्यवते ।

**[ न चाकार्यं करोति सः ]।**

अर्हत्फलभ्रष्टः, अब्रह्मचर्यादिकं अकार्यं न करोति।

**[ विमुक्त्यानन्तर्यपथा नवाऽकोप्ये ];**

प्रतिवेधनाधर्मा अर्हन् संक्षीणेन्द्रियो यदा अकोप्ये प्रविशति, तदा स नव आनन्तर्यमार्गान् नव च विमुक्तिमार्गान् उत्पादयति, यथा सर्वे शैक्षा अर्हत्त्वप्राप्तिकाले।

**[ अतिसेवनात् ] ॥६०॥**

यतः प्रतिवेधनाधर्मा अत्यभ्यस्तो भवति।

**[ एकैकस्तु दृष्टिप्राप्ते ];**

श्रद्धाधिमुक्तः ( = मृद्विन्द्रियशैक्षः ) येनेन्द्रिय ( = श्रद्धादि )-परिवर्द्धनेन दृष्टिप्राप्तः ( = अधिमात्रेन्द्रियशैक्षः ) सम्पद्यते, तद् आनन्तर्यमार्ग-विमुक्तिमार्गयोरेकैकम्।

**[ अनास्रवः ];**

न आनन्तर्य–विमुक्तिमार्गा अनास्रवा भवन्ति।

**[ नृषु वर्द्धनम् ]।**

तदिन्द्रिय ( = श्रद्धादि )-वर्द्धनं मनुष्येष्वेव भवति।

**अशैक्षो नव निश्रित्य भूमीः;**

अनागम्य-ध्यानान्तर-ध्यानचतुष्टया ऽऽरूप्यत्रयेति नव भूमीः निश्रित्य अशैक्ष इन्द्रियं वर्द्धयति।

**शैक्षस्तु षट्;**

आरूप्यत्रयं वर्जयित्वा, षड् भूमीर्निश्रित्य शैक्षो वर्द्धयति।

**[ यतः ] ॥६१॥**

**सविशेषं फलं त्यक्त्वा फलमाप्नोति वर्द्धयन्।**

वृद्धिगतेषु इन्द्रियेषु शैक्षः तदेकं फलं ( सकृदागामिफलं ) जहाति, यत्तेन मृद्विन्द्रियेणासादितम्। फलविशिष्टं चापि जहाति। “फलविशिष्टं प्रथमध्यानादि-प्रहाणाय प्रयोगानन्तर्य-विमुक्ति-विशेष-

मार्ग-लक्षणम् ।" इत्थं फलं विशेष-सहितं प्रहाय इन्द्रियं वर्द्धयन् स अधिमात्रेन्द्रियः सगोत्रं एकं फलं लभते ।

**[ द्वौ बुद्धौ श्रावकाः सप्त ते नवविधेन्द्रियाः ]** ॥६२॥

परिहाणि-धर्माणः पञ्च अर्हन्तः, अकोप्यधर्माणश्च द्विविधा इति सप्त श्रावकाः, प्रत्येकबुद्धः, सम्बुद्धश्चेति नवानां पुद्गलानां इन्द्रियाणि मृदुमृद्वादीनि भवन्ति । तत्र सम्बुद्धस्य अधिमात्राधिमात्रं, प्रत्येकबुद्धस्य अधिमात्रमध्यं, अकोप्य-धर्मणो ऽधिमात्र-मृदु ... ।

सामान्यतः सप्त आर्या भवन्ति—१ श्रद्धानुसारी, २. धर्मानुसारी ३. श्रद्धाधिमुक्तः, ४. दृष्टिप्राप्तः, ५. कायसाक्षी, ६ प्रज्ञाविमुक्तः, ७. उभयतोभागविमुक्तः ।

**[प्रयोगा-ऽक्ष-समापत्ति-विमुक्त्यु-भयभाविताः ।**
**पुद्गलाः सप्त ];**

ते श्रद्धानुसार्यादयः सप्त पुद्गलाः प्रयोगतः, इन्द्रियतः, समापत्तितः, विमुक्तितः, समापत्ति-विमुक्तितश्च भवन्ति । तत्र श्रद्धा-धर्मानुसारिणौ प्रयोगतः; श्रद्धाधिमुक-दृष्टिप्राप्तौ ( ६ : ३१ ) इन्द्रियतः ( =श्रद्धादिभ्यः ); कायसाक्षी निरोधसमापत्तितः (६ : ४३, ८ : ३३); प्रज्ञाविमुक्तः ( ६ : ६४ ) विमुक्तितः; उभयतोभागविमुक्तः (६ : ६४) निरोधसमापत्ति-विमुक्तितः ।

**[ षड् वैते ];**

वस्तुतस्ते सप्त षड् भवन्ति । ते चाग्रे ।

**[ एवं मार्गत्रये द्विकम् ]** ॥६३॥

दर्शनमार्गे ( १, २ ) श्रद्धा-धर्मानुसारिणौ द्वौ पुद्गलौ, भावनामार्गे ( ३, ४ ) श्रद्धाधिमुक-दृष्टिप्राप्तौ, अशैक्षमार्गे ( ५, ६ ) समया-ऽसमय-विमुक्तौ ।

**निरोधलाभ्युभयतोविमुक्तः [ प्रज्ञयेतरः ] ।**

निरोध-समापत्ति( ६ : ४३ )-लाभी उभयतोभाग विमुक्त उच्यते, अयं हि समाधिना (=भावनया) प्रज्ञया च क्लेशावरणात् विमोक्षावरणाच्च विमुक्तः । प्रज्ञाविमुक्तः, केवलं प्रज्ञया क्लेशावरणात् ।

[ समापत्तीन्द्रियफलैः शैक्षस्य परिपूर्णता ] ॥६४॥

समापत्ति-पूर्त्या, इन्द्रिय ( = श्रद्धादि -पूर्त्या, फल-पूर्त्या च शैक्षः परिपूर्णो भवति। फलदृष्ट्या पूर्णः श्रद्धाधिमुक्तः ( ६ : ३१ ) अनागामी, यश्च न कायसाक्षी ( ६ : ४३ )। इन्द्रियदृष्ट्या पूर्णः दृष्टिप्राप्तः ६ : ३२ ) कामधात्वविरक्तः। फलेन्द्रियोभयदृष्ट्या दृष्टिप्राप्तोऽनागामी कायसाक्षिभिन्नः। फल-समापत्त्युभयदृष्ट्या कायसाक्षी श्रद्धाधिमुक्तोऽनागामी। फले-न्द्रिय-समापत्ति-दृष्ट्या कायसाक्षी दृष्टिप्राप्तोऽनागामी।

[ द्वाभ्यामशैक्षस्य ];

इन्द्रियपूर्त्या, समापत्तिपूर्त्या च अशैक्षस्य पूर्णता। तत्र इन्द्रियदृष्ट्या परिपूर्णः प्रज्ञाविमुक्तः ( ६ : ६४ ) [ असमयविमुक्तः ( ६ : १ ) ] समापत्ति-दृष्ट्या उभयतोभागविमुक्तः [ समयविमुक्तः ]। इन्द्रियसमापत्त्युभय-दृष्ट्या उभयतोभागविमुक्तः यो असमयविमुक्तोऽपि।

लौकिक-लोकोत्तर-दर्शन-भावना-ऽशैक्ष्य-प्रयोगाऽऽनन्तर्य-विमुक्ति-विशेषा इति मार्गा हि उक्ताः। तत्र—

[ चतुर्विधो मार्गः समासतः।
सविशेष-विमुक्त्या-ऽऽनन्तर्य-प्रयोग-साह्वयः ] ॥६५॥

( ४ ) प्रयोगमार्गो यस्मादानन्तर्यमार्गोत्पत्तिः। ( ३ ) आनन्तर्यमार्गः ( ६ : २८, ६ : ६४ ) येन आवरण-प्रहाणम्। आवरण-नाशानन्तरं ( २ ) विमुक्ति-मार्गः। ( १ ) सर्वतो भिन्न उत्कृष्टश्च विशेषमार्गः। विमुक्तिविशेषमार्गः, ताभ्यां निरुपाधिशेषे निर्वाणे प्रवेशः। मार्गः प्रतिपदप्युच्यते; तेन हि निर्वाणं प्रतिपद्यते।

चत्वारो मार्गाः—सुखा प्रतिपद्, दुःखा प्रतिपद्, धंधाभिज्ञा, क्षिप्राभिज्ञा च। तत्र—

ध्यानेषु मार्गः प्रतिपद् सुखा;

ध्यानेषु प्रयोगादयः चतुर्ध्यानमार्गाः सुखा प्रतिपद्। "अंगपरिग्रह ( ८ : १,१० ) शमथ–विपश्यना समताभ्यां अयत्नवाहित्वात्।

[ दुःखाऽन्यभूमिषु ]।

अनागम्य-ध्यानान्तरा-ऽऽरूप्य-मार्गाः दुःखा प्रतिपद्, अंगपरिग्रह-शमथ-विपश्यनासमताभ्यां असमन्वितत्वात् ।

[ धंधाभिज्ञा मन्दबुद्धेः क्षिप्राभिज्ञेतरस्य तु ] ॥६६॥

मन्दबुद्धेः पुद्गलस्य धंधाभिज्ञा भवति, तीक्ष्णबुद्धेस्तु क्षिप्राभिज्ञा ।

[ क्षयानुत्पादयोर्ज्ञानं बोधिः ] ;

आस्रवक्षयज्ञानं अनुत्पादज्ञानं च बोधिरुच्यते । सा च त्रिविधा श्रावक-बोधिः, प्रत्येकबुद्ध-बोधिः, अनुत्तरा सम्यक् सम्बोधिश्च ।

तदानुलोम्यतः ।

सप्तत्रिंशत्तु तत्पक्षाः ,

बोधेरनुकूल-भावात्, सप्तत्रिंशत् बोधिपक्ष्या धर्मा भवन्ति ।

[ नामतो द्रव्यतो दश ] ॥६७॥

ते सप्तत्रिंशत् बोधिपक्ष्या धर्मा नामतो वस्तुतश्च दश भवन्ति ।

श्रद्धा वीर्यं स्मृति-शान्तिः प्रज्ञा प्रीतिरुपेक्षणम् ।
प्रश्रब्धिः शील-संकल्पौ ,

श्रद्धादयो दश बोधिपक्ष्याः । उपेक्षणं = उपेक्षा । शान्तिः = समाधिः ।

प्रज्ञा हि स्मृत्युपस्थितिः ॥६८॥

वीर्यं सम्यक्प्रहाणाख्यं ऋद्धिपादाः समाधयः ।

यथाक्रमं स्मृत्युपस्थानानि, सम्यक्प्रधानानि, ऋद्धिपादाः, स्वभावतो भवन्ति प्रज्ञा-वीर्य-समाधयः । १. इत्थं श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञा इति पंच पंचेन्द्रिय-पंचबल-समन्विताः । तत्र प्रज्ञायां (क) चत्वारि स्मृत्युपस्थानानि, (ख) एकं बोध्यंगं, धर्मप्रविचय-सम्बोध्यंगं, (ग) मार्गाङ्गेष्वेकं सम्यग्दृष्टिः । वीर्ये च (क) चत्वारि सम्यक्-प्रधानानि, (ख) वीर्य-सम्बोध्यंगं, (ग) मार्गांगेषु सम्यग्व्यायाम । समाधौ—(क) चत्वारः ऋद्धिपादाः, (ख) बोध्यंगेषु समाधिसंबोध्यंगं, (ग) मार्गांगेषु सम्यक्समाधिः ।

स्मृतौ—(क) बोध्यंगेष्वेकं स्मृतिसम्बोध्यंगं, (ख) मार्गांगेषु एकं सम्यक् स्मृतिः।

२. बोध्यंगेषु प्रीतिसम्बोध्यंगं, प्रश्रब्धिसम्बोध्यंगं, उपेक्षा-सम्बोध्यंगं इति त्रयम्। मार्गांगेषु सम्यक्संकल्पः, शीलांगं (=सम्यग्वाक्, सम्यक्कर्मान्तं, सम्यगाजीवः) इति द्वयं चेति पंच।

इत्थं प्रज्ञादय पंच, इमे च पंच सर्वे दशपदार्था बोधिपक्ष्या धर्माः।

**प्रधानग्रहणे [ नैते ] सर्वे प्रायोगिका गुणाः ॥६९॥**

प्रधानग्रहणेन एते सर्वे बोधिपक्ष्याः प्रयोगतो (२ : ७१) जाता गुणा एव सन्ति। वीर्यमेव सम्यक्प्रधानम्। समाधिरेव ऋद्धिपादः, तत्प्रतिष्ठितत्वात्। श्रद्धैवेन्द्रियम्।

**आदिकर्मिक-निर्वेधभागीयेषु प्रभाविताः।**
**भावनायां च दृशि च सप्तवर्गा यथाक्रमम् ॥७०॥**

(१) आदिकर्मिके, (२-५) निर्वेधभागीयेषु चतुर्षु, (६ भावना-मार्गे, (७) दर्शनमार्गे चेति सप्तवर्गेषु क्रमश इमे विभज्यन्ते। तद्यथा—

१. आदिकर्मिके, स्मृत्युपस्थानानि।
२. उष्मगते सम्यक्प्रधानम्।
३. मूर्ध्नि ऋद्धिपादाः।
४. क्षान्तौ श्रद्धावीर्यादीन्द्रियाणि।
५. अग्रधर्मेषु बलानि।
६. भावनामार्गे बोध्यंगानि।
७. दर्शनमार्गे मार्गांगानि।

**अनास्रवाणि बोध्यंगमार्गांगानि;**

बोध्यंगानि मार्गांगानि च केवलं अनास्रवाणि दर्शन-भावना-मार्गस्थितिकत्वात्।

**द्विधेतरे।**

अन्ये बोधिपक्ष्या द्विविधाः सास्रवा अनास्रवाश्च।

**[ ते सर्वे प्रथमध्याने ];**

सर्वे सप्तत्रिंशत् प्रथमेध्याने भवन्ति ।

[ अनागम्ये प्रीतिवर्जिताः ] ॥७१॥

प्रीति-सम्बोध्यंगं प्रहाय अन्ये ऽनागम्ये भवन्ति ।

[ द्वितीये ] संकल्प-वर्ज्याः ;

द्वितीयध्याने संकल्प-मार्गांगं विहायान्ये षट्त्रिंशत् बोधिपाक्षिका भवन्ति ।

[ द्वयोस्तद् द्वयवर्जिताः ] ।

तृतीये चतुर्थे च ध्याने प्रीतिं संकल्पं च विहाय पंचत्रिंशत् बोधिपाक्षिका भवन्ति ।

[ ध्यानान्तरेऽपि ] ;

त एव पंच-त्रिंशद् ध्यानान्तरेऽपि ।

[ शीलांग च त्यक्त्वाऽऽरूप्यगे त्रये ] ॥७२॥

आकाशानन्त्यायतन-विज्ञानानन्त्यायतना-ऽऽकिंचन्यायतनेषु त्रिषु आरूप्येषु प्रीतिं, संकल्पं, शीलांगत्रयं ( सम्यग्वाक्-सम्यक्कर्मान्त-सम्यगाजीवान् ) च त्यक्त्वा शेषा द्वात्रिंशद् बोधिपाक्षिका भवन्ति ।

कामधातौ भवाग्रे च बोधिमार्गांग-वर्जिताः ।

बोध्यंगं ( ७ ) मार्गांगं ( ८ ) च विहाय अवशिष्टा द्वाविंशति बोधिपाक्षिकाः भवाग्रे कामधातौ च भवन्ति ।

त्रिसत्य-दर्शने शील-धर्मावेत्य-प्रसादयोः ॥७३॥
लाभो मार्गाभिसमये बुद्ध-तत्संघयोरपि ।

प्रथमानि त्रीणि आर्यसत्यानि ( ६ : २७ ) यदाऽधिगच्छति, तदैवायं धर्मे ऽवेत्य प्रसादं लभते शीले च । यदा च चतुर्थार्यसत्यस्य मार्ग-सत्यस्य साक्षात्कारो जातः, तदा बुद्धे श्रावकसंघे च अवेत्य प्रसादस्य लाभः ।

धर्मः सत्यत्रयं [ बोधिसत्त्व-प्रत्येकबुद्धयोः ।
मार्गश्च ] ;

त्रीणि सत्यानि, प्रत्येकबुद्धस्य बोधिसत्वस्य मार्गश्च धर्म उच्यते।

[ द्रव्यतस्तु द्वे श्रद्धा शीलं च ];

चत्वारि सत्यदर्शनानि हि अवेत्य-प्रसादस्य विषयाः, तेन धर्मस्याऽपि चत्वारो भेदाः। परं ते चत्वारो वस्तुतो द्वे एव—श्रद्धा शीलं चेति। बुद्ध-धर्म-संघविषये ऽवेत्य-प्रसादः श्रद्धा एव। आर्य-शीलं च शीलमेव।

[ निर्मलाः ]।

अवेत्यप्रसादा अनास्रवा एव भवन्ति न सास्रवाः।

[ बद्धत्वान्नोक्ता विमुक्तिरंगं शैक्षस्य ]

शैक्षो बद्धो भवति न मुक्तः, अत एव विमुक्तिः शैक्षस्य अग-त्वेन नोक्ता। क्लेशार्द्धविमुक्तो हि न विमुक्तो भवति। अशैक्षस्तु सर्वक्लेशविनिर्मुक्तः।

[ सा द्विधा ] ॥७५॥

सा विमुक्तिर्द्विधा भवति, संस्कृता असंस्कृता च।

असंस्कृता क्लेशहानं अधिमोक्षः [तु] संस्कृता।

क्लेशानां प्रहाणं ( = प्रतिसंख्या-निरोधः ) असंस्कृता विमुक्ति-रुच्यते। अशैक्षस्य अधिमोक्षश्च संस्कृता विमुक्तिः।

[ साङ्ग ];

सा संस्कृता विमुक्तिरशैक्षस्य अंगमुच्यते, यतः सम्यग्-दृष्ट्यादीनि अंगानि संस्कृतानि सन्ति।

[ सैव विमुक्तिर्द्वे ];

सैव संस्कृता विमुक्तिः, चेतोविमुक्तिः प्रज्ञाविमुक्तिरिति द्वि-धोच्यते। राग-विरागात् चेतोविमुक्तिः। अविद्याविरागात् प्रज्ञा-विमुक्तिः। अयमेव विमुक्तिस्कन्धः।

ज्ञानं बोधिर्यथोदिता ॥७६॥

पूर्वोक्ता बोधिरेव सम्यग्ज्ञानम् । क्षयज्ञानं अनुत्पादज्ञानं हि बोधिः ( ६ : ६७ ) । इदं च सम्यग्ज्ञानं अशैक्षस्य द्वितीयं अंगम् ।

[ विमुच्यते जायमानं चित्तं अशैक्षमावृतेः ] ।

अशैक्षस्य चित्तं जायमान-काल एव क्लेशावरणात् विमुच्यते ।

निरुध्यमानमार्गस्तु प्रजहाति तदावृतिम् ॥७७॥

प्रत्युत्पन्नो निरुध्यमानो मार्ग एव तस्य आवरणं जहाति, नातीतो नानागतः ।

[ असंस्कृता धातुरिति ];

असंस्कृता विमुक्तिस्त्रयो धातवः—प्रहाणधातुः, विरागधातुः, निरोधधातुश्च ।

विरागो रागसंक्षयः ।

तत्र रागविनाश एव विराग-धातुः ।

[ प्रहाणधातुरन्येषां ];

अन्येषां क्लेशानां प्रहाणं प्रहाणधातुः ।

[ निरोध इति ] वस्तुनः ॥७८॥

रूपानास्रवादीनां विनाशो निरोधधातुः ।

निर्विद्यते दुःख-हेतु-क्षान्ति-ज्ञानैः ;

दुःखसत्येन, समुदयसत्येन, क्षान्त्या, ज्ञानेन च पुद्गलो निर्वेदं लभते ।

विरज्यते ।

सर्वैर्जहाति यैः ;

यैः सर्वैर्धर्मैः ( दुःख-समुदय-निरोध-मार्गज्ञान-क्षान्तिभि ) रयं क्लेशान् जहाति, तैरेवायं विरागमपि लभते ।

एवं चतुष्कोटिकसम्भवः ॥७९॥

१. क्षान्त्या दुःख-समुदय-ज्ञानाभ्यां च निर्वेदं लभते ।

२. क्षान्त्या निरोधमार्गज्ञानाभ्यां च क्लेशान् प्रजहाति ततो वैराग्यं लभते।

३ क्षान्त्या दुःख-समुदय-ज्ञानाभ्यां च क्लेशान् जहाति, निर्वेदं वैराग्यं च लभते।

४. क्षान्त्या निरोध-मार्ग-ज्ञानाभ्यां च अनास्रवो न निर्वेदं न च वैराग्यं लभते।

( इति षष्ठं कोशस्थानम् )।



# सप्तमं कोशस्थानम् ।

## ज्ञानम् ।

**नाऽमलाः क्षान्तयो ज्ञानं ;**

अनास्रवाः क्षान्तयो न ज्ञानं, सास्रवाः क्षान्तयस्तथा भवितुमर्हन्ति । अष्टावभिसमयान्तिकाः क्षान्तयः ( ६ : २५,२६ ) अनास्रवाः क्षान्तयः ।

**क्षयानुत्पादधीर्न दृक् ।**

क्षयज्ञानं अनुत्पादज्ञानं ( ६ : ६७ ) च न दर्शनम् । एतद् द्वयमेव बोधिः ।

**तदन्योभयथाऽऽर्या धीः ;**

ततो भिन्ना आर्या ( = अनास्रव )-प्रज्ञा दर्शनं ज्ञानं वा भवितुमर्हति । उपनिध्यानसमन्विता चेत् दर्शनं, विचिकित्साविनिवृत्ता चेत् ज्ञानम् ।

**अन्या ज्ञानं ;**

अन्या अनार्या ( = सास्रवा ) प्रज्ञा ( लौकिकी चक्षुर्विज्ञानादिसंप्रयुक्ता ) ज्ञानम् ।

**दृशश्च षट् ॥ १ ॥**

षट् सास्रवा लौकिक्यः ( सत्कायदृष्ट्यादि ( ५ : ७ )-प्रज्ञा, लौकिकी सम्यग्दृष्टिश्च ( १ : २१ ), प्रज्ञा ज्ञानं दर्शनं च यथायोग्यं भवन्ति ।

**[ सास्रवाऽनास्रवं ज्ञानं ];**

ज्ञानं द्विविधं सास्रवं ( = लौकिकं), अनास्रवं ( = लोकोत्तरं) च ।

**[ आद्यं ] संवृतं [ उच्यते ] ।**

सास्रवं ज्ञानं संवृतं उच्यते । संवृतं = लोकसंवृति ज्ञानम् ।

**[ अनास्रवं द्विधा धर्मे ज्ञानमन्वय एव च ] ॥ २ ॥**

धर्मज्ञानं अन्वयज्ञानं चेति द्विविधं अनास्रवज्ञानम्। इत्थं त्रिविधमपि ज्ञानं—लोकसंवृतिज्ञानं, धर्मज्ञानं, अन्वयज्ञानं चेति।

**[ सांवृत-गोचरः सर्वः ];**

सर्वे संस्कृता असंस्कृताश्च धर्मा संवृतिज्ञानस्य विषयभूताः।

**[ धर्मसंख्यस्य गोचरः।**

**काम-दुःखादि ]**

धर्मज्ञानस्य विषयाः—कामधातोः दुखं, दुःखसमुदयः, दुःख-निरोधः, दुःख-निरोधमार्गश्च।

**[ अन्वयस्य तूर्ध्वदुःखादि-गोचरः ] ॥ ३ ॥**

अन्वयज्ञानस्य विषयाः—रूपाऽऽरूप्यधात्वोः दुःखं, दुःखसमुदयः, दुःखनिरोधः, दुःखनिरोध-मार्गश्च।

**[ सत्यभेदत एवैते चत्वारि ];**

एते द्वे एव ज्ञाने सत्यभेदात् चत्वारि भवन्ति। तद्यथा—दुःखज्ञानं ( = दुःखेधर्मज्ञानं + दुःखेऽन्वयज्ञानं ), समुदयज्ञानं, निरोध-ज्ञानं, मार्गज्ञानं; दुःखादीनि चत्वारि हि तयोर्विषयाः।

**एते चतुर्विधे।**

**[ क्षया-ऽनुत्पादयोर्ज्ञाने ],**

स्वविषय-सम्बन्धेन चतुर्विधम् एतद् द्वयं धर्मज्ञानं = अन्वय-ज्ञानं च क्षयज्ञानं = अनुत्पादज्ञानं चोच्यते।

**ते पुनः प्रथमोदिते ॥ ४ ॥**

**[ दुःखहेत्वन्वयज्ञानं ];**

क्षयज्ञानं अनुत्पादज्ञानं च प्रथमोत्पन्नक्षणे दुःखान्वयज्ञानसमु-दयाऽन्वयज्ञानस्वरूपे भवतः।

वज्रोपमसमाधेः ( ६ : ४४ ) अनन्तरं क्षयज्ञानं, ततो ऽनुत्पाद-ज्ञानम्।

चतुर्भ्यः परचित्तवित् ।

धर्मा-ऽन्वय-मार्ग-संवृतिज्ञानेभ्यश्चतुर्भ्यः अनन्तरं परचित्तज्ञानं जायते ।

**(नोर्ध्वं सत्त्वा-ऽक्ष-भू-चित्तं) [ क्षीणाजातं न वेत्ति सः ] ॥५॥**

(१) अनागाम्यर्हत्-प्रत्येकबुद्ध-सम्यक्सम्बुद्धेषु निम्नस्थस्य परचित्तज्ञानं उपरिस्थितस्य चित्तेन प्रभवति । अतीतं अनागतं चित्तमपि न वेत्ति । (२) मृद्विन्द्रियस्याऽऽर्यस्य ( = श्रद्धाविमुक्त-समयविमुक्तयोः ६ : ३१) परचित्त-ज्ञानं अधिमात्रेन्द्रियस्य (=दृष्टिप्राप्तासमयविमुक्तयोः) चित्तेनालम् (३) निम्नभूमिक-परचितज्ञानं नोर्ध्व-भूमिक-परचित्त वेत्ति।

**[ न धर्मान्वय-धी-पक्षावन्योन्यं ];**

धर्मज्ञान-स्वभावं परचित्तज्ञानं अन्वयज्ञानस्वभावं परचित्तं न वेत्ति, तथैव अन्वयज्ञानस्वभावं परचित्तज्ञानं धर्मज्ञान-स्वभावं परचित्तं न वेत्ति; यत एतद्द्वयस्याऽपि ज्ञानस्य प्रत्याख्येया धर्माः कामधातुकाः, रूपा-ऽऽरूप्यधातुका वा विभिन्नधातुका भवन्ति ।

**[ वेत्ति दृक् क्षणौ ।**

**श्रावकः, खड्गकल्पः त्रीन् , सर्वान् बुद्धोऽप्रयोगतः ] ॥ ६ ॥**

श्रावकः दर्शन-मार्गे प्रयस्य द्वौ क्षणौ एव वेत्ति; प्रत्येकबुद्धस्तु प्रयोगतः ( प्रयस्य ) त्रीन् क्षणान्; सम्यक् सम्बुद्धस्तु प्रयोगं विनैव सर्वान् चित्तक्षणान् परस्य वेत्ति ।

**( क्षयज्ञानं सत्यस्थितौ ज्ञात-हीनादि-निश्चयः ।**

**अनुत्पादज्ञानं नान्यज्ज्ञेय-हेयादि-निश्चयः ) ॥ ७ ॥**

दुःखादिकं मे ज्ञातं, क्षीणा मे जातिरित्यादि निश्चयः क्षयज्ञानं; न अन्यद् ज्ञेयं न चान्यन्मया प्रहातव्यं अवशिष्यत इति ज्ञानं अनुत्पादज्ञानम् ।

दश हि ज्ञानानि—धर्मा-ऽन्वय-लोकसंवृति-परचित्त-दुःख-समुदय-निरोध-मार्ग-क्षया-ऽनुत्पादज्ञानानि ।

१. लोकसंवृति-ज्ञानं, संवृति-ज्ञानं सास्रव-परचित्त-ज्ञानांश मिश्रितम् ।

२. **धर्मज्ञानं,** एकं ज्ञानं, दुःख-समुदय-निरोध-मार्ग-परचित्त-क्षया ऽनुत्पादेति सप्तानां ज्ञानानां कामधातुगतैकांशेन मिश्रितम्।

३. **अन्वयज्ञानं,** पूर्ववत् कामधातुगतैकांशस्थाने रूपाऽऽरूप्यधातुगतैकांश-मिश्रणेन।

४. **दुःखज्ञानं,** एकं ज्ञानं, धर्मा-ऽन्वय-क्षया-ऽनुत्पादज्ञानानां दुःख-सत्यविषयकांशेन मिश्रितम्।

५-६. **समुदयज्ञानं, निरोधज्ञानं** अपि तथैव।

७. **मार्गज्ञानं,** एकं ज्ञानं धर्मा-ऽन्वय-क्षया-ऽनुत्पाद-परचित्त-ज्ञानां पंचानां एकभागेन सम्पृक्तम्।

८. **परचित्तज्ञानं,** एकं ज्ञानं धर्मा-ऽन्वय-मार्ग-संवृति-ज्ञानानां चतुर्णां एकभागेन समन्वितम्।

९. **क्षयज्ञानं,** एकं ज्ञानं धर्मा-ऽन्वय-दुःख-समुदय-निरोध-मार्ग-ज्ञानानां षण्णां एकभागेन सहितम्।

१०. **अनुत्पादज्ञानं,** तथैव।

**[स्वभावात् प्रतिपक्षत्वात्] आकाराकार-गोचरात्।**
**प्रयोगात् कृतकृत्यत्वात् हेतुविस्तारतो दश ॥ ८॥**

१. स्वभावात्, संवृतिज्ञानं अपरमार्थ (लौकिक)-ज्ञान-स्वभावात्।

२. प्रतिपक्षत्वात्, धर्मज्ञानं कामधातु-प्रतिपक्षः, अन्वयज्ञानं च ऊर्ध्वधातु-प्रतिपक्षः।

३. आकारात्, (७ : १३) दुःखज्ञानं समुदयज्ञानं च यद्यपि तानेव पंच उपादान-स्कन्धान् विषयीकुरुतः, तथापि परं आकारतो भिन्ने।

४. गोचरात् (=आलम्बनात्), निरोधज्ञानं मार्गज्ञानं च विषयतो भिद्येते।

५. प्रयोगात्, परचित्तज्ञानं, परस्य चित्तं ज्ञातुं प्रयोगोऽनुष्ठीयते।

६. कृतकृत्यत्वात्, क्षयज्ञानं, प्रथमं ज्ञानं कृतकृत्य-सन्ततौ उत्पाद्यम्।

७. हेतुविस्तारतः, अनुत्पादज्ञानं सर्वानास्रवज्ञानहेतुकत्त्वात् ।

**धर्मज्ञानं निरोधे यन्मार्गे वा भावना पथे ।**

**त्रिधातु-प्रतिपक्षस्तत् ;**

निरोधे धर्मज्ञानं मार्गे धर्मज्ञानं वा भावनामार्गे साक्षात्क्रियते । इदं द्वयं च त्रैधातुकानां क्लेशानां प्रतिपक्षभूतम् ।

**नान्वयं कामधातुके ॥ ९ ॥**

अन्वयज्ञानं न कामधातुके क्लेशे प्रतिपक्षः ।

**[ धर्मज्ञाना-ऽन्वयज्ञानं षोडशाकृति ];**

तयोः षोडश आकाराः वक्ष्यमाणाः ( ७ : १३ ) ।

**[ संवृतम् ।**

**तथाऽन्यथाऽपि ];**

संवृति-ज्ञानस्य षोडश आकाराः ततोऽन्येऽपि भवन्ति ।

**चत्वारि स्व-स्व-सत्याकृतीनि तु ॥१०॥**

तत्र दुःख-समुदय-निरोध-मार्ग-ज्ञानानि चत्वारि स्व-सत्याकाराणि भवन्ति ।

**[ तथा परमनोज्ञानं अमलं ];**

अनास्रवं परचित्तज्ञानं अपि चतुः सत्यसम्बन्धेन चतुराकारम् ।

**[ समलं पुनः ।**

**ज्ञेय-स्वलक्षणाकारं ]**

सास्रवं परचित्तज्ञानं, ज्ञेय (=परचित्त-चैत्त )-स्व-स्वरूपाकारं भवति ।

**[ प्रत्येकवस्तुगोचरम् ] ॥११॥**

सास्रवं अनास्रवं वा उभयविधं परचित्तज्ञानं एकं एकं वस्तु गोचरत्वेन (=आलम्बनत्वेन ) गृह्णाति । यदा एकं चित्तं विषयीकरोति न तदाऽन्यं चैत्तं विषयीकरोति । तथा एकस्य चैत्तस्य (यथा वेदनायाः) विषयीकरणकाले नान्यं ( यथा संज्ञां ) चैत्तं विषयीकरोति ।

**[शेषं चतुर्दशाकारं शून्या-ऽनात्मक-वर्जितम्]।**

शेषं क्षयज्ञानं अनुत्पादज्ञानं च । शून्या-ऽनात्मकेत्याकारद्वयं परिवर्ज्य चतुर्दश (७ : १३) आकारा क्षया-ऽनुत्पाद-ज्ञानयोः। "क्षीणा मे जातिः, उषितं ब्रह्मचर्यं, कृतं करणीयं, नापरं अस्माद् भवं प्रजानामि" इति क्षयज्ञानम् ।

**(नाऽमलः षोडशातीतो ऽस्तीत्यन्ये तु शास्त्रतः) ॥१३॥**

षोडशाकारेभ्यो भिन्नोऽनास्रव आकारो नास्तीति काश्मीरका आचार्या वदन्ति। अन्ये त्वाचार्या मूलशास्त्रतः— 'अनित्यतो दुःखतः शून्यतोऽनात्मतो हेतुतः समुदयतः प्रभवतः प्रत्ययतोऽस्त्येतत्स्थानं अस्त्येतद्वस्तु योगविहिततो विजानीयात्" ("अस्त्येतत्स्थानं इत्यस्त्येतल्लक्षणं इत्यर्थः। अस्त्येतद्वस्तु इत्ययं हेतुरित्यर्थः। योगविहिततो विजानीयादिति अविपरीततो विजानीयात्) षोडशाधिकतां अभ्युपगच्छन्ति ।

**द्रव्यतः षोडशाकाराः ;**

वैभाषिका वस्तुतः षोडश आकारान् स्वीकुर्वन्ति। तत्र।

दुःखसत्ये—

१. अनित्यं, प्रत्ययप्रतिबद्धजन्मत्वात् ।

२. दुःखं, पीडनात्मकत्वात् ( ६ : ३ )।

३. शून्यं, आत्मीयदृष्टिविपक्षत्वात् ।

४. अनात्मकं, आत्मदृष्टिविपक्षत्वात् ।

समुदयसत्ये—

१. हेतुः, बीजधर्म-योगेन (= न्यायेन )।

२. समुदयः, (= उद्गमः ) प्रादुर्भावयोगेन ।

३. प्रभवः, सन्तति-योगेन ।

४. प्रत्ययः, अभिनिष्पादनयोगेन ।

निरोधसत्ये—

१. निरोधः, अनास्रवस्कन्ध-क्षयात् ।

२. शान्तं, राग-द्वेष-मोह-निरोधात् ( ८ : २६ ) ।

३. प्रणीतं, निरुपद्रवत्वात् ।

४. निःसरणं, सर्वदुःखकारण-विमुक्तत्वात् ।

मार्गसत्ये—

१. मार्गः, निर्वाणं प्रति गमनात् ।

२. न्यायः, उपाययुक्तत्वात् ।

३. प्रतिपद्, निर्वाणस्य सम्यक् प्रतिपादनार्थेन ।

४. नैर्याणिकं, अत्यन्तं निर्याण-प्रभुत्वात् ।

**( ते च प्रज्ञा ) ;**

सर्वे आकारा प्रज्ञैव ।

**( च गृह्या ये ।**

**सर्वेऽपि सालम्बाः );**

सर्वेऽपि सालम्बना धर्माः ( चित्तचैत्ताः ), ये गृह्याः सन्ति ।

**( सन्तः सर्वे सालम्बनग्रहाः ) ॥१३॥**

सर्वे विद्यमानाः सालम्बनधर्मैर्गृहीता भवन्ति । इत्थं १. प्रज्ञा आकारोऽस्ति । २. अन्ये चित्त-चैत्ताः प्रज्ञासंप्रयुक्ताः ग्राहक-गृह्य-भूताः । ३. अन्ये सर्वे संस्कृताऽसंस्कृता धर्मा केवलं गृह्या एव ।

**आद्यं [ त्रिधान्यानि कुशलानि ];**

आद्यं लोकसंवृतिज्ञानं त्रिधा, कुशलं अकुशलं अव्याकृतं च । अन्यानि नव ज्ञानानि ( ७ : २ ) केवलं कुशलानि ।

**[ आद्यं सर्वभूमिषु ];**

लोकसंवृतिज्ञानं कामधातुतो यावद्भवाग्रं सर्वासु भूमिषु भवति ।

**धर्माख्यं षट्सु ;**

धर्मज्ञानं ध्यानचतुष्टये, अनागम्ये, ध्यानान्तरे च भवति ।

**[ नवसु त्वन्वयाख्यं ];**

अन्वयज्ञानं पूर्वोक्तेषु षट्सु आरूप्यत्रये चेति ।

[ तथैव षट् ] ॥१४॥

दुःख-समुदय-निरोध-मार्ग-क्षया-ऽनुत्पादेति षड् ज्ञानान्यपि तथैव षट्सु नवसु भूमिषु लभ्यन्ते। धर्मज्ञानांगभूतानीमानि षट्सु, अन्वयज्ञानांगभूतानि नवसु।

[ चतुर्ध्याने परमनोज्ञानं ];

चतुर्षु ध्यानेषु अभ्यस्तेषु परचित्तज्ञानं जायते।

( रूपासकामजे )।

परचित्तज्ञानं च काम-रूपधातु-गत-सत्त्वानां भवति।

[ कामाश्रयं तु धर्माख्यं ];

धर्मज्ञानं कामधातुगत-सत्त्वस्य जायते; न तत ऊर्ध्वगत-सत्त्वानाम्।

[ अन्यद् धातुत्रयाश्रयम् ] ॥१५॥

परचित्त-धर्मज्ञानव्यतिरिक्तान्यष्टावन्यानि ज्ञानानि त्रैधातुकानामपि सत्त्वानां भवति।

[ स्मृत्युपस्थानमेकं निरोधधीः ],

निरोधज्ञानं धर्मस्मृत्युपस्थानं अस्ति।

[ परचित्तधीः।

त्रीणि ];

परचित्तज्ञानं वेदना-संज्ञा काय-स्मृत्युपस्थानानि।

[ शेषाणि चत्वारि ];

निरोध-परचित्त-ज्ञान-व्यतिरिक्तानि अष्टौ ज्ञानानि चत्वारि स्मृत्युपस्थानानि समुपगृह्णन्ति।

[ धर्मधी-गोचरो नव ] ॥१६॥

अन्वयज्ञानमन्तरेण नवज्ञानानि धर्मज्ञानविषयभूतानि।

[ नव मार्गा-ऽन्वयधियोः ];

धर्मज्ञान-व्यतिरिक्तानि नव अन्वयज्ञानस्य विषयाः। लोकसंवृति-ज्ञान-व्यतिरिक्तानि नव मार्गज्ञानस्य विषयाः।

[ दुःख-हेतुधियोर्द्वयम् ] ।

लोकसंवृतिज्ञानं सास्रव-परचित्तज्ञानं च दुःख-समुदयज्ञानयोः विषयः ।

[ चतुर्णां दश ];

लोकसंवृति-परचित्त-क्षया-ऽनुत्पादेति चतुर्णां ज्ञानानां दशाऽपि ज्ञानानि विषयाः ।

[ नैकस्य ];

एकस्य निरोधज्ञानस्य न विषयो ज्ञानेषु, तस्य विषयः केवलं प्रतिसंख्यानिरोधः ।

( युगपद्ध तद्विषयो दश ) ॥१७॥

दशधर्मा ज्ञानस्यैक-काले विषयाः ।

[ त्रैधातुकाऽमला धर्मा असंस्कृता द्विधा द्विधा ] ।

अष्टविधासंस्कृता धर्मा, अमला काम-रूपा-ऽऽरूप्येषु वर्तमानाः, चित्तसम्प्रयुक्ताः चित्तविप्रयुक्ताश्च ( २ : २२ )

असंस्कृता धर्मा द्विविधा कुशला अव्याकृताश्च ।

तत्र १. लोकसंवृतिज्ञानं दश धर्मान् विषयीकरोति ।

२. धर्मज्ञानं, कामे चित्तसंप्रयुक्त-चित्तविप्रयुक्तद्वयं, चित्तसंप्रयुक्त-विप्रयुक्तानास्रव ( मार्ग )-धर्मद्वयं, अनास्रवाऽसंस्कृतधर्मं चेति पंच ।

३. अन्वयज्ञानं, सत्त—रूपे द्वयं, आरूप्ये द्वयं, अनास्रवद्वयं, अनास्रवाऽसंस्कृतं च ।

४-५. दुःखज्ञानं समुदयज्ञानं च, षट्—प्रतिधातु द्वयम् ।

६. निरोधज्ञान, कुशलाऽसंस्कृतमेकम् ।

७. मार्गज्ञानं, अनास्रवधर्मद्वयम् ।

८. परचित्तज्ञानं, त्रयं—कामधातुगतचित्तसम्प्रयुक्तं, रूपधातुगतचित्तसम्प्रयुक्तं अनास्रवं च ।

९-१०. क्षयज्ञानं अनुत्पादज्ञानं च, नव, अव्याकृताऽसंस्कृतं विहाय ।

( वेत्त्येकं संवृतिः शेषमस्वरूपं न स्वं यथा ) ॥१८॥

स्वव्यतिरिक्तान् सर्वानेव धर्मान् संवृतिज्ञानं विजानाति, विषयि-विषयभेदात् न संवृतिज्ञानं स्वस्यैव विषयो भवितुमर्हति। "नहि सैव असिधारा तयैव छिद्यते"।

**एकज्ञानान्वितो रागी प्रथमाऽनास्रवक्षणे।**

अवीतराग आर्यो मार्गप्रवेशस्य प्रथमे क्षणे, यदाऽस्य दुःखे धर्मज्ञानक्षान्तिः ( ६ : २५ ) जाता, एकेन ज्ञानेन (= लोकसंवृतिज्ञानेन ) समन्वितो भवति। क्षान्तिर्हि न ज्ञानम् ( ७ : १ )।

**द्वितीये त्रिभिः ;**

द्वितीयक्षणे दुःखेधर्मज्ञानकाले चास्य त्रीणि लोकसंवृतिज्ञानं धर्मज्ञानं दुःखज्ञानं च।

**[ ऊर्ध्वं तु ] चतुर्ष्वें [ कैकवर्द्धितैः ] ॥१९॥**

अग्रे चतुर्षु क्षणेषु ( चतुर्थे, षष्ठे, दशमे, चतुर्दशे च ) एकैकस्य ज्ञानस्य वृद्धिः। तद्यथा—चतुर्थे ( दुःखेऽन्वयज्ञानक्षणे ) अन्वयज्ञानस्य; षष्ठे ( समुदये धर्मज्ञानक्षणे ) समुदयज्ञानस्य; दशमे ( निरोधे धर्मज्ञानक्षणे ) निरोधज्ञानस्य, चतुर्दशे ( मार्गे धर्मज्ञानक्षणे ) मार्गज्ञानस्य। मार्गे धर्मज्ञानक्षणे स सप्तज्ञानान्वितो भवति।

**यथोत्पन्नानि भाव्यन्ते क्षान्तिज्ञानानि दर्शने।**

**[ अनागतानि ] ;**

दर्शनमार्गे अनागतानि क्षान्तिज्ञानानि यथोत्पन्नानि भाव्यन्ते ( "यानि यान्युत्पन्नानि तानि तानि भाव्यन्ते।" ) तद्यथा दुःखे धर्मज्ञानक्षान्ति-काले तज्जातीयामेवानागतां क्षान्तिं अयं भावयति।

**[ तत्रैव ] सांवृतं चान्वयत्रये ॥२०॥**

दर्शन-मार्ग एव दुःख-समुदय-निरोधेषु त्रयाणां अन्वयज्ञानानां क्षणे ( ६ : २६ ) अयं अनागतं संवृतिज्ञानं अधिगच्छति।

**[ ततोऽभिसमयान्ताख्यं ];**

संवृतिज्ञानं अभिसमयान्तिकज्ञानमप्युच्यते, यत इदं एकैकस्य सत्यस्याऽभिसमयान्ते ( साक्षात्कारान्ते ) जायते।

**तदनुत्पत्तिधर्मकम्।**

"दर्शनमार्गलभ्यं तत् तस्य कथं भावनामार्गे सम्मुखीभावो भविष्यति । दर्शनमार्गे चोत्पत्त्यनवकाशोऽस्यास्तीति तदनुत्पत्तिधर्मकम्"।

[ स्वाधोभूमि ];

यद्भूमिको दर्शनमार्गो भावितः, तद्भूमिकं तदधोभूमिकं च अनागतं संवृतिज्ञानं लभ्यते । तद्यथा अनागम्यभूमिक दर्शनमार्गे भाविते अनागतेऽनागम्य-कामधातुभूमिके संवृतिज्ञाने लभ्यन्ते ।

निरोधेऽन्त्यं;

निरोधे ( निरोधेऽन्वयज्ञाने ) भाविते, अन्त्यं स्मृत्युपस्थानं ( धर्मस्मृत्युपस्थानं ) भाव्यते ।



स्वसत्याकृति;

यत्सत्याभिसमयान्ते भावितं संवृतिज्ञानं, तत्सत्याकारं एव भवति, तदालम्बनत्वात् ।

[ यत्नजम् ] ॥२१॥

दर्शनमार्गे भाविते प्रयोगतः ( यत्नतः ) संवृतिज्ञानं जायते; न चोपपत्तिलभ्यं; न च वैराग्यलभ्यम् ।

[ षोडशे षट् सरागेण ],

अवीतरागेण पुद्गलेन षोडशे क्षणे ( मार्गेऽन्वयज्ञानक्षणे ) षड् अनागतानि ज्ञानानि ( धर्मज्ञानं, अन्वयज्ञानं, आर्यसत्यज्ञानचतुष्टयं ) भाव्यन्ते ।

वीतरागेण सप्त तु ।

तस्मिन्नेव क्षणे ( षोडशे ) वीतरागेण ( कामधातुविरक्तेन ) सप्तज्ञानानि ( परचित्तज्ञानसहितानि पूर्वोक्तानि ) भाव्यन्ते ।

सरागभावनामार्गे तदूर्ध्वं सप्त भावना ॥२२॥

षोडशक्षणादूर्ध्वं ( भावनामार्गे यावद्वैराग्यलाभं ) प्रयोगाऽऽनन्तर्यविमुक्ति-विशेषमार्गेषु सप्तानां ज्ञानानां धर्मा-ऽन्वय-सत्य-चतुष्टय-लोकसंवृतिज्ञानानां भावना भवति ।

सप्त भूमिजयो-ऽभिज्ञाऽकोप्याप्त्याकीर्णभाविता ।

आनन्तर्यपथेषु;

आनन्तर्यमार्गेषु तस्य—

१. चतुर्ध्याना-ऽऽरूप्यत्रयेति सप्तभूमिविजयः ( विरागः )।

२. षष्ठीं अभिज्ञां विहाय पंचानां अभिज्ञानां ( ७ : ४२ ) लाभः।

३. आकोप्यता प्रवेशः ( ६ : ५७, ६०, )।

४. आकीर्णभावना ( ६ : ४२ ) शैक्षस्य।

[ ऊर्ध्वमुक्तिमार्गेषु चाष्टसु ] ॥२३॥

भवाग्रस्य अष्टसु प्रथमविमुक्तिमार्गेषु स सप्तज्ञानानि ( धर्मा-ऽन्वय-सत्यचतुष्टय-परचित्तज्ञानानि ) भावयति। भवाग्रप्रतिपक्षत्वात् स न स्मृतिविज्ञानं भावयति।

(शैक्षोऽक्षवर्द्धन-विमुक्तिमार्गे हि षट्, सप्त वा)।

इंद्रियसंचार ( ६ : ६० )-विमुक्तिमार्गे ( तृतीये ) शैक्षोऽवीतरागः ( न अनागामी ) षड् ज्ञानानि भावयति; वीतरागत्वे तु सप्तमं परचित्तज्ञानमपि भावयति।

[ षडानन्तर्य मार्गेषु ]

आनन्तर्यमार्गेषु ( द्वितीये ) शैक्षः षड् ज्ञानानि भावयति।

( भवाग्रविजये तथा ) ॥२४॥

भवाग्रवैराग्यानन्तर्यमार्गे शैक्षः षड् ज्ञानानि भावयति।

( क्षयज्ञानक्षणे नव )

नवमो भवाग्रविजयस्य विमुक्तिमार्गः क्षयज्ञानमुच्यते ( ६ : ४४ )। क्षयज्ञानक्षणे ऽनुत्पादज्ञानं विहायाऽन्यानि नवाऽपि ज्ञानानि भावयति।

( अकोप्यो भावयते दश )।

क्षयज्ञानोत्पत्तौ अनुत्पादज्ञानस्यापि ( ६ : ५० ) लाभात्, अकोप्योर्हन् ( ६ : ५७ ) तदा दश ज्ञानानि भावयति।

( दशाऽकोप्येऽपि नैर्मुक्तं );

इन्द्रियसंचारतो लब्धाऽकोप्यत्वः, तत्संचारस्य ( ६ : ६० ) अन्त्यमार्ग-( नवमविमुक्तिमार्गसंबन्धि ) दश ज्ञानान्यपि भावयति।

प्रोक्तशेषेऽष्ट भावना ॥२५॥

तत्र प्रोक्तशेषाणि ( अनुक्तानि )—

१. नवमः कामधातु-वैराग्य-विमुक्तिमार्गः ।

२ सप्तभूमिवैराग्य - षडभिज्ञा - शैक्षाऽऽकीरणभावना - विमुक्ति - मार्गाः ।

३ अकोप्यत्त्ववाहकेन्द्रियसंचारस्य प्रथमा अष्टौ विमुक्तिमार्गाः ।

४. अनागामिनः प्रयोगमार्गा विशेषमार्गाश्च ।

एतेषु सर्वेषु मार्गेषु क्षया ऽनुत्पादज्ञानस्य विरहितानां अष्टानां अनागतानां ज्ञानानां भावना भवति ।

**यद्वैराग्याय यल्लाभस्तत्रा[ऽध]धश्च भाव्यते ।**

यस्या भूमेर्वैराग्यार्थं यस्या भूमेर्लाभः, तत्र तद्भूमिकानि तदधो-भूमिकानि चानास्रवाणि ज्ञानानि भाव्यन्ते ।

**सास्रवाश्च क्षयज्ञाने;**

क्षयज्ञाने ( ६ : ४४ ) जाते सर्वभूमिकानां सास्रवाणां धर्माणां निरोधो भाव्यते ।

**लब्धपूर्वं न भाव्यते ॥२६॥**

यत् किंचित् ज्ञानं पूर्वलब्धं तन्न भाव्यते, अलब्धमेव भाव्यते ।

**प्रतिलम्भनिषेवाख्या शुभसंस्कृतभावना ।**
**[ सास्रवस्य प्रतिपक्षविनिर्धावनभावना ] ॥२७॥**

"प्रतिलम्भ एव भावना प्रतिलम्भभावना अनागतप्राप्तिरेव भावनेत्यर्थः" । "निषेवणं पुनः पुनः संमुखीकरणम्" । शुभसंस्कृत-धर्माणां भावनोच्यते प्रतिलाभः निषेवणं च । सास्रवधर्माणां भावना प्रतिपक्षः विनिर्धावनं च । विनिर्धावनभावना = क्लेशप्राप्तिच्छेदः ।

**[ बुद्धस्यावेणिका धर्मा अष्टादश बलादयः ] ।**

दश बलानि, चत्वारि वैशारद्यानि, त्रीणि स्मृत्युपस्थानानि, महाकरुणा चेतीमानि अष्टादश बुद्धस्य आवेणिका धर्मा उच्यन्ते ।

**स्थानास्थाने दश ज्ञानान्यष्टौ कर्मफले [ नव ] ॥२८॥**

**ध्यानाऽऽध्यक्षा-ऽधिमोक्षेषु [धातौ च], प्रतिपत्सु[वा] ।**
**दश द्वे संवृतिज्ञाने षड् वा दश वा क्षये ॥२९ ॥**

तानि तथागतस्य दशबलानि—

१. **स्थानाऽस्थानज्ञानबलं**—"तथागतः स्थानं च स्थानतो यथाभूतं प्रजानाति। अस्थानं च अस्थानतः। इदं प्रथमं तथागतस्य बलं, येन बलेन समन्वागतः तथागतोऽर्हन् सम्यक्सम्बुद्ध उदारं आर्षभं स्थानं प्रतिजानाति ब्राह्मं चक्रं, प्रवर्तयति पर्षदि सम्यक् सिंह-नादं नदति।" अत्र दशाऽपि (संवृतादि) ज्ञानानि परिसंख्यां गच्छन्ति।

२. **कर्मविपाकज्ञानबलं**—"तथागतोऽतीतानागतप्रत्युत्पन्नानि कर्मधर्मसमादानानि स्थानतो हेतुतो वस्तुतो विपाकतश्च यथाभूतं प्रजानाति,...इदं द्वितीयं तथागतबलं, येन बलेन...।" मार्गनिरोधज्ञानवर्जितानि अष्टौ ज्ञानानि।

३–६, **ध्यान–विमोक्ष–समाधि–समापत्तिज्ञानबलानि**—"तथागतो ध्यान-विमोक्ष-समाधि-समापत्तीनां संक्लेश-व्यवदान-व्यवस्थानविशुद्धिं यथाभूतं प्रजानाति।...परपुद्गलानां इन्द्रियपरापरतां यथाभूतं प्रजानाति...। नानाधिमुक्तिकं लोकं अनेकाधिमुक्तिकं यथाभूतं प्रजानाति...। नानाधातुकं लोकं अनेकधातुकं...।" निरोधज्ञानमन्तरेण नव ज्ञानानि अत्र चतुर्षु।

७. **सर्वत्र गामिनी प्रतिपज्ज्ञानबलं**—नानागतिसम्बन्धि मार्गज्ञानबलम्। अत्र नव दश वा ज्ञानानि। "प्रतिपदो नरकादि-गामिन्यः। नरकगामिनी प्रतिपद् यावद् देवगामिनी निरोधगामिनी च। तत्र या नरकादिगामिन्यः प्रतिपदस्ता हेतुः। प्रतिपद्यन्ते ताभि-रिति कृत्वा। मार्गोऽपि प्रतिपदुच्यते तेन हि विसंयोगः प्रतिपद्यते। निरोधस्तु कथं स चापि प्रतिपत्? प्रतिपद्यते तं इति कृत्वा, प्रति-पत्फलं वा प्रतिपदित्युच्यते।"। हेतुर्हि सर्वत्रगामिनी प्रतिपद् इष्यते। तथा हि व्याचक्षते। सर्वत्र गामिनी प्रतिपद् ज्ञानबलम्। सत्काय-समुदय [ निरोध ] गामिनीत्यर्थ इति। तत्र सत्कायः पंचो-पादानस्कन्धाः। समुदय उत्पाद इहाभिप्रेतः"। सत्कायनिरोधो

विसयोग । तत्र सर्वत्र गन्तुं शीलं अस्या इति सर्वत्रगामिनी । सर्वत्र गामिनी चासौ प्रतिपच्च सर्वत्रगामिनी प्रतिपत् । तद्ज्ञानं तदेव च बलमिति सर्वत्र गामिनी प्रतिपज्ज्ञानबलम् ।"

तत्र स्वफलविरहिते मार्गे परिगृहीते नव ज्ञानानि, सफले तु दश ।

८-९ पूर्वनिवासज्ञानबलं, च्युत्युपपादज्ञानबलं च—एतद्द्वयं संवृतिज्ञानम् ।

१०. आस्रवक्षयज्ञानबलं, "आस्रवाणां क्षयाद् अनास्रवां चेतोविमुक्तिं प्रज्ञाविमुक्तिं दृष्ट एव धर्मे स्वयं अभिज्ञाय साक्षात्कृत्वोपसम्पद्य प्रतिवेदयते । क्षीणा मे जातिरुषितं ब्रह्मचर्यं कृतं करणीयं नापरं अस्माद् भवं प्रजानामीति…… ।"

तत्र षड् दश वा ज्ञानानि भवन्ति । षड् धर्मा-ऽन्वय-निरोध-क्षया ऽनुत्पाद-संवृतिज्ञानानि ।

**( पूर्व वास-च्युत्युत्पादज्ञाने ध्यानेषु, चेतरत् ।**
**सर्वभूषु );**

ध्यानभूमिषु पूर्वनिवासज्ञानं, च्युत्युत्पादज्ञानं चेति द्वयं बलम् । अन्यान्यष्टौ बलानि सर्वभूमिषु ( कामधात्व-नागम्य-ध्यानचतुष्टय-ध्यानान्तरा-ऽऽरूप्यचतुष्टयेषु ) ।

**[ कुतस्तस्य बलं, अव्याहतं यतः ] ॥३०॥**

यत इदं अप्रत्याख्येयं, तेनाऽस्य बलसंज्ञा ।

**नारायणं बलं काये, संधिष्वन्ये, दशाधिकम् ।**
**हस्त्यादि सप्तकबलं [ स्प्रष्टव्यायतनं च तत् ] ॥३१॥**

नारायणं बलस्य बलिनश्च संज्ञा । बुद्धस्य काये नारायणसमं बलं, अन्य आचार्याः कायसन्धिष्वेव तावद्बलं वदन्ति । सप्तसु प्राकृतहस्ति-गन्धहस्ति-महानग्न-प्रस्कन्दि-वरांग-चाणूर-नारायणेषूत्तरोत्तरं दशगुणं बलम् । अन्ये दशचाणूरसमं अर्द्धनारायणं इति । भगवतः शरीरं स्प्रष्टव्यायतनं भवति महाभूतविशेष एव ।

**( वैशारद्यानि चरवर्याद्य-दशम-द्वितीयकैः ।**
**सप्तमेन सह );**

चत्वारि वैशारद्यानि—

१. प्रथम ( स्थानाऽस्थान ज्ञान )-बलेन सह प्रथमं वैशारद्यं **सर्वधर्माऽभिसम्बोधिवैशारद्यम्** । अत्र सर्वाणि दशज्ञानानि, इदं च सर्वभूमिकम् ।

२. दशम ( आस्रवक्षयज्ञान )-बलेन सह द्वितीयं वैशारद्यं **सर्वास्रवक्षयज्ञानवैशारद्यम्** । अत्र षड्भूमिकानि षड् दश वा ज्ञानानि ।

३. द्वितीय ( कर्मविपाकज्ञान )-बलेन सह तृतीयं वैशारद्यं **अन्तरायिकधर्मव्याकरणवैशारद्यम्** । अत्र सर्वभूमिकानि अष्टौ ज्ञानानि ।

४. सप्तम ( सर्वत्रगामिनी प्रतिपज्ज्ञान )-बलेन सह चतुर्थं वैशारद्यं **नैर्याणिकप्रतिपद्व्याकरणवैशारद्यम्** । अत्र सवभूमिकानि नव दश वा ज्ञानानि ।

**[ स्मृति-संप्रज्ञानात्मकं त्रयम् ] ॥३२॥**

त्रीणि स्मृत्युपस्थानानि स्मृति-संप्रजन्यस्वभावानि ।

१. श्रावकैरेकान्तेन समनुगम्यमानायां अपि स्वदेशनायां बुद्धो न प्रहृष्यति, उपेक्षक एव तिष्ठतीति प्रथमम् ।

२. एकान्तेनाऽननुगम्यमानायां अन्वीक्रियमाणायां न दौर्मनस्यादिकं, तत्राऽपि बुद्धस्योपेक्षैवेति द्वितीयम् ।

३. एकांशतोऽनुगम्यमानायां, एकांशतश्चाननुगम्यमानायां सौमनस्यदौर्मनस्याद्यभावः, तत्राप्यस्योपेक्षेति तृतीयम् ।

**[ महाकृपा संवृतिधीः संभारा-ऽऽकार-गोचरात् ।**
**समत्वादधिमात्रत्वान्नानाकरणमष्टधा ] ॥३३॥**

महाकरुणा लौकिकं चित्तं (७ : २) एव । करुणा (८ : २९) वदियमपि अद्वेषस्वभावा । परं अस्त्यस्याः करुणातो नानाकरणं (=भेदः ), यतोहि ( १ ) करुणाऽपेक्षया बहुपुण्य प्रज्ञासंभारेण एषा जायते । ( २ ) आकारादपि भेदः, दुःखदुःखता—परिणामदुःखता-संस्कार दुःखतासु ( ६ : ३ ) दुःखदुःखतापेक्षयैव करुणायाः प्रवृत्तिः,

अस्यास्तु तिसृभिरपि । ( ३ ) करुणाया गोचरो ( = विषयः ) केवलं एकस्मिन् धातौ, अस्यास्तु त्रिषु । (४) भूमितोऽपि, करुणा चतुर्ध्यान-भूमिका, महाकरुणा तु चतुर्ध्यान-चतुर्थध्यानभूमिका । ( ५ ) सत्त्व-भेदतः, करुणा श्रावकचित्तसन्ततौ, महाकरुणा तु सम्बुद्धचित्तसन्ततौ ( ६ ) लाभतः, कामधातुवैराग्यात् करुणाया लाभः, महाकरुणायास्तु कामभवाग्रपर्यन्तवैराग्यतः । ( ७ ) त्राणतः, करुणा न परित्रायते, महाकरुणा परित्रायते । ( ८ ) तुल्यातुल्यतः समत्त्वादधिमात्रत्वात् । करुणाह्यतुल्या, महाकरुणा तुल्यातुल्यकरुणायनस्वरूपा सा न केवलं दुःखितकरुणायनस्वरूपा ।

संभारधर्मकायाभ्यां जगतश्चार्थचर्यया ।
समता सर्वबुद्धानां नायुर्जातिप्रमाणतः ॥३४॥

सर्वे बुद्धा एव तुल्याः, पूर्वपुण्य-ज्ञानसंभारतः, धर्मकाय ( = अनास्रवधर्मसंतानो धर्मकायः)-परिनिष्पत्तितः, लोकसेवापरायणतश्च । परं आयु-र्जातिप्रमाणे न ते समानाः । काश्यपबुद्धः आयुःपरिमाणेऽधिकः, जातितो ब्राह्मणः, कायपरिमाणेऽप्यधिकः; गौतमबुद्धः, अशीतिवर्षायुष्कः, कायतोऽपि ततो निम्नपरिमाणः, जातितः क्षत्रियः ।

( बौद्धधर्माः समानाः केचित्तु शैक्ष-पृथग्जनैः ।
अरण-प्रणिधि-प्रतिसंविद्-भिज्ञकादयः ) ॥३५॥

बुद्धस्य गुणाः केचित् शैक्षैः ( = आर्यपुद्गलैः ) समानाः, केचित्तु पृथग्जनैरपि । तद्यथा—अरणसमाधि—प्रणिधिज्ञान-चतुःप्रतिसंविद्-भिज्ञाध्याना - ऽऽरूप्या - ऽष्टसमापत्ति - त्रिसमाधि - चतुरप्रमाणा - ऽष्टविमोक्षा-ऽष्टाभिभ्वायतन-दशकृत्स्नायतनादिषु बुद्धा आर्यैस्समानाः प्रथमत्रिके ( अरण-प्रणिधि-प्रतिसंवित्सु ); शेषेषु पृथग्जनैरपि । रण-क्लेशो रणयति क्लेशयतीति व्युत्पत्या । स्कन्धरणः, वाग्रणः, क्लेशरण इति त्रयो रणाः ।

संवृतिज्ञानमरणा ध्यानान्त्ये ऽकोप्यधर्मणः ।
[ नृजानुत्पन्नकामास-सवस्तु-रणगोचरा ] ॥३६॥

अरणसमाधिः लोकसंवृतिज्ञानम् । चतुर्थे ( अन्त्ये ) ध्याने जायते । अकोप्यधर्मणोऽर्हतः ( ६ : ५६ ) मनुष्यतो जायते । कामधा-

तुगता अनागताः सवस्तुकाः ( रागद्वेषादयः ) रणाः ( = क्लेशाः ) अस्या विषयभूताः ।

[तथापि प्रणिधि ज्ञानं सकला] लम्बनं तु तत् ।

प्रणिधिज्ञानमपि अरणसमाधिवदेव भवति, परं इदं "न अरणवत् क्लेशमात्राऽलम्बन, किं तर्हि ? रूपाद्यालम्बनमपि" ।

( तथा धर्मा-ऽर्थ-निरुक्ति-प्रतिभा-प्रतिसंविदः ) ॥३७॥

धर्मप्रतिसंविद्, अर्थप्रतिसंविद्,, निरुक्तिप्रतिसंविद्, प्रतिभानप्रतिसंविदिति चतस्रः प्रतिसंविदः । "( १ ) यत्सर्वधर्माणां सर्वपर्यायेषु यावद्भाविकतया यथावद्भाविकतया च भावनामयं असक्तं अविवर्त्यं ज्ञानं इयं धर्मप्रतिसंविन् । ( २ ) यत्पुनः सर्वधर्माणां सर्वलक्षेषु अविवर्त्यज्ञानं इयं अर्थप्रतिसंवित् । ( ३ ) यत् पुनः सर्वधर्माणां एव सर्वनिर्वचनेषु इयं निरुक्तिसंवित् । ( ४ ) यत्पुनः सर्वधर्माणामेव सर्वप्रकारपदप्रभेदेषु इयं प्रतिभानप्रतिसंवित् ।" ( बोधिसत्त्वभूमौ १ । १७ । ७ ).

इमा अपि चतस्रः प्रतिसंविदः अरणसमाधिवदेव अकोप्यधर्ममनुष्याश्रयाः, परं स्वाधिगमभूमिकगोचराः ।

तिस्रोनामा-ऽर्थ-वाक्षु ( विवर्त्यं ज्ञानं यथाक्रमम् ) ।

तथाहि—(१) धर्मप्रतिसंविद्, नाम-पद-व्यंजनकायेष्वविवर्त्य (= असक्त )-ज्ञानम् । (२) अर्थप्रतिसंविद्, अर्था-ऽविवर्त्यज्ञानम् ।

(३) निरुक्तिप्रतिसंविद्, वागविवर्त्यं ज्ञानम् ।

[चतुर्थी युक्त-मुक्ता-भिलाप-मार्गवशित्वयोः] ॥३८॥

चतुर्थी प्रतिभानसंविद् युक्त-मुक्ताऽभिलापितायां समाधिवशीसंप्रख्याने चाविवर्त्यं ज्ञानम् । युक्तं = अर्थसम्बद्धम् । मुक्तं = असक्तम् । युक्त-मुक्तं अभिलपति, युक्त-मुक्ताऽभिलापी, तद्भावः तस्यां युक्त-मुक्ताऽभिलापितायाम् । समाधौ वशी = समाधिवशी । समाधिवशिनः संप्रख्यानं असम्मोषः समाधिवशिसंप्रख्यानम् । तत्र चाऽविवर्त्यं ज्ञानं प्रतिभानप्रतिसंविदिति ।

[ तदालम्बनं वाङ्मार्गौ, ज्ञानानि नव ];

तस्याः प्रतिसम्विदः सम्यग् वाक्, मार्गश्च गोचरः (= विषयः = आलम्बनं ); निरोधज्ञानं विहाय नव चास्या ज्ञानानि ।

सर्वभूः ।

कामधातुतो भवाग्रपर्यन्तं अस्या उत्पत्तिभूमिः । स्वभूमिका वाग्, स्वभूमिको मार्गश्चालम्बनम् ।

( अर्थसंविद् दश षड् वा );

अर्थप्रतिसंविद् यदि सर्वार्थसम्बन्धिनी तर्हि सा दश ज्ञानानि; अर्थतो यदि निर्वाणसंबन्धिनी, तर्हि षड् धर्माऽन्वय-निरोध-क्षयाऽनुत्पाद-संवृतिज्ञानानि ।

( सर्वजा );

इयं सर्वभूमिषु जायते ।

अन्ये लोकसंवृतिः ॥३९॥

अन्ये धर्म-निरुक्तिप्रतिसंविदौ संवृतिज्ञानं, नामकायादिवागालम्बनत्वात् । नहि दुःखादिज्ञानं अनास्रवं दुःखैकदेशं च समुदयैकदेशंच स्वलक्षणाकारेणालम्बते, किं तर्हि, पंचोपादानस्कन्धान् सामान्यलक्षणाकारैः, अतस्ते संवृतिज्ञानस्वभावे ।

( धर्मसंविद् कामध्यानेषु );

धर्मप्रतिसंविद् कामधातौ, ध्यानभूमिषु च भवति । "ऊर्ध्वं नाम कायाभावात् इति, आरूप्यधातौ धर्मप्रतिसंवित् नास्तीति । यत्र च नामकायस्तत्रैव पद-व्यंजनकाया इति तुल्यवार्ता । नामकायाभाववचनेन व्यंजनकायाभावसिद्धिः ।"

( वाक् कामा-ऽद्य-ध्यानयोः ) ।

निरुक्ति (= वाक्)-प्रतिसंविद् कामधातौ, प्रथमध्याने च भवति; वितर्काभावात् ऊर्ध्वभूमिषु तस्या अभावः ।

( पृथक् तासां नोपलब्धिः );

य एकां प्रतिसंविदं उपलभते स सर्वा', यः सर्वा न उपलभते स एकामपि न ।

षडेते प्रान्तकोटिकाः ॥४०॥

प्रान्तकोटिकध्यान( ७ : ४१ )-बलेन एते षड् अरणादयो गणा लभ्यन्ते, तेन प्रान्तकोटिका इत्यपि संज्ञायते।

**[ तत् षोढा ];**

प्रान्तकोटिकं षड् विधं भवति। १. किंचिदरणात्मकं, २. प्रणिधिज्ञानं, ३–५, निरुक्तिवर्जिताः तिस्रः प्रतिसंविदः, ६. किंचित् तद्व्यतिरिक्तं केवलं प्रान्तकोटिकमिति। निरुक्तिप्रतिसंविद्, प्रान्तकोटिकध्यानबलेन जाताऽपि, कामधातु-प्रथमध्यानभूमिकत्वात्, प्रान्तकोटिकेषु न परिगणिता।

**[ ध्यानमन्त्यं तत् ] सर्वभूम्यनुलोमितम्।**
**वृद्धिकाष्ठागतं;**

प्रान्तकोटिकं ध्यानं चतुर्थध्यानभूमिकम् ( अन्त्यम् )। "प्रगता अन्तं = प्रान्ता, प्रान्ता कोटिरस्येति प्रान्तकोटिकम्।" चतुर्थध्यानं हि सर्वाभ्यनुकूलितं, यतः कामधातुगकुशलचित्ततो योगी प्रथमध्यानं प्रविशति, ततो द्वितीयं, एवं क्रमेण यावत् नैवसंज्ञानासंज्ञायतनं; पुनस्ततोवतीर्य क्रमशः कामधातुगतचित्तं यावत्।

चतुर्थध्यानमभ्यस्यते हीन-मध्यम-प्रणीतक्रमेण। तत्राप्येकस्मिन् प्रकारे त्रयो भेदा एवं सर्वे नव। चतुर्थध्याने सर्वोत्कृष्टप्रकारो वृद्धिकाष्ठागतम्।

**[ बुद्धादपरेषां प्रयोगजः ] ॥४१॥**

बुद्धभिन्नानां आर्याणां अरणादिषड्गुणानां लाभः प्रयोगतः ( = उद्योगतः ) जायते, न वैराग्यतः।

**[ ऋद्धि-श्रोत्र-मनः-पूर्ववास-च्युत्यु-पपत्-क्षये।**
**ज्ञानसाक्षात्क्रियाऽभिज्ञा ] षड्विधा;**

१. "ऋद्धिः समाधिः। ऋद्धि-विषयो निर्माणं गमनं च। ऋद्धि-विषये ज्ञानं तस्य साक्षात्क्रिया संमुखीभावः"। 'अनेक विध ऋद्धि-विषयं प्रत्यनुभवति। एको भूत्वा बहुधा भवति। बहुधा भूत्वा एको भवति। आविर्भवति तिरोभावं अप्यनुभवति। तिरः कुड्यं तिरः प्राकारं [ तिरः पर्वतं ] असज्जमानः कायेन गच्छति तद्यथाऽऽकाशे।

पृथिव्यां उन्मज्जन-निमज्जनं करोति तद्यथोदके। उदकेऽभिद्यमानेन स्रोतसा गच्छति तद्यथा पृथिव्याम्। आकाशे पर्यंकेन क्रमति तद्यथा शकुनिः पक्षी। इमौ वा पुनः सूर्यचन्द्रमसौ एवं महर्द्धिकौ एवं महानुभावौ पाणिना आमार्ष्टि परिमार्ष्टि, यावद्ब्रह्मलोकं कायेन वशे वर्तयत इतीयं उच्यते ऋद्धिः।" (महापरिनिर्वाणे)। ऋद्धि-विषय-ज्ञान-साक्षात्क्रियाऽभिज्ञा।

२. दिव्य-श्रोत्र-ज्ञान-साक्षात्क्रियाभिज्ञा। "इह भिक्षुर्दिव्येन श्रोत्रेण विशुद्धेनातिक्रान्त-मानुष्यकेण उभयान् शब्दान् शृणोति मानुष्यान् अमानुष्यान्, ये वा दूरे ये वाऽन्तिके।"

३. चेतः-पर्याय-ज्ञान-साक्षात्क्रियाऽभिज्ञा (चक्षुरभिज्ञा)। "इह भिक्षुः परसत्त्वानां परपुद्गलानां वितर्कितं विचारितं मनसा मानसं यथा भूतं प्रजानाति। सरागं चित्तं सरागं इति यथाभूतं प्रजानाति। विगतरागं······सद्वेषं······विगतद्वेषं······समोहं······ विगतमोहं······विक्षिप्तं······संक्षिप्तं······लीनं······प्रगृहीतं······ उद्धतं······अनुद्धतं······अव्युपशान्तं······व्युपशान्तं······समाहितं······असमाहितं······अभावितं······भावितं······अविमुक्तं······ विमुक्तं चित्तं विमुक्तं इति यथा भूतं प्रजानाति।"

४. पूर्वनिवासानुस्मृतिज्ञान-साक्षात्काराऽभिज्ञा। "अनेकविध पूर्वनिवासं समनुस्मरति।"

५. च्युत्युपपादज्ञान-साक्षात्काराऽभिज्ञा। "दिव्येन चक्षुषा विशुद्धेन अतिक्रान्त-मानुष्यकेण सत्त्वान् पश्यति, च्यवमानान् उपपद्यमानान्।"

६. आस्रवक्षय ज्ञान साक्षात्काराऽभिज्ञा। "इह भिक्षुरिद दुःखं आर्यसत्यं इति यथाभूतं प्रजानाति। अयं दुःखसमुदयः।··· अयं दुःखनिरोधः।··· इयं दुःखनिरोधगामिनी प्रतिपद् आर्यसत्यं इति यथाभूतं प्रजानाति। तस्यैवं जानत एवं पश्यतः कामास्रवाच्चित्तं विमुच्यते। भवास्रवाद् अविद्यास्रवाद् चित्तं विमुच्यते। विमुक्तस्य विमुक्तोऽस्मीति ज्ञानदर्शनं भवति। क्षीणा मे जातिः··· नापरं अस्माद् भवं प्रजानामीति।"

तत्र षष्ठी अभिज्ञा केवलं आर्याणां, शेषाः आर्य-पृथग्जनोभय-साधारणा ।

**मुक्तिमार्गधीः ॥४२॥**

इमा विमुक्तिमार्गस्य प्रज्ञाः ।

**[ चतस्रः संवृति-ज्ञानं ];**

ऋद्धि विषय-दिव्यश्रोत-चेतःपर्याय ( = दिव्यचक्षुः )-पूर्वनिवास-ज्ञानाऽभिज्ञाः सन्ति **संवृतिज्ञानं** ( ७ : २ ) ।

**चेतसि ज्ञान-पंचकम् ।**

धर्मा-ऽन्वय-मार्ग-संवृति-परचित्तज्ञानानि पंच, अभिज्ञा-स्वभावानि ।

**[ क्षया-भिज्ञा ] बलं यावत् ;**

आस्रवक्षय-ज्ञानाऽभिज्ञा, आस्रवक्षयज्ञानबलवत, षड् दश वा ज्ञानानि उपगृह्णाति ( ७ : २८ ) ।

**पंचध्यान चतुष्टये ॥४३॥**

प्रथमाः पंच अभिज्ञाः चतुर्षु ध्यानेषु भवन्ति । अतश्च तद्ध्यान लाभिनैव लभ्याः ।

**स्वाधोभूविषयाऽभिज्ञा ;**

अभिज्ञा स्वभूमिक-वस्तूनां स्वाऽधोभूमिक-वस्तूनां वा विषये संभवति, नोर्ध्वभूमिकानाम् ।

**[ उचिता वैराग्यलाभिकाः ] ।**

उचिताः = अभ्यस्तपूर्वा वैराग्यमात्रेणाऽपि बुद्धानां लब्धा भवन्ति, अन्येषां त्वभ्यस्ताः ।

**तृतीया स्मृत्युपस्थानत्रयं ;**

तृतीया चेतः पर्यायज्ञाना ( = दिव्य चक्षुः ) ऽभिज्ञा वेदना-चैत-धर्मस्मृत्युपस्थान ( ६ : १४ ) रूपा, चित्त-चैतस-गोचरत्वात् ।

**( आद्यमाद्य त्रयम् ) ॥४४॥**

आद्यं ( ऋद्धि विषय-दिव्यश्रोत्र-दिव्यचक्षुः) अभिज्ञा-त्रयं, आद्यं स्मृत्युपस्थानं ( = कायस्मृत्युपस्थानं ) भवति; रूपविषयत्वात् ।

[ अव्याकृते श्रोत्र-चक्षुरभिज्ञे शेषिताः शुभाः ] ।

दिव्यश्रोत्राऽभिज्ञा दिव्यचक्षुरभिज्ञा च न कुशले नाकुशले। अवशिष्टाश्चत्वारः शुभा ( = कुशलाः ) एव केवलम् ।

[तिस्रो विद्या अविद्यायाः] पूर्वान्तादौ निवर्तनात् ॥४५॥

तिस्रो विद्या—अशैक्षी पूर्वनिवासज्ञानसाक्षात्क्रिया विद्या, अशैक्षी च्युत्युपपादज्ञानसाक्षात्क्रियाविद्या, अशैक्षी आस्रवक्षयज्ञान-साक्षात्क्रियाविद्या—सन्ति क्रमशः पंचमी द्वितीया षष्ठी चाऽभिज्ञाः । "एता हि पूर्वाऽपरान्त-मध्य-सम्मोहं व्यावर्तयन्ति यथाक्रमम् ।" अत एव विद्याः ।

[ अशैक्ष्यन्त्या ];

अन्त्या षष्ठी आस्रवक्षयज्ञानाऽभिज्ञाऽशैक्षी, अशैक्षैः (अर्हद्भिः) एव लभ्यत्वात् ।

[ तदाख्ये तु द्वे तत्संतानजे यदा ] ।

अशैक्ष-चित्तसन्ताने जाते चेत् द्वेऽन्येऽप्यशैक्ष्यौ अभिज्ञे । स्वभावतस्ते नशैक्षनाशैक्ष्यौ ( २ : ३८ ) ।

(शैक्षे ता न विद्याख्या अविद्यान्वितसन्ततेः) ॥४६॥

शैक्षे चित्ते जातास्ता अभिज्ञा न विद्या-शब्दवाच्याः, यतोहि शैक्षस्य चित्त-सन्ततिरविद्या-समन्विता ।

( एक-त्रि-षट्काः प्रातिहार्यं );

तत्राभिज्ञासु प्रथमा तृतीया षष्ठी च "प्रातिहार्यं" उच्यते। प्रातिहार्यं च त्रिविधं, ऋद्धि-प्रातिहार्यं, आदेशना-प्रातिहार्यं, अनुशासनी-प्रातिहार्यं च। तत्र ऋद्धि-प्रातिहार्यं ऋद्धि-विषयाभिज्ञा, आदेशना-प्रातिहार्यं चेतःपर्याया( = दिव्यचक्षुः ) ऽभिज्ञा, अनुशासनी-प्रातिहार्यं आस्रवक्षयाभिज्ञा ।

( श्रेष्ठमनुशासनी ) ।

अनुशासनीप्रातिहार्यं सर्वेभ्यः प्रणीततमम् ।

अव्यभिचारित्व[हित-मनोज्ञ-फल-योजनात् ] ॥४७॥

ऋद्धि-प्रातिहार्यं आदेशना-प्रातिहार्यं च गान्धारी विद्यायोगेना ऽपि संभवतः, अतस्तयोः न अव्यभिचारित्वम्। अस्ति ईक्षणिका नाम विद्या तया परचित्तमप्यादिशतीति आदेशना-प्रातिहार्यमपि सव्यभिचारि। अनुशासनी-प्रातिहार्यं त्वैकान्तिकं, केवलं आस्रव-क्षयाभिज्ञयैवोपपाद्यं, इत्थं अव्यभिचारित्व-( = एकान्तिकत्व ) योज-नात् तत् श्रेष्ठम्। अन्ये द्वे प्रातिहार्ये न हित-सुख फलं उत्पादयतः,-अनुशासनी-प्रातिहार्येण शास्ता अनेकेषां धर्मचक्षुरुत्पादयति, तेन तत् हित-मनोज्ञ-फलदम्, इतोऽपि श्रेष्ठम्।

**[ ऋद्धिः समाधिः ];**

ऋध्यति सम्पद्यत इति ऋद्धिः, सा समाधिपर्यायः।

**अत्राकाशगमनं निर्मितं ;**

आकाशगमनं, संकल्पतो विषय-निर्माणं च ऋद्धि-स्वरूपम्।

**( गतिः।**

**त्रिधामनोयथा शास्तुः );**

गतिः त्रिविधा, वहनगतिः, अधिमोक्षगतिः, मनोवेगगतिः। तत्र मनोवेगगतिः बुद्धस्य ( = शास्तुः ) एव, नान्येषाम्।

**( अन्या वहना-ऽधिमोक्षकाः ) ॥४८॥**

बुद्धभिन्नानां गतयः वहन-गतयोऽधिमोक्षगतयो वा भवन्ति। तत्र श्रावकाः प्रत्येकबुद्धाः पक्षिरिव स्वशरीरं आकाश आरोहयन्ति, इयमेव वहनगतिः। अधिमोक्षगतिः, यत्र दूरस्थं वस्तु संकल्प वशेन समीपं आनीयते ( ( "सन्तिके होतु ति सन्तिके होति" ) ।

**कामाप्त-निर्मितं बाह्यं चतुरायतनं [ द्विधा।**

**रूपाप्तं द्वे ];**

निर्मितं द्विविधं, कामधातुगतं, रूपधातुगतं च। आद्ये भवन्ति रूप-गन्ध-रस-स्प्रष्टव्यानि बाह्यानि चतुरायतनानि। द्वितीये रूप-स्प्रष्टव्यमात्र द्वयम्। कामधातुगतं निर्माणं द्विधा, स्व-पर-शरीरसम्ब-न्धात्। यथा योगी स्वशरीरं एव व्याघ्रशरीरे परिवर्तयति, परं वा शरीरं निर्मिणोति। एवमेव रूपधातावपि भेदद्वयम्।

मान चित्तैः, तानि पुनः चतुर्दश ॥४९॥

अभिज्ञाफलं ऋद्धिबलं, तदेव निर्माण-चित्तम्। तैः निर्माण-चित्तैः निर्मीयन्ते वस्तूनि। तानि च निर्माण-चित्तानि चतुर्दश।

( ध्यानफलं द्वयात् पंच तत् );

निर्माण-चित्तानि हि ध्यानानां फलभूतानि। तानि च द्वयात् पंच-सख्यां यावत्। तत्र प्रथमध्यान-फलभूते द्वे निर्माणचित्ते ( कामावचर-प्रथमं = प्रथमध्यान-भूमिकम् )। द्वितीयध्यानस्य त्रीणि ( १ कामावचरं + १ प्रथमध्यानभूमिकं + १ द्वितीयध्यानभूमिकम् )। तथैव चत्वारि तृतीयध्यानस्य, पंच च चतुर्थध्यानस्य। इत्थं सर्वाणि ( २ + ३ + ४ + ५ = १४ ) चतुर्दश। कस्याऽपि ध्यानस्य फलभूतं निर्माण-चित्तं तद्भूमिकं तदधोभूमिकं च भवति।

( न हीन-ध्यानजम् )।

हीन-ध्यानजं चित्तं नोर्ध्व-भूमिकं निर्माण-चित्तं उद्भावयति, दुर्बल-भावात्।

ध्यानवल्लाभः;

ध्यान-प्राप्तो ध्यान-प्राप्तिकाले ध्यानफल स्वरूपं यत् निर्माणचित्तं लभते तद् वैराग्यादपि।

( स्व-शुद्धध्यानजं चित्तं द्वयकृत् ) ॥५०॥

ध्यानात्तत्-फलं निर्माण-चित्तं जायते। शुद्धकध्यानं ( ८ : ६ ) एकं प्रथमं निर्माणचित्तं उत्पादयति, तत उत्तरोत्तरं निर्माणचित्तं एक-स्वजातीयं चित्तं उत्पादयति। इत्थं निर्माणचित्तं स्वस्मात् ( = निर्माण चित्तात् ) शुद्धध्यानाच्च जायते। अन्तिमनिर्माणचित्तं शुद्धध्यानेनानुगम्यते, एवं ते द्वे उत्पादयतः, निर्माण-चित्तं शुद्धध्यानं च।

स्वभूमिकेन निर्माणं;

सर्वाणि निर्मितानि वस्तूनि स्वभूमिकेन निर्माण-चित्तेन निर्मीयन्ते।

भाषणं त्ववरेण च।

भाषणं तु तद्भूमिकेन तदधर-भूमिकेनाऽपि निर्मितेन सत्त्वेन जनयितुमर्हति ।

## ( विना शास्तारं निर्मात्रा हि )

शास्तारं ( = बुद्धं ) विनाऽन्यत्र ऋद्ध्या निर्मिताः सत्त्वा निर्मात्रा सहैव वदन्ति । तथाहि—"यं खलु श्रावको निर्मित्तं अभिनिर्मिमीते, यदि श्रावको भाषते निर्मितोऽपि भाषते । श्रावके तूष्णीभूते निर्मितोऽपि तूष्णीभवति । "एकस्य भाषमाणस्य सर्वे भाषन्ति निर्मिताः ।

एकस्य तूष्णीभूतस्य सर्वे तूष्णीभवन्ति ते ॥"

"( भगवन्तं निर्मितः प्रश्नं पृच्छति, भगवान् व्याकरोति । निर्मितं भगवान् प्रश्नं पृच्छति, निर्मितो व्याकरोति ) ।" इत्थं बुद्धेन निर्मिताः, पूर्वं पश्चाद्व स्वातंत्र्येण प्रश्नादि-करणे समर्थाः, न केवलं निर्मातृ-प्रतिशब्दका.

अधिष्ठायाऽन्यवर्तनात् ॥५१॥

निर्माता निर्मितं एकेन चित्तेन अधितिष्ठति । अधिष्ठाय च अन्येन चित्तेन शब्दं प्रयोजयति, इत्थं तस्मात् प्रवर्तनात् निर्मितो वदति ।

## ( मृतेऽपि तदधिष्ठानं );

मरणानन्तरमपि योगिनोऽधिष्ठानं तिष्ठत्येव । एतदधिष्ठान वशादेव महाकश्यपस्यास्थि मैत्रेयागमनकालं स्थास्यति । ( "मैत्रेयः काश्यपस्य भिक्षोरविकोपितं अस्थि संघातं दक्षिणेन पाणिना गृहीत्वा ।" दिव्यावदाने ६१ )

## ( नानवस्थायि );

चिरस्थितिकं वस्त्वेव अधिष्ठानवशात् चिरं तिष्ठति, न अनवस्थायि । अत एव महाकश्यपो न मांसं अध्यतिष्ठत् ।

## ( नेत्यन्ये ) ।

अन्य आचार्या न अधिष्ठानवशात् चिरस्थितिं मन्यन्ते । तेषां नये देवाः महाकश्यपास्थिरक्षकाः ।

## ( आदावेकं बहुचित्तैः शुद्धाभ्यासे तदन्यथा ) ॥५२॥

आदिकर्मिक आरम्भे बहुभिः निर्माणचित्तैः एकं निर्मितं चित्तं उत्पादयति । पूर्णतां गते चाभ्यास एकेनाऽपि निर्माणचित्तेन अनेकान् निर्मितान् उद्भावयितुमलम् ।

**अव्याकृतं भावनागं, त्रिविधं तूपपत्तिजम् ।**

भावनातः ( = ध्यानतः = अभिज्ञातः) जातं निर्माणचित्तं अव्याकृतं भवति; अभिज्ञाफलं हि अव्याकृतम् । परं यदा उपपत्तितो (–जन्यसिद्धितो) जातं, यथा देवानागादीनां, तदा कुशलं अकुशलं अव्याकृतं वा भवितुमर्हति ।

**( ऋद्धिरस्ति मंत्रौ-षधि-कर्मभिरपि पंचधा ) ॥५३॥**

भावनाजा, उपपत्तिलाभिका, विद्याकृता ( = मंत्रकृता ), ओषधिकृता, कर्मजा चेति पंचविधा ऋद्धिर्भवति । तत्र कर्मजा ऋद्धिर्मन्धातृ-प्रभृतीनाम ।

**(दिव्य-श्रोत्रा-ऽक्षिणी ध्यानभूमिका-ऽमल-रूपजे) ।**

दिव्यश्रोत्रं दिव्यचक्षुश्च ध्यानभूमिकावस्थितैः निर्मलैः रूपैः ( = पदार्थैः = महाभूत-सूक्ष्म-प्रसन्नांशैः ) निर्मिते भवतः । ध्यानभूमिक रूपोत्पत्ति-मत्त्वात् दिव्यमित्युच्यते ।

**[सभागाऽविकले नित्यं दूर-सूक्ष्मादि-गोचरे] ॥५४॥**

ते दिव्य-श्रोत्रं दिव्य-चक्षुश्च सर्वदा गोचरोन्मुखे, वैकल्यरहिते ( काण-विभ्रान्ताभावात् ) च भवतः । एते दूरस्थं, सुसूक्ष्मं ···· च गोचरं ( = विषयं ) उपगृह्णतः; मांस-श्रोत्र-चक्षुर्वत् न तत्राऽसमर्थे ।

**द्वि-त्रि-साहस्रिका-ऽसंख्यदृग् अर्हत्-खड्ग-दैशिकः ।**

अर्हन्तो महाश्रावका द्विसाहस्र-मध्यमलोकधातुं ( ३ : ७३ ) दिव्य-श्रोत्र-चक्षुर्भ्यां पश्यन्ति । प्रत्येकबुद्धः त्रिसाहस्र-महासाहस्र-लोकधातुं, बुद्धा भगवन्तः ( = दैशिकाः ) च असंख्येय-लोकधातुम् ।

**[ औपपत्तिकमप्यन्यत् ];**

दिव्यश्रोत्र-दिव्यचक्षुः–पूर्वभवज्ञान-परचित्तज्ञान-शक्तय उत्पत्तिवशादपि भवन्ति, परं न ता अभिज्ञा-पदवाच्याः ।

**( चक्षुस्तु नान्तराभवम् ॥५५॥**

उपपत्तिलाभिकं दिव्यचक्षुः नान्तराभवसत्वं द्रष्टुं समर्थम्। अन्यत्र अभिज्ञालाभिक-दिव्यचक्षुः समानमेव।

**( तत् पर-चित्तधीः त्रिधाः );**

परचित्त ज्ञानं चेद् उपपत्ति-लाभिकं, तर्हि तत्-( = उपपत्ति लाभिकं ) परचित्त( = चेतःपर्याय )-ज्ञानं त्रिविधं कुशलं अकुशलं अव्याकृतं च।

**( तर्कजे मंत्रजेऽपि च )।**

ईक्षणिकाशास्त्राऽध्ययनेनाऽपि तर्कतः परचित्त-विषयं वदति, मंत्रसिद्ध्याऽपि तथैव। एतस्मिन् उभयविधेऽपि परचित्तज्ञाने पूर्ववदेव त्रैविध्यं कुशला-ऽकुशला-ऽव्याकृतत्वम्।

**( नारकाः प्राग् विजानन्ति );**

नारकाः सत्त्वा अपि आरम्भ-काले ( यावत् दुःखवेदनातः संज्ञा-प्रहाणं न जातं तावत् ) परचित्तं स्व-पूर्वनिवासं च जानन्ति ( ४ : ८० )।

**नृणां नोत्पत्तिलाभिकम् ॥५६॥**

उत्पत्ति-लाभिकं हि नाम यद् उत्पत्तिकाल एव सर्वेषां निसर्गतो लभ्यते। न तु यत् कस्यचिदेव उपपत्तिकालादूर्ध्वं, यथा पक्षिणां आकाशगमनम्। वैराग्य-लाभिकं ( = अभिज्ञाफलं ) तर्क-विद्यौषध-कर्मकृतं वा न उपपत्ति-लाभिकम्। एवं मनुष्याणां ऋद्ध्यादिकं न उपपत्ति-लाभिकम्।

( इति ज्ञान-निर्देशः )।

( समाप्तं सप्तमं कोश स्थानम् )।

---

# अष्टमं कोशस्थानम् ।

## ध्यानम् ।

**द्विधा ध्यानानि चत्वारि [ तत्रोक्ता उपपत्तयः ।**
**समापत्तिः शुभैकाग्र्यं सानुगा स्कन्ध-पंचकम् ] ॥ १ ॥**

ध्यानानि चत्वारि, तत्रैकैकं द्विविधम् । उपपत्ति-ध्यानान्युक्तानि । समापत्ति-ध्यानं एकस्मिन् आलम्बने कुशलचित्तानां सम्प्रयोगः । तदनुगामिभिः स्कन्धपंचकैः समापत्तिः सानुग-ता ।

तत्र चतुर्षु ध्यानेषु द्वौ भेदौ—समापत्तिध्यानं ( = कारणध्यानं), उपपत्तिध्यानम् ( = कार्यध्यानम् ) च। उपपत्तिध्यानानि तृतीय-कोश-स्थाने लोकनिर्देशे व्याकृतानि। तत्र प्रथम-द्वितीय-तृतीयध्यानानि प्रत्येकं त्रिभूमिकानि, चतुर्थं त्वष्टभूमिकम् ( ३ : २, ६ : ३८,४२ : २ : ४१, ८ : १२,१५,१६,१६ )।

**विचार-प्रीति-सुखवत् पूर्वं-पूर्वांग-वर्जितम् ॥ २ ॥**

प्रथमं ध्यानं विचार-प्रीति-सुख-सहितं भवति। अग्र एकैकवर्जितम्। तद्यथा द्वितीयध्यानं प्रीति-सुखसहितं, तृतीयं सुखसहितं, चतुर्थं निर्विचार-निःप्रीति-निस्सुखम् । अग्नि धूम इव वितर्को विचारं अनुगच्छति । इत्थं सवितर्क-सविचार-प्रीति-सुख-समन्वितं प्रथमं ध्यानम् ।

**[ तथाऽऽरूप्याश्चतुःस्कन्धाः ];**

आरूप्य-समापत्तय आरूप्य-भूमिस्थाश्च संख्यायां स्वभावे च ध्यानैरिव । चत्वारि आरूप्याणि, तत्रैकैकं द्विविधं—उपपत्तिकं समापत्तिकं च। उपपत्तय उक्तपूर्वाः ( ३ : )। आरूप्यध्यानं स्वभावतः सामान्यतश्च समापत्तिः ( =कुशलचित्तैकाग्रता )। ध्यानं पंच-स्कन्धानुगतं, आरूप्यं चतुःस्कन्धानुगतं, सर्वानुपरिवर्त्तकरूपा ( ध्यान-संवरः, अनास्रव-संवरः ४ : ४ ) भावात् ( २ : ५१ )।

**[ अधोभूमि-विवेकजाः ] ॥ २ ॥**

विवेकः = पार्थक्यम्। सर्वाण्यारूप्याणि समापत्तय एव। तथा प्येषां संख्या चत्वारि, यतः प्रत्येकारूप्यसमापत्तिः अधोभूमिकया विविच्यते ( = पृथग्भूयते )। आकाशानन्त्यायतनं हि समापत्तिः, या चतुर्थध्यानेन सह विविच्य उद्भवति। एवं यावन्नैवसंज्ञानासंज्ञायतनम् ( = भवाग्रम् ), यच्च विविच्य आकिंचन्यायतनेन सह, उद्भूतम्। विवेकः = मार्गः ( आनन्तर्य-विमुक्ति-मार्गौ ), येन अधोभूमितो विमुच्यते; तद्वैमुख्य-गमनात्।

**विभूत-रूप-संज्ञाख्याः [ सामन्तकैस्त्रिभिस्सह ]**

मौला आरूप्या ऊर्ध्वमौलाऽऽरूप्याणां त्रयाणां सामन्तकैस्सह विभूतरूपसंज्ञा उच्यंते; आकाशानन्त्यायतनप्रयोग रूपः प्रथम-सामन्तको न विभूत-रूप-संज्ञः, यतोऽस्य विषयः चतुर्थध्यानम्।

**( आरूप्ये रूपं );**

निकायान्तरीया। आरूप्येऽपि, ईषद्रूपा आरूप्या इति व्युत्पत्त्या सूक्ष्मं रूपं स्वीकुर्वन्ति।

**( नैवाऽस्ति );**

नाऽस्ति रूपं आरूप्यधातौ।

**( चित्ताद् रूपं च जायते ) ॥ ३ ॥**

रूपं हि चित्तात् जायते।

**[ विज्ञानाऽनन्त्य-माकाशानन्त्यमा-किंचनाह्वयम् ]।**

**तथा प्रयोगात्;**

प्रयोगकाल आकाशादीन्यालम्बनानि; तेन तन्नामकानि ( ३ : ३ )। प्रयोगकाले हि आकाशादीनि भावयति भिक्षुः।

**मान्द्यात् तु न संज्ञानाप्यसंज्ञकम् ॥ ४ ॥**

चतुर्थं आरूप्यं नैवसंज्ञानासंज्ञायतनं कथमुच्यते? तत्र संज्ञादीनां मान्द्यात् ( = नैर्बल्यात् )। तत्र पटु-संज्ञा न भवति, परं न तस्याः सर्वथाऽभावः।

**[ एवं मौलसमापत्ति-द्रव्यं अष्टविधं, त्रिधा।**

**सप्ता( ऽऽस्वादन-वच्छुद्धा-ऽनास्रवाण्य )ष्टमं द्विधा] ॥ ५ ॥**

[ आस्वादन संप्रयुक्तं सतृष्णं, लौकिकं शुभम् ।
शुद्धं तदास्वाद्यमिदं, लोकोत्तरं अनास्रवम् ] ॥ ६ ॥

चत्वारि ध्यानानि चत्वारि आरूप्याश्चेत्यष्टौ मौल-ध्यानानि; मौल-समापत्ति-द्रव्याणि । तत्राद्यानि सप्त त्रिविधानि; अष्टमं संज्ञा-मान्द्यात् न कदापि अनास्रवम् ।

प्रथमा आस्वादन-समापत्तिः, तृष्णा-सम्प्रयुक्तं ध्यानम् ।

शुद्धध्यानं लौकिकशुभा समाधिः । शुक्लाऽलोभादि-धर्म संसर्ग-जत्वात् शुभा ।

अनास्रवध्यानं लोकोत्तरम् ।

[आद्य पंच तर्क] चार-प्रीति-सुख-समाधयः ।
[ प्रीत्यादयः प्रसादश्च द्वितीयेऽङ्गचतुष्टयम् ] ॥ ७ ॥
तृतीये पंच तूपेक्षा [स्मृतिर्ज्ञानं सुखं स्थितिः ।
चत्वार्यन्त्ये स्मृत्यु-पेक्षा-ऽसुखा-ऽदुःख-समाधयः] ॥ ८ ॥

प्रथमे ध्याने ( अनास्रवे ) पंच अंगानि—वितर्क-विचार-प्रीति-सुख-समाधय इति ।

द्वितीये चत्वारि—प्रीति-सुख-समाध्य-ध्यात्मप्रसादा इति ।

तृतीये पंच—उपेक्षा, स्मृतिः, संप्रज्ञानं, सुखं समाधिश्चेति ।

चतुर्थे चत्वारि—उपेक्षापरिशुद्धिः, स्मृतिपरिशुद्धि, अदुःखा ऽसुखवेदना, समाधिश्चेति ।

द्रव्यतो दश चैकं च ;

उपरोक्तक्रमेण अष्टादश अंगानि वस्तुत एकादश एव भवन्ति ।

१–५ प्रथमध्यानस्य पंच अंगानि; ६ द्वितीयध्यानस्य अध्यात्म-प्रसादः; ७ १० तृतीयध्यानस्य उपेक्षा, स्मृतिः, सम्प्रज्ञानं, सुखं च; ११ चतुर्थध्यानस्य अदुःखाऽसुखा वेदना ।

प्रश्रब्धिः सुखमाद्ययोः ।

प्रथम-द्वितीययोः ध्यानयोः सुखं प्रश्रब्धिरुच्यते ।

श्रद्धा प्रसादः ;

अध्यात्म-संप्रसादः श्रद्धैव ।

**( प्रीतिः सौमनस्यं मतं द्व्युक्तितः ) ॥ ९ ॥**

प्रीतिः = सौमनस्यं इति सूत्रद्वये तथा कथनात् सिद्ध्यति । ( १ ) "तृतीयध्याने पूर्वं जातं सौमनस्येन्द्रियं निरवशेषं प्रहीयते; चतुर्थध्याने सुखेन्द्रियं निरवशेषं प्रहीयते" । ( २ ) "स सुखस्य च प्रहाणाद् दुःखस्य च प्रहाणात् पूर्वं एव सौमनस्य-दौर्मनस्ययोः अस्तंगमाद् अदुःखं असुखं उपेक्षा-स्मृति-परिशुद्धं चतुर्थं ध्यानं··· ।"

**(क्लिष्टे न प्रीति-सुखे प्रसादः संप्रजन्य-स्मृती ।**

**स्मृति-परिशुद्ध्युपेक्षे ) ;**

प्रथमध्यानं यदा क्लिष्टं, तदा न तत्र प्रीतिः सुखं च, क्लेशाविविक्तत्वात् । क्लिष्टे द्वितीयध्याने न अध्यात्मसम्प्रसादः, क्लेशैराविलत्वात् । तृतीये क्लिष्टे न स्मृति-सम्प्रजन्यं, क्लिष्टसुखसंभ्रमित्वात् । चतुर्थे न उपेक्षा-स्मृतिपरिशुद्धिः, क्लेशमलिनत्वात् ।

**( चान्ये तु प्रश्रब्ध्युपेक्षे ) ॥१०॥**

अन्य आचार्या मन्यन्ते—१ ध्यानानां क्लिष्टत्वे प्रश्रब्धिर्हीयते प्रथमद्वितीयध्यानयोः, २ उपेक्षा च तृतीय-चतुर्थयोः, तयोः कुशल महाभूमिकत्वात् ( २ : २५ ) ।

**अष्टाऽपक्षाल-मुक्तत्वात् [ चतुर्थं स्यादनिंजितम् ] ।**

वितर्क-विचार-सुख-दुःख-सौमनस्य-दौर्मनस्या-श्वास-प्रश्वासा अष्टौ अपक्षालाः ( ३ : १०१ ) । तैर्विमुक्तत्वात् चतुर्थं ध्यानं अनिंजितम् ( ४ : ४६, ६ : २४ ) ।

**[ वितर्कौ विचारः श्वासौ चत्वारश्च सुखादयः ] ॥११॥**

उक्तपूर्वाः अपक्षालाः । अपक्षालः = कण्टकः ।

चतुर्थं ध्यानं अनिंजितं, "वितर्क-विचार-प्रीतिसुखैः अकम्पनीयत्वादिति । यथा पूर्वकानि त्रीणि ध्यानानि वितर्कादिभिः कम्प्यंते । —प्रथमं ध्यानं वितर्क-विचाराभ्यां कम्प्यते द्वितीयं प्रीत्या; तृतीयं सुखेन । नैवं एभिश्चतुर्थं कम्प्यते; यथा निवाते प्रदीपः ।"

**सौमनस्य-सुखो-पेक्षा उपेक्षा सुमनस्कता ।**
**सुखोपेक्षे उपेक्षा च विदो ध्यानोपपत्तिषु ॥१२॥**

( क ) प्रथमध्यानोत्पन्नाः  ( १ ) अक्षि-कर्ण-कायसम्बन्धिनीं; सुख-वेदनां अनुभवन्ति ।
( २ ) मनो-विज्ञानगत-सौमनस्य ( = सुख)-वेदनां;
( ३ ) काया-ऽक्षि-श्रोत्र-मनः सम्बद्धां उपेक्षावेदनां च ।

( ख ) द्वितीयध्यानोत्पन्नाः सौमनस्यो-पेक्षावेदने ऽनुभवन्ति मनो-भूमिके । बाह्य-पंच-विज्ञाना-भावात् न तेषां सुखम् ।

( ग ) तृतीयध्यानोत्पन्नाः सुखोपेक्षे, मनोऽन्यतरभूमिके ।

( घ ) चतुर्थध्यानोत्पन्नाः, एकां एव उपेक्षावेदनाम् ।

**काया-ऽक्षि-श्रोत्रविज्ञानं विज्ञप्त्युत्थापकं च यत् ।**
**द्वितीयादौ तदाद्यास्;**

द्वितीय-तृतीय-चतुर्थध्यानेषु कायविज्ञानं, चक्षुर्विज्ञानं, श्रोत्र-विज्ञानं, विज्ञानोत्थापकं च विज्ञानं न भवन्ति । परं ततः पूर्वभूमिकं चित्तं निर्माय, निर्माणचित्तेन तानि विज्ञानानि साक्षात्कुर्वन्ति । "यथाऽधर भूमिकं निर्माणचित्तं तद्भूमिकं निर्माणं निर्मातुकामा निर्मातारः संमुखीकुर्वन्ति तद्वत् ।"

**अक्लिष्टाव्याकृतं च तत् ॥१३॥**

द्वितीयादिध्यानोत्पन्नैः एवं आंसादतानि तानि प्रथमध्यान-गत-विज्ञानानि, अक्लिष्टाव्याकृतानि भवन्ति; निम्नभूमिषु तेषां विरक्त भावात न क्लिष्टानि, न च कुशलानि, अधोभूमिकत्वात् तेषां कृत एषां निहीनभावात् । ( प्रथमध्यानभूमिकं कुशलं द्वितीयध्यानभूमिकाद्धि निहीनम् ) ।

**अतद्वान् लभते शुद्धं वैराग्येणोपपत्तितः ।**

तद्ध्यान विरहितः शुद्धानि तानि ( ध्यानानि ) अधोभूमिवैरा-ग्यात् लभतेऽधोभूमौ जन्मतो वा । "अधोभूमि-वैराग्यात् वा असम-न्वागतः, तेन शुद्धकं प्रतिलभते ध्यानं आरूप्यं वा । कामवैराग्यात प्रथमं शुद्धकं प्रतिलभते त्रिप्रकारं, अन्यत्र निर्वेधभागीयात् (  : १७)। एवं यावद् आकिंचन्यायतन वैराग्यात् भवाग्रं प्रतिलभते ।"

**[ अनास्रवं विरागेण ];**

वैराग्यात् तद्विरहितोऽपि आर्य ऊर्ध्वभूमिकं अनास्रवं ध्यानं लभते।

**[ क्लिष्टं हान्युपपत्तितः ] ॥१४॥**

वैराग्याच्च्युतः, तद्भूमिकं क्लिष्टं ध्यानं लभते। ऊर्ध्वभूमितो मृत्वाऽधो भूमौ जातोऽपि जातभूमिकं क्लिष्टं ध्यानं लभते।

**( अनास्रवाद् आ तृतीयभूमेरूर्ध्वं च वाऽधरम्।**
**जातं शुभं );**

शुभं शुद्धं अनास्रवं च ध्यानम्।

शुद्ध-ध्यानाद् यावत् तृतीयात् ऊर्ध्वाऽधरभूमिकं शुद्धं अनास्रवं च ध्यानमुत्पद्यते।

**तथा शुद्धात् क्लिष्टं चापि स्वभूमिकम् ॥१५॥**

शुद्धाद् ध्यानात् तथैव स्वभूमिकं क्लिष्टं जायते; अनास्रवाद् ध्यानात्तु न क्लिष्टम्।

**क्लिष्टात् स्वं शुद्धकं क्लिष्टं;**

क्लिष्टात् ध्यानात् तद्भूमिकं क्लिष्टं शुद्धं वा ध्यानं जायते।

**[ एकं चाधरशुद्धकम् ]।**

ऊर्ध्व-भूमिक-क्लिष्टाद् ध्यानात् (=द्वितीयात्) तदधरभूमिकं (प्रथमध्यानं) शुद्धकं ध्यानं जायते।

**[ मृत्योः शुद्धात् क्लिष्टं सर्वभूमिकं ];**

मृत्योरनन्तरं उत्पत्तितः शुद्धं ध्यानं जायते, ततश्च सर्वभूमिकं क्लिष्टं चित्तम्।

**[ क्लिष्टान्नोर्ध्वगम् ] ॥१५॥**

क्लिष्टात् तद्भूमिकं तदधरभूमिकं वा क्लिष्टं जायते, नोर्ध्वभूमिकम्।

**[ हान भागीयादि शुद्धं चतुर्धा ];**

शुद्धंध्यानं चतुर्विधम्।—हानभागीयं, स्थितिभागीयं, विशेष भागीयं, निर्वेधभागीयं च। नैवसंज्ञानासंज्ञायतन शुद्धकस्य विशेष भागीय वर्जितं त्रयं, ऊर्ध्वभूम्यभावात् न तत्।

( तद्यथा क्रमम् ।

क्लेशोत्पत्ति-स्वभूम्यू-र्ध्वभूम्य-नास्रवानुकूलम् ) ॥१७॥

क्लेशोत्पत्त्यनुकूलं शुद्धकं हानभागीयमुच्यते । स्वभूम्युद्भावकं (=अनुकूलं) स्थितिभागीयम् । ऊर्ध्वभूम्युद्भावकं विशेषभागीयम् । अनास्रवोद्भावकं निर्वेधभागीयम् ।

( हानभागीयेत्यादिभ्यो द्वयं त्रयं त्रयं एकम् ) ।

हानभागीयाद् द्वयं हानभागीयं स्थितिभागीयं च ।
स्थितिभागीयात् त्रयं — निर्वेधभागीयमन्तरेण ।
विशेषभागीयात् त्रयं — हानभागीयमन्तरेण ।
निर्वेधभागीयाद् एकं निर्वेधभागीयम् ।

( द्विधा संगम्याऽष्टभूमिकार्थयोरासन्नक्रमे ) ॥१८॥

व्युत्क्रान्तक-समापत्तिर्विसभाग तृतीयगा ।

द्वयोरर्थयोः अनुलोम-प्रतिलोमयोः । ऊर्ध्वं क्रमेण गमनं अनुलोमम् । अधर क्रमेण गमनं प्रतिलोमं, यथा ऊर्ध्व-भूमिक ध्यानतो ऽधर-भूमिकध्यानगमनम् ।

द्विधा = अनास्रवध्यानं सास्रवध्यानं-च [ शुद्धकं ध्यानं हि न क्लिष्टम् ] । अष्टौ भूमिकाः चत्वारिध्यानानि चत्वार आरूप्याः । आसन्न-क्रमः = समीपात्समीपे ।

प्रयोगश्चतुर्विधः — १ अष्टसास्रवध्यानाऽभ्यासोऽनुलोम-प्रतिलोम-क्रमेणः २. तत्समाप्तौ सप्तानास्रवध्यानान्यप्यनुलोम-प्रतिलोम-क्रमेण; ३ ततो ध्यानापत्ताल-जयार्थं प्रथम सास्रव-ध्यानात् तज्जातीये तृतीय ध्याने प्रवेशः, तत आकाशानन्त्यायतने, तत आकिंचन्यायतने; पुनस्ततः प्रत्यवरोहः; ४. एतत्समाप्तौ पुनरनास्रवध्यानेऽपि तथैवाभ्यासः । एवं आरोह प्रत्यवरोह-पूर्णत गते व्युत्क्रान्तक-समापत्तिः पूर्णतां गच्छति ।

[ स्वाधोभूम्याश्रया ध्यानाऽऽरूप्याः ]

स्वभूमिकाः स्वाधोभूमिकाश्च सत्वाः चतुर्णां ध्यानानां आरूप्याणां च आश्रयः । ऊर्ध्व-भूमिक-सत्वोऽधोभूमिक-ध्यानं न साक्षात्करोति ।

(अधरं निष्फलम्) ॥१९॥

अधरं ध्यानं ऊर्ध्वभूमिकसत्वस्य कृते निष्फलं, निहीनभावात्।

**आर्याकिंचन्यसांमुख्याद् भवाग्रे त्वास्रवक्षयः।**

भवाग्रे अनास्रव( = आर्य )स्याकिंचन्यध्यानस्याभ्यासाद् भवाग्रसंबंधिनां आस्रवाणां क्षयो जायते।

**[ सतृष्णं स्वभवालम्बं ];**

तृष्णोत्तरं ध्यानं ( ८ : ६ ) स्वभवं विषयीकरोति, न ततोऽधरभूमिकं नोर्ध्वभूमिकं, पूर्वत्र विगत-तृष्णत्वाद् उत्तरत्र तृष्णाऽविषयत्वात्।

**ध्यानं सद्विषयं शुभम् ॥२०॥**

शुद्धक( = अनास्रव )-ध्यानं सर्वान् संस्कृतानसंस्कृतान् धर्मान् विषयीकरोति।

**न मौलाः कुशलाऽऽरूप्याः सास्रवाऽधरगोचराः।**

मौलाः कुशला आरूप्या न अधरभूमिकान् सास्रवान् धर्मान् विषयीकुर्वन्ति।

**क्लेशा हेया अनास्रवात्);**

सर्वैरनास्रवैर्ध्यानैः क्लेशाः प्रहीयन्ते।

**(सामन्तकाच्चतच्छुभात्) ॥२१॥**

सामन्तकात्, अनास्रवाऽऽरूप्याच्च क्लेशाः प्रहीयन्तेऽधोभूमिक प्रतिपक्षत्वात्—"कामावचरा हि क्लेशाः प्रथमध्यान सामन्तके न प्रहीयन्ते। प्रथम भूमिका द्वितीयध्यान-सामन्तके। एवं यावदाकिंचन्यायतन-भूमिका नैवसंज्ञानासंज्ञायतनसामन्तके न।"

**[ तेषु सामन्तका अष्टौ ];**

एकैकस्मिन् मौलध्यान एकैकः सामन्तकः। (मौलध्यानानि अष्टौ प्रथम द्वितीय-तृतीय-चतुर्थध्यानानि, आरूप्याः चत्वारश्च)। सामन्तको हि ध्यानस्य पूर्वांगभूतः, तद्द्वारैव तस्मिन् मौलध्याने प्रवेशः। प्रथमध्यान सामन्तकं पूरयित्वा ततः प्रथमध्याने प्रवेशः। सामन्तकाः स्वमौलध्यानक्रमेण त्रिविधाः क्लिष्टाः शुद्धा अनास्रवा भवितुमर्हन्ति। मौलक्रमेणैव प्रथम-द्वितीय-सामन्तकौ प्रीतिसंप्रयुक्तौ, तृतीयः सुखेन, चतुर्थ उपेक्षया।

**( शुद्धका उपेक्षाविदः ) ।**

शुद्धकाः सामन्तकाः केवलं उपेक्षावेदनावन्तः ।

**( आद्य आर्योऽपि च );**

प्रथमः सामन्तको ऽनागम्याभिधः । अयं द्विविधः शुद्धक आर्यः (=अनास्रवः) च ।

**( त्रिधा तु );**

केचन आचार्या त्रिधाऽपि कथयन्ति, अनागम्य-सामंतकं आस्वाद (= तृष्णा)-सम्बन्धेन ।

**अतर्कं ध्यानमन्तरम् ॥२२॥**

ध्यानान्तरं वितर्करहितं भवति । प्रथमं ध्यानं प्रथमः सामन्तकश्च वितर्क-विचारान्विते । सततु उपरितनेषु (द्वितीय-तृतीय चतुर्थ-ध्यानाऽऽरूप्य-त्रयेषु ) स-सामन्तकेषु वितर्क-विचारयोरभावः । ध्यानान्तरं केवलं सविचारं वितर्करहितम् । अत एव अयं प्रथमध्यानादुपरि द्वितीयाच्चाधः, तेन च ध्यानान्तरमिति संज्ञा ।

**( त्रिविधानां उपेक्षावित् ) ;**

त्रिविधं ध्यानान्तरं उपेक्षा-वेदनासहितं, यत इदं उपेक्षेन्द्रिय-( ४ : ४८ ) सम्प्रयुक्तम् ।

**( महाब्रह्मत्वं तत्फलम् ) ।**

ध्यानान्तराभ्यास-परिपूर्णतावशाद् ब्रह्मपदं लभ्यते ।

**( तावत् सवितर्कविचाराः तत उभय विना) ॥२३॥**

सवितर्क-सविचारा समाधिः (= प्रथमध्यानं ) ध्यानान्तराद् अधरं, ध्यानान्तरादुपरि तु वितर्क-विचार रहिता समाधिः ( द्वितीयं ध्यानम् ) ।

**[ आनिमित्तः शमाकारः ];**

सूत्रे त्रिविधाः समाधयः श्रूयन्ते—शून्यता-समाधिः, आनिमित्त-समाधिः, अप्रणिहित-समाधिश्च । आनिमित्तसमाधिः शमाकारा भवति, निरोधसत्याकार-संप्रयुक्तत्वात् । दशहेतुभिर्विनिर्मुक्तत्वात् निर्वाणं (= निरोधः ) अनिमित्तमुच्यते । दश हेतवः—पंच रूपाद्या-

यतनानि + स्त्री-पुरुषौ + त्रीणि संस्कृत-लक्षणानि ( २ : ४५ ) जाति-क्षणिकस्थिति-निरोधाः ।

[ शून्यताऽनात्मशून्यतः ।

प्रवर्तते ];

शून्या-ऽनात्मत्वसंप्रयुक्ता समाधिः शून्यता समाधिः ।

अप्रणिहितस्तदन्यसत्याकारवान् ॥२४॥

शून्यानात्मभिन्नं अनित्यं, दुःखं ( दुःखसत्य-प्रथमाकारद्वयं ), उद्वेजकं समुदयाकार-चतुष्टयं, मार्गस्याकार चतुष्टयं चेति दशाकार सम्प्रयुक्ता समाधिरप्रणिहितेत्युच्यते, प्रणिधान विनिर्मुक्तत्वात् ।

[ शुद्धका अमलाश्चैते ];

तिस्रोपीमाः समाधयो द्विविधाः—शुद्धका अनास्रवाः च । तत्र लौकिकाः शुद्धाः, लोकोत्तरा अनास्रवाः ।

( अमला मोक्षमुखं त्रिधा ) ।

अनास्रवा इमाः समाधयो विमोक्षमुखं उच्यते, विमोक्ष ( = निर्वाण )-द्वारभूतत्वात् । तानि च त्रिविधानि—शून्यताविमोक्ष-मुखं, आनिमित्त-विमोक्षमुखं, अप्रणिहित-विमोक्षमुखम् ।

[ शून्यताशून्यतेत्याद्यन्यत् समाधित्रयं पुनः ] ॥२५॥

शून्यताशून्यता-समाधिः, अप्रणिहिताप्रणिहित-समाधिः, अनि-मित्ता निमित्त-समाधिः, शून्या-प्रणिहिता-निमित्तविषयत्वात् ।

[ द्वयं आलम्बतेऽशैक्षं ] शून्यतश्चाप्यनित्यतः ।

आद्यद्वयं अशैक्षसमाधी अवलम्ब्य शून्या-ऽनित्यत्वेन प्रवर्तते ।

तत्र प्रथमा समाधिः अशैक्षस्य ( = अर्हतः ) शून्यतासमाधिः शून्यतो विषयीकरोति, द्वितीया च अशैक्षस्य अनित्यतोऽप्रणिहित समाधिम् ।

[ अनिमित्तानिमित्तस्तु शान्ततो ] ऽसंख्यया क्षयम् ॥२६॥

आनिमित्तानिमित्त-समाधेः विषयः अप्रतिसंख्या निरोधः, स च शान्ततो भाव्यते । असंख्ययाक्षयः = अप्रति-संख्या-निरोधः ।

